सोन्माद सज्वर कुष्ठी, सपाम शूलपीडित । निलय सर्वरोगाणा, वेदनावेगविह्वल ॥२६॥
शीतोष्णदंशमशकक्षुत्पिपासाद्युपद्रवै । बाध्यमानो महाघोरनारकोपमवेदन ॥२७॥
कृपास्पद सता दृष्टो, हास्यस्थान स मानिनाम् । बालाना क्रीडनावासो, दृष्टान्त पापकर्मणाम् ॥२८॥
अन्येऽपि बहव सन्ति, रोरास्तत्र महापुरे । केवल तादृश प्रायो, नास्ति निर्भाग्यशेखर ॥२९॥
तस्य तस्य गृहे लप्स्ये, भिक्षामित्यादि चिन्तयन् । ध्यानमापूरयन् रौद्र, विकल्पाकुलमानस ॥130॥
स किञ्चिन्नैव लभते, केवल परिताम्यति । कदन्नलेशमात्र तु, राज्यवत्प्राप्य तुष्यति ॥३१॥
अवज्ञया जनैर्दत्त, भुञ्जानस्तत् कदन्नकम् । शक्रादपि बिभेत्युच्चैरयमेतद् ग्रहीष्यति ॥३२॥
तृप्तिस्तेनापि नैवास्य, बुभुक्षा वर्द्धते परम् । जीर्यत्तत्पीडयत्येन, कृत्वा वातविसूचिकाम् ॥३३॥
अन्यच्च सर्वरोगाणा, निदान तदुदाहृतम् । तदेव पूर्वरोगाणामभिवृद्धिकर परम् ॥३४॥
स च तन्मन्यते चारु, वराको नान्यदीक्षते । सुस्वादुभोजनास्वादो, न स्वप्नेऽप्यस्य गोचर ॥३५॥
उच्चावचेषु गेहेषु, नानाकारासु वीथिषु । बहुशस्तत्पुर तेन, भ्रान्तमश्रान्तचेतसा ॥३६॥
एव पर्यटतस्तस्य, महापापहतात्मन । न ज्ञायते कियान् कालो, दु खग्रस्तस्य लङ्घित ॥३७॥

### द्वारप्राप्ति

अथ तत्र पुरे राजा, सुस्थितो नाम विश्रुत । समस्तसत्त्वसङ्घस्य, स्वभावादतिवत्सल ॥३८॥
अटाट्यमानोऽसौ रङ्क, सप्राप्तस्तस्य मन्दिरम् । स्वकर्मविवरो नाम, तत्राऽऽस्ते द्वारपालक ॥३९॥
स द्वारपालस्त रोर, दृष्ट्वाऽतिकरुणास्पदम् । प्रावेशयत्कृपालुत्वादपूर्वं राज्यमन्दिरम् ॥140॥

### राज्यमन्दिरवर्णनम्

**तच्च कीदृशम्**—रत्नराशिप्रभाजालैस्तमोबाधाविवर्जितम् । रसनानूपुरद्युतथभूषणारावसुन्दरम् ॥४१॥
देवपट्टाशुकोल्लोचलोलमौक्तिकमालिकम् । ताम्बूललालिताशेषलोकवक्त्रमनोहरम् ॥४२॥
विचित्रभक्तिविन्यासैर्गन्धोद्धुरसुवर्णकै । आकीर्णं प्राङ्गण माल्यै, कलालिकुलगीतिभि ॥४३॥
विलेपनविमर्देन, कर्दमीकृतभूमिकम् । प्रहृष्टसत्त्वसदोहवादितानन्दमर्दलम् ॥४४॥
अन्तर्ज्वलन्महातेज प्रलयीभूतशत्रुभि । बहि प्रशान्तव्यापारै, राजवृन्दैरधिष्ठितम् ॥४५॥
साक्षाद्भूतजगच्चेष्टै, प्रज्ञाऽवज्ञातवैरिकै । समस्तनीतिशास्त्रज्ञैर्मन्त्रिभि परिपूरितम् ॥४६॥
पुर [1]परेतभर्त्तार, येऽभिवीक्ष्य रणाङ्गणे । न क्षुभ्यन्ति महायोधास्तैरसङ्ख्यैर्निषेवितम् ॥४७॥
कोटीकोटी पुराणा ये, पालयन्ति निराकुला । ग्रामाकरानसख्याश्च, व्याप्त तादृग्नियुक्तकै ॥४८॥
येऽत्यन्तवत्सला भर्त्तुर्गाढ विक्रमशालिन । आकीर्ण तादृशैरन्तर्भूरिभिस्तलवर्गिकै ॥४९॥
प्रमत्तप्रमदालोकनिवारणपरायणै । निवृत्तविषयासङ्गै, राजते स्थविराजनै ॥150॥
अनेकभटसघातैराकीर्णं तत्समन्तत । लसद्विलासिनीसार्थैर्निर्जितामरधामकम् ॥५१॥
कलकण्ठै प्रयोगज्ञैर्गायद्भिर्गायनै परै । वीणावेणुरवोन्मिश्रै, श्रोत्रानन्दविधायकम् ॥५२॥
विचित्रचित्रविन्यासैश्चित्ताक्षेपविधायिभि । सद्रूपैरतिसौन्दर्यान्निश्चलीकृतलोचनम् ॥५३॥
चन्दनागरुकर्पूरमृगनाभिपुर सरै । अतिगन्धोद्धूरैर्द्रव्यैर्घ्राणमोदनकारणम् ॥५४॥
कोमलाशुकतूल्यादिललनालोकयोगत । स्पर्शप्रमुदिताशेषतद्योग्यजनवृन्दकम् ॥५५॥
मन प्रीतिसमुत्पादकारणै रसनोत्सवै । स्वस्थीभूताखिलप्राणिसघात भोजनै परम् [परै मु] [षोडशभि कुलकम्] ॥५६॥

### रङ्कस्य शुभसकल्प

समस्तेन्द्रियनिर्वाणकारण वीक्ष्य तत्त्वत । स रङ्कश्चिन्तयत्येव, किमेतदिति विस्मित ॥५७॥
सोन्मादत्वान्न जानाति, विशेष तस्य तत्त्वत । तथापि हृदयाकूते[2], स्फुरित लब्धचेतस ॥५८॥

---

1 परेतभर्त्ता = यम । 2 आकूत = अभिप्राय ।

यदिद दृश्यते राजभवन सततोत्सवम् । [1]द्वारपालप्रसादेन, मया दृष्टमपूर्वकम् मु ॥५९॥
अह हि वहुश पूर्वमस्य द्वारि परिभ्रमन् । द्वारपालैर्महापापै, प्राप्त प्राप्तो निराकृत ॥160॥
सत्य निष्पुण्यकोऽस्मीति, येनेद देवदुर्लभम् । न दृष्ट प्राग्न चोपायो, दर्शनार्थं मया कृत ॥६१॥
कदाचिन्नैव मे पूर्वं, मोहोपहतचेतस । जिज्ञासामात्रमप्यासीत्, कीदृश राजमन्दिरम् ॥६२॥
निर्भाग्यस्यापि कृपया, चित्ताह्लादविधायकम् । अय मे परमो वन्धुर्येनेद दर्शित मम ॥६३॥
एते धन्यतमा लोका, सर्वद्वन्द्वविवर्जिता । प्रहृष्टचित्ता मोदन्ते, सतत येऽत्र मन्दिरे ॥६४॥
यावत्स चिन्तयत्येव, द्रमको लव्धचेतन । तावद्यत्तत्र संपन्न, तदिदानी निवोधत ॥६५॥

## राजेन्द्रदृष्टिपात

प्रासादशिखरे रम्ये सप्तमे भूमिकातले । तत्राऽऽस्ते लीलयाऽऽसीन, स राजा परमेश्वर ॥६६॥
अधरताद्वर्ति तत्सर्वं, नानाव्यापारमञ्जसा । नगरं सततानन्द, समन्तादवलोकयन् युग्मम् ॥६७॥
न किञ्चिन्नगरे तत्र, वहिश्च खलु वर्त्तते । वस्तु यन्न भवेद् दृष्टेर्गोचरस्तस्य पश्यत ॥६८॥
अत प्रविष्ट त रोर, गाढ [ढमु] वीभत्सदर्शनम् । महारोगभराक्रान्त, शिष्टाना करुणास्पदम् ॥६९॥
कारुण्यादिव राजेन्द्र, स महात्माऽमलेक्षण । स्वदृष्टिवृष्टिपातेन, पूतपापमिवाकरोत् ॥170॥
धर्मवोधकरो नाम, महानसनियुक्तक । स राजदृष्टि ता तत्र, पतन्तीं निरवर्णयत् ॥७१॥
अथासो चिन्तयत्येव, तदा साकूतमानस । किमेतदद्भुत नाम, साम्प्रत दृश्यते मया ॥७२॥
*यस्य[2] दृष्टि विशेषेण, ददाति परमेश्वर । तूर्णं त्रिभुवनस्यापि, स राजा जायते नर* ॥७३॥
अय तु द्रमको दीनो, रोगग्रस्तशरीरक । अलक्ष्मीभाजन मूढो, जगदुद्वेगकारणम् ॥७४॥
आलोच्यमानोऽपि कथ, पौर्वापर्येण युज्यते । तदस्योपरि पातोऽय, स(स्व)दृष्टे पारमेश्वर ? ॥७५॥
हु[3] ज्ञातमेष एवात्र, हेतुरस्य निरीक्षणे । स्वकर्मविवरेणात्र, यस्मादेष प्रवेशित ॥७६॥
स्वकर्मविवरश्चाय, नापरीक्षितकारक । तेनाय राजराजेन, सम्यग्दृष्ट्या विलोकित ॥७७॥
अन्यच्च पक्षपातोऽत्र, भवने यस्य जायते । परमेश्वरपादाना, स प्रियत्व प्रपद्यते ॥७८॥
अय च नेत्ररोगेण, नितरा परिपीडित । [4]एतद्दिदृक्षयाऽत्यर्थमुन्मिपत्येव लोचने ॥७९॥
दर्शनादस्य सहसा, गाढ वीभत्सदर्शनम्' । प्रमोदाद् वदन मन्ये, लभते दर्शनीयताम् ॥180॥
रोमाञ्चयति चाङ्गानि, धूलीधूसरितान्ययम् । ततोऽनुरागो जातोऽस्य, भवने तेन वीक्ष्यते ॥८१॥
ततोऽय [तदय मु] द्रमकाकार, विभ्राणोऽप्यधुना स्फुटम् । राजावलोकनादेव, वस्तुत्व प्रतिपत्स्यते ॥८२॥
इत्याकलय्य तस्यासौ[5], करुणाप्रवणोऽभवत् । सत्य तत् श्रूयते लोके, *यथा राजा तथा प्रजा* ॥८३॥

## रकभिक्षादानप्रयत्न

अथादरवशात्तूर्णं, तस्य मूलमुपागमत् । एह्येहि दीयते तुभ्यमित्येव तमवोचत ॥८४॥
कदर्थनार्थमायाता पश्चाल्लग्ना सुदारुणा । दुर्दान्तडिम्भा ये तस्य, दृष्ट्वा त ते पलायिता ॥८५॥
भिक्षाचरोचिते देशे, स त नीत्वा प्रयत्नत । धर्मवोधकरस्तस्मै, दानाय जनमादिशत् ॥८६॥
अथास्ति तद्दया नाम, दुहिता तस्य[6] सुन्दरा । सा तद्वचनमाकर्ण्य, सभ्रमेण समुत्थिता ॥८७॥
समस्तगदनिर्णाशि, वर्णोज पुष्टिवर्द्धनम् । सुगन्धि सुरस स्निग्ध, देवानामपि [देवैरप्यति मु] दुर्लभम् ॥८८॥
महाकल्याणक नाम, परमान्न मनोहरम् । सा तदादाय वेगेन, तत्समीपमुपागता युग्मम् ॥८९॥

---

1 [द्वारपालाप्रसादन, न मया दृष्टपूर्वकम् मु] 2 उपरि । 3 नहि नहि प्र ।
4 रद्ववदनविशेषणम् । 5 उपरि । 6 धर्मवोधकरस्य ।

इतश्च नीयमानोऽसौ, द्रमक पर्यचिन्तयत् । तुच्छाभिप्रायवशत, शङ्कयाऽऽकुलमानस ॥190॥

## द्रमकतुच्छकल्पना

यदय मा समाहूय, पुरुषो नयति स्वयम् । भिक्षार्थं किल नैवैतत्, सुन्दर मम भासते ॥९१॥
भिक्षाया पूरितप्रायमिद हि घटकर्परम् । तदेष विजने नीत्वा, नूनमुद्दालयिष्यति[1] ॥९२॥
तत् कि नश्यामि सहसा? भक्षयाम्युपविश्य वा? । न कार्यं भिक्षयेत्युक्त्वा, यद्वा गच्छामि सत्वरम् ॥९३॥
इत्यनेकविकल्पैश्च, भय तस्य विवर्द्धते । तद्वशान्नैव जानीते, क्वाह यात[2] क्व च स्थित[3] ॥९४॥
गाढमूर्च्छाभिभूतत्वात्सरक्षणनिमित्तकम् । रौद्रध्यान समापूर्य, मीलिते तेन लोचने ॥९५॥
समस्तेन्द्रियवृत्तीना, व्यापारोपरते क्षणात् । नासौ चेतयते किञ्चित्, काष्ठवन्नष्टचेतन ॥९६॥
गृहाणेति च जल्पन्ती, भूयो भूय समाकुलाम् । ततोऽसौ द्रमकोऽपुण्यो, न जानात्येव कन्यकाम् ॥९७॥
सर्वरोगकर तुच्छ, कदन्न न भविष्यति[4] । इति ध्यानेन नष्टात्मा, ता[5] सुधा नाववुध्यते ॥९८॥

## महानसनियुक्तकविचारणा

प्रत्यक्ष तमसभाव्य, वृत्तान्त वीक्ष्य विस्मित । स तदा चिन्तयत्येव, महानसनियुक्तक ॥९९॥
किमेष द्रमकश्चारु, दीयमानमपि स्फुटम् । परमान्न न गृह्णाति? ददात्यपि च नोत्तरम् ॥200॥
विद्राणवदनोऽत्यन्त, निमीलितविलोचन । ह [ह मु] तसर्वस्ववन्मोहाद्, सजात काष्ठकीलवत् ॥१॥
तदय नोचितो मन्ये, परमान्नस्य पापभाक् । यद्वा नास्य वराकस्य, दोषोऽयमुपलभ्यते ॥२॥
अय हि रोगजालेन, बहिरन्तश्च वेष्टित । वेदनाविह्वलो मन्ये, न हि जानाति किञ्चन ॥३॥
अन्यथा कथमेतत्स्यात्, कदन्नलवलम्पट । अमृतास्वादमप्येप, न गृह्णीयात्सचेतन ? ॥४॥
तदय निर्गदो हन्त, केनोपायेन जायते? । आ ज्ञातं विद्यते चारु, ममैतद् [मम तद् मु]भेषजत्रयम् ॥५॥
यत्तावद्विमलालोक, नाम मे परमाञ्जनम् । समस्तनेत्ररोगाणा, तद [स्याद मु]पाकरणक्षमम् ॥६॥
सूक्ष्मव्यवहितातीतभाविभावविलोकने । परम कारण मन्ये, प्रयुक्त तद्विधानत ॥७॥
तत्त्वप्रीतिकर नाम, यच्च तीर्थोदक परम् । विद्यते मम तत्सर्वरोगतानवकारणम् ॥८॥
विशेषात्पुनरुन्मादसूदन तदुदाहृतम् । दृढ च पटुदृष्टित्वे, कारण वर्णित बुधै ॥९॥
महाकल्याणक नाम, यच्चैतदुपढौकितम् । परमान्नमिद सर्वगदनिर्मूलनक्षमम् ॥210॥
प्रयुज्यमान विधिना, वर्णं पुष्टिं धृति[1] बलम् । मन प्रसादमौर्जित्य, वय स्तम्भ सवीर्यताम् ॥११॥
तथाऽजरामरत्व च, कुर्यादेतन्न सशय । नात परतर मन्ये, लोकेऽपि *परमौषधम्* ॥१२॥
तदेनममुना सम्यक्, त्रयेणापि तपस्विनम् । व्याधिभ्यो मोचयामीति, चित्ते तेनावधारितम् ॥१३॥

## विमलालोकप्रयोग

तत शलाकामादाय, विन्यस्याग्रे तदञ्जनम् । तस्य धूनयतो ग्रीवामञ्जिते तेन लोचने ॥१४॥
प्रह्लादकत्वाच्छीतत्वादचिन्त्यगुणयोगत । तदनन्तरमेवास्य, चेतना पुनरागता ॥१५॥
क्षणादुन्मीलित चक्षुर्विनष्टा इव तद्रुदा । मनागाह्लादितश्चित्ते, किमेतदिति मन्यते ॥१६॥
तथापि च तदाकूत, भिक्षारक्षणलक्षणम् । पूर्वविधवशान्नैव, सम्यगस्य निवर्त्तते ॥१७॥
विजन वर्त्तते हन्त, लास्यत्येना व्यचिन्तयत् । [न मु] नष्टुकामो दिगन्तेषु, दृष्टि धत्ते पुन पुन ॥१८॥

## पय पानजनितगुण

अथाञ्जनवशाद् दृष्ट्वा, पुर सजातचेतनम् । त रोर मधुरैर्वाक्यैर्धर्मबोधकरोऽब्रवीत् ॥१९॥
पिबेदमुदक भद्र! तापोपशमकारणम् । येन ते स्वस्थता सम्यक्, शरीरस्योपजायते ॥220॥
स तु शङ्काऽऽकुलाऽऽकूत, किमनेन भविष्यति । न जाने इति मूढात्मा, नोदक पातुमिच्छति ॥२१॥

---

1 ग्रहीष्यति नाशयिष्यतीति वा । 2 नीत प्र । 3 इतीति शेष । 4 पुनर्मे इति शेष । 5 भिक्षा तदयया वितीर्यमाणाम् ।

कृपापरीतचित्तेन, हितत्वात्तदनिच्छत । वलाद्विवृत्य वदन, सलिल तस्य गालितम्[1] ॥२२॥
तच्छीतममृतास्वाद, चित्ताह्लादकर परम् । नीरमीरितसताप[2], पीत्वा स्वस्थ इवाभवत् ॥२३॥
नष्टप्रायमहोन्मादो, जातान्यगदतानव । क्षणाद्विगतदाहार्त्तिस्ततोऽसौ समपद्यत ॥२४॥
सुप्रसन्नेन्द्रियग्राम , स्वस्थेनैवान्तरात्मना । सोऽचिन्तयदिद चित्ते, किञ्चिद्विमलचेतन[3] ॥२५॥
महामोहहतेनाहो, नरोऽय[4]मतिवत्सल । मया महात्मा पापेन, वञ्चकत्वेन कल्पित ॥२६॥
ममाञ्जनप्रयोगेण, विहिता पटुदृष्टिता । अनेन तोयपानेन, जनिता स्वस्थता परा ॥२७॥
तस्मान्महोपकारीति, किमस्योपकृत मया? । महानुभावता मुक्त्वा, नान्यदस्य प्रवर्त्तकम् ॥२८॥

### कदन्नमूर्च्छा

एव चिन्तयतोऽप्यस्य, मूर्च्छा तत्र कदन्नके । गाढ भावितचित्तत्वान्न कथञ्चिन्निवर्त्तते ॥२९॥
अथ तद्भोजने दृष्टि, पातयन्त मुहुर्मुहु । विदित्वा तदभिप्रायमितरस्तमभाषत ॥230॥
अरे द्रमक! दुर्बुद्धे! किमिद नाववुध्यसे? । यदेषा कन्यका तुभ्य, परमान्न प्रयच्छति ॥३१॥
भवन्ति रोरा प्रायेण, वहवोऽन्येऽपि पापिन । त्वत्समो नास्ति निर्भाग्यो, मयैतत्परिनिश्चितम् ॥३२॥
यस्त्व कदन्नलाम्पट्यात्सुधाऽऽकारमिद मया । दाप्यमान न गृह्णासि, परमान्नमनाकुल ॥३३॥
अन्येऽस्मात्सद्मनो बाह्या , सत्त्वास्तिष्ठन्ति दु खिता । तेषु नेवादरोऽस्माक, न ते राज्ञाऽवलोकिता[5] ॥३४॥
यतस्त्व भवन दृष्ट्वा, मनागाह्लादितो हृदि । तवोपरि नरेन्द्रस्य, दयाऽतोऽस्तीति गम्यते ॥३५॥
*प्रिये प्रिय सदा कुर्यु, स्वामिन सेवका* इति[6] । यो न्यायस्तद्विधानार्थं, वय त्वयि दयालव ॥३६॥
अमूढलक्ष्यो राजाऽय, नापात्रे कुरुते मतिम् । अवष्टम्भ[7] किलास्माक, स त्वया वितथीकृत ॥३७॥
इद हि मधुरास्वाद, सर्वव्याधिनिवर्हणम्[8] । नादत्से त्व कथ तुच्छे, कदन्ने वद्धमानस ? ॥३८॥
अतस्त्यजेद दुर्बुद्धे! गृहाणेद विशेषत । यत्प्रभावादिमे पश्य, मोदन्ते सद्मजन्तव ॥३९॥
तत सजातविश्वासस्तथाऽऽविर्भूतनिर्णय । तत्त्यागवचनाद्दीनस्त प्रतीदमवोचत ॥240॥
यदेतद् गदित नाथैस्तत्सत्य मम भासते । किन्तु विज्ञपयाम्येक, वचन तन्निबोधत ॥४१॥
यदिद भोजन नाथ! वर्त्तते कर्परोदरे । प्राणेभ्योऽपि विशेषेण, स्वभावादतिवल्लभम् ॥४२॥
उपार्जित च क्लेशेन, काले[9] निर्वाहक तथा । इद तु तावक[10] नाह, जानामि ननु[11] कीदृशम्[12] ॥४३॥
तदिद नैव मोक्तव्य, मया स्वामिन्! कथञ्चन । यदि देय सहानेन, दापय स्व च भोजनम् ॥४४॥
इतरस्तु[13] तदाकर्ण्य, मनसा पर्यचिन्तयत् । पश्यताचिन्त्यसामर्थ्यं, महामोहविजृम्भितम् ॥४५॥
यदय द्रमको मोहात्सर्वव्याधिकरे रत । अस्मिन् कदन्नके नैतत्तृणाय[14] मम मन्यते ॥४६॥
तथापि किञ्चिद् भूयोऽपि, शिक्षयामि तपस्विनम् । यदि मोहो विलीयेत, स्यादस्मै हितमुत्तमम् ॥४७॥
इत्याकलय्य तेनोक्त, भद्र! कि नावगच्छसि? । एतन्निमित्तका सर्वे, रोगास्तव शरीरके ॥४८॥
एतद्धि भक्षित सर्वे[15], सर्वदोषप्रकोपनम् । जायते नितरा तेन, त्यक्तव्य शुद्धवुद्धिभि ॥४९॥
तवापि भासते भद्र! विपर्यासादिद हृदि । यदि स्वाद पुनर्वेत्सि, मामकान्नस्य तत्त्वत ॥250॥
ततस्त्व वार्यमाणोऽपि, त्यजस्येवेदमात्मना । को नामामृतमास्वाद्य[16], विषमापातुमिच्छति? युग्मम् ॥५१॥
अन्यच्चाञ्जनसामर्थ्यं, माहात्म्य सलिलस्य च । कि न दृष्ट त्वया? येन, मद्वचो नानुतिष्ठसि ॥५२॥

---

1 पायिनम् ।
2 नाशितसन्तापम् ।
3 लोचन प्र ।
4 महानसनियुक्त ।
5 यत इति शेष ।
6 स्वामिन प्रिये सेवका सदा शिव कुर्युरिति ।
7 इत्येव रूपो या विश्वास ।
8 नाशकम् ।
9 आपत्तौ ।
10 परमान्नम् ।
11 मम प्र ।
12 हितकर वा नवेति ।
13 महानसनियुक्त ।
14 परमान्न चैतत् प्र ।
15 येन केनापीति ।
16 मासाद्य ।

यच्चोक्तमर्जित क्लेशादिद मुञ्चामि नो तत । तत्रापि श्रूयता सौम्य! मोह हित्वा त्वयाऽधुना ॥५३॥
येनैवोपार्जितं क्लेशात्, क्लेशरूप च वर्त्तते । क्लेशस्य च पुनर्हेतु[1]स्तेनैवेद विमुच्यते ॥५४॥
यच्चोक्त न त्यजामीद, काले निर्वाहक यत । तत्राप्याकर्ण्यता तावत्त्यक्त्वा तत्र विपर्ययम् ॥५५॥
अनन्तदु खसतानहेतुर्निर्वाहि यद्यपि । एतद्धि कि त्वया स्थेय, दु खग्रस्तेन सर्वदा? ॥५६॥
इद तु तावक नाह, जानामि ननु कीदृशम् । यदुक्त तत्र विश्रब्धो, वक्ष्यमाण मया श्रृणु ॥५७॥
क्लेश विना सदाकाल, प्रयच्छामि[2] यथेच्छया । परमान्नमिद तुभ्य, गृहाण त्वमनाकुल ॥५८॥
समूलकाष[3] कषति, सर्वव्याधीनिद हि ते । तुष्टि पुष्टि बल वर्णं, वीर्यादीन् वर्द्धयत्यपि ॥५९॥
कि चानेनाक्षयो भूत्वा, सततानन्दपूरित । यथाऽयमास्ते राजेन्द्र स्थास्यस्येतद्बलात्तथा ॥260॥
ततो मुञ्चाग्रह भद्र! त्यजेद रोगकारणम् । गृहाणेद महानन्दकारण परमौषधम् ॥६१॥

### परमान्नभक्षणस्य प्रभाव

स प्राह त्यक्तमात्रेऽस्मिन्, म्रियेऽह स्नेहविभ्रमात् । भट्टारक! ततो देहि, सत्यस्मिन्मे[4] स्वभेषजम् ॥६२॥
ततो विज्ञाय निर्बन्धमितर पर्यकल्पयत् । नैवास्य शिक्षणोपायो, विद्यतेऽन्योऽधुना स्फुटम् ॥६३॥
ततोऽत्र[5] विद्यमानेऽपि, दीयतामिदमौषधम् । पश्चाद्विज्ञातसद्भाव , स्वयमेव विहास्यति ॥६४॥
इत्याकलय्य तेनोक्तो, गृह्यता भद्र! साम्प्रतम् । परमान्नमिद सद्यो, गृहीत्वा चोपभु(यु प्र)ज्यताम् ॥६५॥
एव भवतु तेनोक्ते, सञ्ज्ञिता तेन तद्दया । दत्त तया गृहीत्वा तत्तेन[6] तत्रैव भक्षितम् ॥६६॥
ततस्तदुपयोगेन, बुभुक्षा शान्तिमागता । नष्टा इव गदव्राता, येऽस्य सर्वाङ्गसभवा ॥६७॥
याऽसावञ्जनसपाद्या, या च सा सलिलोद्भवा । सुखासिका[7] क्षणात्तस्य, साऽनन्तगुणता गता ॥६८॥
अथ प्रादुर्भवद्भक्तिर्नष्टाशङ्क प्रमोदित । स त प्रत्याह नान्योऽस्ति, नाथो मे भवतो[8] विना ॥६९॥
यतोऽनुपकृतैरेव, भवद्भिर्भाग्यवर्जित । अह सर्वाधमोऽप्येवमेतावदनुकम्पित ॥270॥

### द्रमकायोपदेश

इतर प्राह यद्येवमुपविश्य क्षण त्वया । श्रूयता यदह वच्मि, श्रुत्वा तच्च समाचर ॥७१॥
अथोपविष्टे विश्रब्ध, तस्मिन्स प्राह चास्मिभ । मन प्रह्लादयस्तस्य, वचोभिर्हितकाम्यया ॥७२॥
यदभ्यधायि भवता, नाथोऽन्यो नास्ति मेऽधुना । तन्न वाच्य यत स्वामी, तव वर्यो (नश्च?) नृपोत्तम ॥७३॥
अय हि भगवान्नाथो, भुवनेऽपि चराचरे । विशेषत पुनर्येऽत्र, भवने सन्ति जन्तव ॥७४॥
*येऽस्य[9] किङ्करता यान्ति, नरा कल्याणभागिन । तेषामल्पेन कालेन, भुवन किङ्करायते* ॥७५॥
येऽत्यन्तपापिन सत्त्वा, ये नैव सुखभाजनम् । ते वराका नरेन्द्रस्य, नामाप्यस्य न जानते ॥७६॥
ये भाविभद्रा दृश्यन्ते, सदनेऽस्य[10] महात्मन । तेषा स्वकर्मविवरो, ददात्यत्र प्रवेशकम् ॥७७॥
वस्तुत प्रतिपद्यन्ते, तेऽमुं नास्त्यत्र सशय । विशेषाज्जानते मुग्धा , पश्चात्ते[11] कथित मया ॥७८॥
तदेष नाथस्ते भद्र! जात एव नरेश्वर । यत प्रभृति पस्त्ये[12]ऽस्मिन्[13], प्रविष्टस्त्व सु[स मु]पुण्यक ॥७९॥
केवल तु विशेषेण, मद्वचस्त[14] प्रपद्यताम् । यावज्जीवमय नाथो, भवता शुद्धचेतसा ॥280॥
विशेषत पुनर्येऽस्य, गुणास्तानवभोत्स्यसे । यथा यथा गदा देहे, यास्यन्ति तव तानवम् ॥८१॥
अय च तानवोपायोऽमीषा नाशे च कारणम् । भेषजत्रितयस्यास्य, परिभोग क्षणे क्षणे ॥८२॥

---

1 कदन्नम् । 2 सत्सामीप्ये सद्वेति वर्तमाना । 3 निर्मूल प्र । 4 कदन्नेऽस्मिन्नेव भे प्र ।
5 अस्मिन्कदन्ने । 6 परमान्नम् । 7 सुखिता । 8 युष्मान्विना ।
9 भगवत । 10 नेऽत्र प्र । 11 मुग्धा विशेषात्पश्चाज्जानते इति तुभ्य मयोक्त प्राक् ।
12 प्रासादे । 13 योऽस्त्यस्मिन् । 14 मद्वचस्तत्प्र ।

तत्सौम्य । स्थीयतामत्र, भवने मुक्तसशयम्[1] । त्वया त्रयमिद युक्त्या, भुञ्जानेन प्रतिक्षणम् ॥८३॥
ततस्त्व दलिताशेषरोगव्रातो नरेश्वरम् । विशेषत समाराध्य, भविताऽसि नृपोत्तम ॥८४॥
इय च तद्दया तुभ्य, दास्यत्येतद्दिने दिने । किमत्र वहुनोक्तेन ? भोक्तव्य भेषजत्रयम् ॥८५॥
तत प्रह्लादित स्वान्ते, वचनैरतस्य कोमले । स्वाकूतमुररीकृत्य, स एव द्रमकोऽव्रवीत् ॥८६॥

### विश्वस्तस्य तस्य स्वाशयप्रकाश

इद नाद्यापि शक्नोमि, पापस्त्यक्तु कदन्नकम् । अन्यत्तु यन्मया किञ्चित्, कर्त्तव्य तत्समादिश ॥८७॥
तत्श्रुत्वा स्फुरित चित्ते, धार्मवोधकरे तदा । भुङ्क्ष्वेद त्रयमित्युक्त , किमेव वत भापते[2] ॥८८॥
आ ज्ञातमेष तुच्छत्वादेव चिन्तयते हृदि । भोजनत्याजनार्थो मे, सर्वोऽय विस्तरो गिराम् ॥८९॥
*क्लिष्टचित्ता जगत्सर्वं, मन्यन्ते दुष्टमानसम् । शुद्धाभिसन्धय सर्व, शुद्धचित्त विजानते* ॥290॥
ततो विहस्य तेनोक्त, मा भैषीर्भद्र! किञ्चन । नाधुना त्याजयामीदमन्नमेधि निराकुल ॥९१॥
अहमत्याजय पूर्वं, तवैव हितकाम्यया । यदि नो रोचते तुभ्य तूष्णीभावोऽत्र मे मत ॥९२॥
यच्चेतदुपदिष्ट ते, प्राक् कर्त्तव्यतया मया । तदत्र भवता किञ्चिन्, कि सम्यगवधारितम् ? ॥९३॥
सोऽव्रवीन्नैव तन्नाथ । किञ्चित्सलक्षित मया । केवल पशलालापैरतावकर्मोदितो हृदि ॥९४॥
अज्ञातपरमार्थाऽपि, सता नून सरस्वती । चेतोऽतिसुन्दरत्वेन, प्रीणयत्येव देहिनम् [नाम् मु] ॥९५॥
अन्यत्र चेतसो न्यासो, नयने तव समुखे[3] । विशत्येकेन कर्णेन, वचो यातीतरेण मे ॥९६॥
यच्चात्र मनसो नाथ! वेधुर्ये मम कारणम् । तत्साम्प्रत भयापायात्,[4] कथयामि निराकुल ॥९७॥
यदा ह्याकारित पूर्वं, भवद्भि करुणापरै । अहमन्नप्रदानार्थं, तदा मे हृदि वर्त्तते ॥९८॥
लास्यत्येष क्वचिन्नीत्वा, मामक भोजन नर । तदाकूतवशाद् गाढ, ध्यात्वाऽचेतनता गत ॥९९॥
यदा प्रवोधित पश्चादञ्जनेन सुवत्सलै । भवद्भिश्चिन्तित तूर्णं, नश्यामीति तदा मया ॥300॥
यदा तु तोयपानेन, शीतीकृत्य वपुर्मम । कृत सभापण नाथैस्तदा विश्रम्भमागत ॥१॥
चिन्तित च मया योऽय, ममैवमुपकारक । स महाभूतिसपन्न , कथ स्यादन्नहारक ?, ॥२॥
विमुञ्चेद[5] गृहाणेद, यदा नाथै प्रजल्पितम् । तदा कि करवाणीति, चित्तेनाकुलता गत ॥३॥
नैष तावत्स्वय लाति, त्याजयत्येव केवलम् । त्यक्तु नेतच्च शक्नोमि, कि वदामि तदुत्तरम् ? ॥४॥
सत्यस्मिन् देहि मे भोज्यमित्युक्ते दापित त्वया । तदास्वादात्पुनर्ज्ञात, ममायमतिवत्सल[6] ॥५॥
तत् किमस्य वच कुर्वन्, मुञ्चामीद स्वभोजनम् ? । मरिष्ये ननु मुक्तेऽस्मिन्, मूर्च्छयाऽऽकुलचेतन ॥६॥
अय वक्ति हितत्वेन, शक्तोऽस्म्यस्य न मोचने । अहो व्यसनमापन्नं,[7] ममेदमतिदुस्तरम् ॥७॥
एवमाकुलचित्तस्य, यन्नाथैर्वहु भापितम् । तन्मे भृतघटस्येव,[8] लुठित्वा पार्श्वतो गतम् ॥८॥
नाधुना त्याजयामीति,[9] भवद्भिर्ज्ञातमानसै । इदानी पुनरादिष्टे, मनाग् जातो[10] निराकुल ॥९॥
तद् व्रूत साम्प्रत नाथा[11]! कर्त्तव्य पापकर्मणा । यन्मयेदृशचित्तेन, येनाहमवधारये ॥310॥
तदाकर्ण्य दयाऽऽढ्येन, यदुक्त प्राक् समासत । सविस्तरतर तस्मै, तत्पुन प्रतिपादितम् ॥११॥

### सत्त्रय्यधिकारीतरनिर्देश

ततोऽञ्जनजलान्नाना, नरेन्द्रस्य विशेषत । प्रायोऽज्ञातगुण ज्ञात्वा, त प्रतीदमभापत ॥१२॥
अह तात । नरेन्द्रेण, प्रागादिष्टो यथा त्वया । योग्येभ्य एव दातव्य, मदीय भेषजत्रयम् ॥१३॥

---

1 क्रियाविशेषणम् । 2 एप इति । 3 स्थित । 4 भयनाशात् ।
5 त्यजेद च प्र । 6 मयाऽयम प्र । 7 दुखम् । 8 वृत्तघटस्येव प्र ।
9 मीद प्र । 10 ज्ञातो प्र । 11 यूयम् प्र ।

अयोग्यदत्त नैवैतदुपकार प्रकल्पयेत् । प्रत्युतानर्थसतान, विदधाति विशेषत ॥१४॥
मया[1] पृष्ट तदा नाथ! कथ ज्ञास्यामि तानहम् । तत प्रत्युक्तवान् राजा, तेषामाख्यामि लक्षणम् ॥१५॥
ये तावदस्य नाद्यापि, रोगिणो योग्यता गता । स्वकर्मविवरस्तेषा, न गृहेऽत्र प्रवेशक ॥१६॥
सोऽप्यादिष्टो मया पूर्व, ये योग्या भेषजत्रये । प्रवेशनीयास्ते नान्ये, भवनेऽत्र त्वया नरा ॥१७॥
प्रविष्टा अपि ये दृष्ट्वा, मोदन्ते नैव मद्गृहम् । येषा न मामिका दृष्टिर्विशेषेण निरीक्षिका ॥१८॥
ते ह्यन्यद्वारपालेन, स्यु कथञ्चित्प्रवेशिता । त्वयाऽपि लिङ्गतो ज्ञात्वा, वर्जनीया प्रयत्नत [युग्मम्] ॥१९॥
ये मन्मन्दिरमालोक्य, जायन्ते हृष्टचेतना । रोगिणो भाविभद्रत्वान्निरीक्षेऽह विशेषत ॥320॥
स्वकर्मविवरानीता, ये मया च विलोकिता । ते ज्ञेयास्त्रितयस्यास्य, पात्रभूतास्त्वया नरा ॥२१॥
तेषा[2] तु निक[3]षस्थानमिदमेवौषधत्रयम् । प्रयुज्यमान स्वगुणै, सग्रहेतरकारकम्[4] ॥२२॥
येभ्योऽदो[5] रोचते चित्ते, प्रयुक्त गुणकारकम् । अक्लेशतो विशेषेण, ते सुसाध्या प्रकीर्त्तिता ॥२३॥
ये नादित प्रपद्यन्ते, बलाद्येषा विगाल्यते । कालक्षेपेण ते ज्ञेया, कृच्छ्रसाध्यास्त्वयाऽनुगा[6] ॥२४॥
येभ्यो न रोचतेऽत्यर्थ, न क्रामति नियोजितम् । द्वेष्टारो दायकेऽप्यस्य, ते त्वसाध्या नराधमा ॥२५॥
तदेतद्राजराजेन, मम यत्सम्प्रदायितम्[7] । तेन ते कृच्छ्रसाध्यत्व, लक्षणेन विभाव्यते ॥२६॥
अन्यच्च ये प्रपद्यन्ते, भावतोऽमु नरेश्वरम् । यावज्जीव विशेषेण, नाथ नि शङ्कमानसा ॥२७॥
अचिन्त्यवीर्यसपूर्णा, नि शेषगदबर्हिणी[8] । तेषामेव गुण धत्ते, मदीया भेषजक्रिया [युग्मम्] ॥२८॥
अतस्त्व प्रतिपद्यस्व, नाथत्वेन नृपोत्तमम् । भावसार महात्मानो, भक्तिग्राह्या यत स्मृता ॥२९॥
अनन्तास्तात! रोगार्त्ता, भक्तितोऽमु नृपोत्तमम् । प्रपद्य स्वामिभावेन, हृष्टा जाता कृतक्रिया[9] ॥330॥
बलिनस्तावका रोगा, अपथ्ये लम्पट मन । महायत्न विना नात्र, लक्ष्यते[10] गदसक्षय ॥३१॥
तद्वत्स! प्रयतो[11] भूत्वा, कृत्वा स्व निश्चल मन । स्थित्वा निराकुलोऽत्रैव, वितते राजमन्दिरे ॥३२॥
आदाय कन्यकाहस्तात्प्रयुञ्जान क्षणे क्षणे । भेषजत्रयमेतत्त्व, कुरुष्वारोग्यमात्मन [युग्मम्] ॥३३॥

## सत्त्रयकदन्नाल्पाधिकसेवनजनितगुणदोषा

ततस्तथेति भावेन, गृहीत तेन तद्वच । तेनापि तद्दया तस्य, विहिता परिचारिका[12] ॥३४॥
तत कृत्वैकदेशेन, भिक्षापात्रमनारतम् । तदेव[13] पालयन् काल, कियन्तमपि सस्थित ॥३५॥
ददाति तद्दया तस्मै, त्रितय तदहर्निशम् । कदन्ने मूर्च्छितस्यास्य केवल तत्र नादर ॥३६॥
प्रायेण बहु भुङ्क्तेऽसौ, तन्मोहेन कुभोजनम् । यत्पुनस्तद्दयादत्त,[14] तद् व्रजत्युपदशताम्[15] ॥३७॥
अञ्जन च तया प्रोक्तो, निधत्ते नेत्रयो क्वचित् । तच्च तीर्थोदक पातु, तद्वचस्त[16] [तद्वचस मु] प्रवर्त्तते ॥३८॥
महाकल्याणक दत्त, सभ्रमेण तया बहु । भुक्त्वाऽल्प हेलया शेष, कर्परे निदधाति स ॥३९॥
तत्सान्निध्यगुणात्तच्च, तस्यान्न सप्रवर्द्धते । अदतोऽहर्निश तस्मान्निष्ठा नैव प्रपद्यते ॥340॥
ततो गाढतर तुष्टो, वृद्धि दृष्ट्वा स्वभोजने । न चासौ तद्विजानीते, यन्माहात्म्येन वर्द्धते ॥४१॥
केवल तत्र गृद्धात्मा, त्रितये शिथिलादर । जानन्नपि न जानाति, काल नयति मोहित ॥४२॥
अहर्निशमपथ्य तद्, भुञ्जान कुक्षिमानत[17] । त्रितयेऽनादरास्वादी,[18] न रोगोच्छेदभाजनम् ॥४३॥
तावन्मात्रेण भुक्तेन, किन्तु तस्य गुणो महान् । कृतस्त्रयेण[19] ते रोगा, आनीता तेन[20] याप्यताम्[21] ॥४४॥
तथाप्यात्मज्ञताऽभावादुल्बणत्वादपथ्यत[22] । क्वचिद्विकारमात्मीय, दर्शयन्ति शरीरके ॥४५॥

---

1 तया । 2 रोगाणाम् । 3 घात । 4 सद्गुणाना सग्रहे दोषाणा नाशे ।
5 भेषजत्रयम् । 6 त्वया नरा प्र । 7 सप्रदायतयोक्तम् । 8 बर्हिणम् ।
9 विहितौषधक्रिया । 10 लक्षते पा । 11 =आदरवान् । 12 सेवाकारिणी ।
13 पात्रम् । 14 यत् तद्दयया प्र । 15 व्यञ्जनताम् । 16 तद्वचस्तत् प्र ।
17 यावत्तृप्ति । 18 अनादरेण खादक । 19 तत । 20 =भेषजत्रयेण ।
21 =वश्यताम् । 22 अपथ्यस्य ।

क्वचिच्छूल क्वचिद्दाह, क्वचिन्मूर्च्छा क्वचिज्ज्वर । क्वचिच्छर्दि क्वचिज्जाड्य, क्वचिद् हृत्पार्श्ववेदना ॥४६॥
क्वचिदुन्मादसन्ताप, पथ्ये क्वचिदरोचक । तै रोगैर्विक्रियापन्ने, शरीरस्य प्रजायते [युग्मम्] ॥४७॥

## तद्दयोपदेश द्रमकस्य चापथ्यलाम्पट्यम्

कदाचित्तद्दया दृष्ट्वा, त विकारैरुपद्रुतम् । आक्रन्दन्त कृपोपेता, सचिन्त्येत्थमभापत ॥४८॥
कथित तात । तातेन, यदन्न तव वल्लभम् । एतन्निमित्तका सर्वे, रोगास्तव शरीरके ॥४९॥
तथापि दृष्टवृत्तान्ता, मा भूदाकुलता तव । तद् भक्षयन्त दृष्टा (ष्ट्वा) ऽपि, भवन्त नेव वारये ॥350॥
परमस्वास्थ्यहेतौ ते, शैथिल्य भेपजत्रये । एतत्तु रोचते तुभ्य, सर्वसन्तापकारणम् ॥५१॥
अधुना क्रन्दतो नास्ति, हेतु स्वास्थ्यस्य कारक । अपथ्येऽत्यर्थं सक्ताना, न लगत्येव भेपजम् ॥५२॥
अपवादो ममाप्यत्र, यतस्ते परिचारिका । प्रत्यह न च शक्नोमि, कर्तुं स्वास्थ्य तवाधुना ॥५३॥
इतर प्राह यद्येव, वारणीयस्त्वयाऽमुत । अभिलापातिरेकेण, न त्यक्तु स्वयमुत्सहे ॥५४॥
कदाचित्त्वत्प्रभावेण, स्तोकस्तोक विमुञ्चत । सर्वत्यागेऽपि शक्तिर्मे, कदन्नस्य भविष्यति ॥५५॥
साधु साधूदित भद्र[1]। युक्तमेतद् भवादृशाम् । इत्युक्त्वाऽधिकमश्नन्त, सा कदन्न न्यवारयत् ॥५६॥
ततस्तत्परिहारेण, रोगा यान्त्यस्य तानवम् । न जायतेऽधिका पीडा, लगत्यङ्गे[2] च भेपजम् ॥५७॥
केवल सा यदाऽभ्यर्णे, तदा पथ्येन तिष्ठति । अपथ्यमल्पमश्नाति जायते तेन याप्यता[3] ॥५८॥
यदा तु सा विदूरस्था, लाम्पट्यात्तत्कदन्नकम् । भूरि निर्भेपज सोऽत्ति, तेनाजीर्णेन[4] पीड्यते ॥५९॥
इतश्च तद्दया तेन, धर्मबोधकरेण सा । प्रागेवाशेपलोकस्य, पालकत्वे नियोजिता ॥360॥
साऽनन्तसत्त्वसङ्घातव्यापारकरणोद्यता । तन्मूले क्वचिदेवाऽऽस्ते, शेपकाल स[5] मुत्कल ॥६१॥
अपथ्यभक्षणाऽऽसक्त, स केनचिदवारित । विकारैर्बाध्यते भूयस्ते दरास्ते च मेण्ढका ॥६२॥

## सद्बुद्धि परिचारणा

कदाचित्पीडितो दृष्टो, धर्मबोधकरेण स । सोऽवादीत् किमिद भद्र। स चाशेप न्यवेदयत् ॥६३॥
इय हि तद्दया नित्य, न मत्पार्श्वेऽवतिष्ठते । तद्वैकल्याच्च मे रोगा, प्रभवन्ति विशेपत ॥६४॥
तस्मान्नाथास्तथा यूय, कुरुध्व यत्नमुत्तमम् । तथा पीडा न मे देहे, स्वप्नान्तेऽप्युपजायते ॥६५॥
स प्राह वत्स । ते पीडा, जायतेऽपथ्यसेवनात् । इय तु तद्दया व्यग्रा, कर्मान्तरनियोगत ॥६६॥
या वारण विधत्ते ते, सदेवापथ्यमश्नत । यदि स्यात्तादृशी काचित्, क्रियते परिचारिका ॥६७॥
केवल त्वमनात्मज्ञ, पथ्यसेवापराङ्मुख । कदन्नभक्षणोद्युक्तस्तस्य कि करवाणि ते ? ॥६८॥
इतरस्त्वाह मा मैव, नाथा । वदत साम्प्रतम् । नैवाह युष्मदादेश, लङ्घयामि कथञ्चन ॥६९॥
तदाकर्ण्य मनाग् ध्यात्वा, क्षणमात्रमवोचत । धर्मबोधकरस्तस्मै, हितायोद्यतमानस ॥370॥
अस्ति मे वचनायत्ता, सद्बुद्धिर्नाम दारिका । ता ते करोमि निर्व्यग्रा, विशेपपरिचारिकाम् ॥७१॥
सा हि सनिहिता नित्य, पथ्यापथ्यविवेचिका । तुभ्यमेव मया दत्ता, मा कार्पीश्चित्तवैक्लवम् ॥७२॥
केवल सा विशेपज्ञा, वेपरीत्यविधायिनाम् । अनादरवता पुसा, नोपकाराय वर्त्तते ॥७३॥
यदि तेऽस्ति सुखाकाङ्क्षा, दुःखेभ्यो यदि ते भयम् । तत सा वक्ति यत्किञ्चित्, कर्त्तुं युक्त तदेव[6] ते ॥७४॥
एप एव ममादेशो, यत्तदादेशवर्त्तनम् । तस्यै न रोचते यत्तु, नैव मह्य स रोचते ॥७५॥
अनेकेक्षणाऽऽयुक्ताऽपि [ककार्ययुक्तापि मु] तद्दया क्वचिदेत्य ते । प्रतिजागरण भद्र। करिष्यत्यन्तराऽन्तरा ॥७६॥
केवल परमार्थस्ते, कथ्यते हितकाम्यया । सद्बुद्धो सतत यत्न, कर्त्तव्य सुखमिच्छता ॥७७॥
ये मूढा सम्यगाराध्य, सप्रसादा न कुर्वते । एना तेपा न राजेन्द्रो, नाह नान्य प्रसीदति ॥७८॥

---

1 वत्स प्र । 2 गुण विदधाति । 3 यापना प्र ।
4 = कदन्न । 5 रार । 5 सदैव प्र ।

अप्रसादहता नित्य, जायन्ते दुखभाजनम् । ते यतोऽन्यो न लोकेऽपि, हेतुरस्ति सुखप्रद ॥७९॥
स्वाधीना वर्त्तते यस्माद्, दूरस्था मद्विधादय । तवेय सुखहेतुत्वे, तस्मादाराद्धुमर्हसि ॥380॥
एव भवतु तेनोक्ते, कृता सा परिचारिका । तत प्रभृति निश्चिन्तो, धर्मबोधकरोऽभवत् ॥८१॥

## सद्बुद्धिससर्गजगुण

यावदास्ते दिनान्येषा, कतिचित्तस्य पार्श्वगा । तावद्यत्तत्र सपन्न, तदिदानी निबोधत ॥८२॥
अतिलौल्येन य पूर्वं, खादन्नपि न तृप्यति । कदन्न भूरि नैवात्ति, तस्य चिन्तापि तद्गता ॥८३॥
पूर्वाभ्यासात् क्वचिद् भुङ्क्ते, केवल तृप्तिकारणम् । जायते न च तत्स्वास्थ्य, विहन्याद् गृद्ध्यभावत ॥८४॥
योऽकार्षीदुपरोधेन, महता भेषजत्रयम् । स्वय तस्य बलात्तस्मिन्[1], अभिलाषोऽभिवर्द्धते[2] ॥८५॥
अहिते गृद्ध्यभावेन, हिते चाभिनिवेशत । यत्तदा तस्य सपन्न, तच्चेदमभिधीयते ॥८६॥
बाधन्ते नैव ते रोगा, शरीर जाततानवा । याऽपि पीडा भवेत् क्वापि, साऽपि शीघ्र निवर्त्तते ॥८७॥
विज्ञातश्च सुखास्वादो, नष्टा बीभत्सरूपता । गाढ च वर्त्तते तोष, स्वस्थत्वात्तस्य चेतसि ॥८८॥
अन्यदाऽत्यन्तहृष्टेन, मनसा रहसि स्थित । सद्बुद्ध्या सार्द्धमेव स, जल्पति स्म निराकुल ॥८९॥
भद्रे! किमिदमाश्चर्य, शरीरे मम वर्त्तते । एतद्दुखाकर पूर्वं, यत्सुखाकरता गतम् ? ॥390॥
सा प्राह ज्ञातमेतत्ते, सम्यक् पथ्यनिषेवणात् । समस्तदोषमूलेऽस्मिन्नहिते लोल्यवर्जनात् ॥९१॥
मत्सान्निध्याच्च ते भद्र! भुञ्जानस्य कदन्नकम् । प्रागभ्यासवशाच्चित्ते, लज्जाऽत्यर्थं प्रजायते ॥९२॥
लज्जया तस्य सम्भोगोऽकार्यरूप प्रकाशते । ततश्च गृद्ध्ययोगेन कामचारो निवर्त्तते ॥९३॥
ततस्तद्भुक्तमप्यङ्ग!, नात्यर्थ रोगवर्द्धनम् । तेनैषाऽऽह्लादसवेद्या, जाता तव सुखासिका ॥९४॥
इतरस्त्वाह यद्येव, सर्वथाऽपि त्यजाम्यहम् । अद कदन्न मे येन, जायते सुखमुत्तमम् ॥९५॥
सा त्वाह युज्यते किन्तु, सम्यगालोच्य सत्यज । मा भूत्ते स्नेहदोषेण, प्रागिवाऽऽकुलता पुन ॥९६॥
यदि त्यक्ते पुनस्तेऽत्र, स्नेहाबन्धोऽनुवर्त्तते । ततोऽत्यागो वर कस्मात् ? स्नेहोऽस्मिन्रोगवर्धक ॥९७॥
अल्पाल्पमश्नतोऽप्येतद् भेषजत्रयसेवनात् । साम्प्रत याप्यता तेऽस्ति, साऽपि चात्यन्तदुर्लभा ॥९८॥
सर्वत्याग पुन[3] कृत्वा, य स्यात्तदभिलाषुक । याप्यतामपि नाप्नोति, स महामोहदोषत ॥९९॥
तदेतत्सम्यगालोच्य, यदि चेतसि भासते । ततोऽस्य सर्वथा त्यागो, युज्यते कर्तुमुत्तमै ॥400॥
सद्बुद्धेस्तद्वच श्रुत्वा, मनाग् दोलायित मन । तस्य कि करवाणीति,नास्ति सम्यग् विनिश्चय ॥१॥
अन्यदा परिभुज्योच्चैर्महाकल्याणक बहु । तत् कदन्न ततस्तेन, प्राशित लीलया किल ॥२॥
तत सदन्नतृप्तत्वात्, सद्बुद्धे सन्निधानत । ततश्च तैर्गुणैश्चित्ते[4], तदानी प्रतिभासते ॥३॥

## द्रमकस्य शुभसकल्पा

अहो कुथितमत्यर्थं, लज्जनीय मलाविलम् । बीभत्स विरस निन्द्य, सर्वदोषौघभाजनम् ॥४॥
इद मे भोजन मोहस्तथाऽपि न निवर्त्तते । नैतत्त्यागादृते मन्ये, निर्व्यग्र सुखमाप्यते [युग्मम्] ॥५॥
त्यक्तेऽपि पूर्वलौल्येन, कदाचिन्मे स्मृतिर्भवेत् । सद्बुद्ध्या साऽपि दुखौघकारिणीति निवेदितम् ॥६॥
अत्यक्ते दुखजलधौ, सर्वदा स्थेयमञ्जसा । तदत्र कि करोमीति, पापोऽह सत्त्ववर्जित ? ॥७॥
अथवा–किमेतै क्रियते मोहादालजालविचिन्तनै । मुञ्चामि सर्वथाऽपीद, यद्भाव्य तद्भविष्यति ॥८॥
यद्वा किमत्र यद्भाव्यम्? न भवत्येव मे स्मृति । को नाम राज्यमासाद्य, स्मरेच्चण्डालरूपताम् ? ॥९॥
एव निश्चित्य तेनोक्ता, सद्बुद्धि क्षालयस्व मे । भद्रे ! भाजनमेतत्त्व, हित्वा सर्वं कदन्नकम् ॥410॥
तयोक्त पृच्छयता तावद्धर्मबोधकरस्त्वया । काले न विक्रिया याति, सम्यगालोच्य यत् कृतम् ॥११॥

---

1 त्रये । 2 तच्चै तद पा । 3 यत प्र । 4 स्वै प्र ।

तत सहैव सद्बुद्ध्या, धर्मवोधकरान्तिके । गत्वा सर्वोऽपि वृत्तान्तस्तेन तस्मै निवेदित ॥१२॥
साधु साधु कृत भद्र! धर्मवोधकरोऽव्रवीत् । केवल निश्चय कार्या, येन नो यासि हास्यताम् ॥१३॥
सोऽवादीत् किमिद नाथा! भूयो भूयो विकथ्यते । एप मे निश्चयस्तस्मिन्न मनोऽपि प्रवर्त्तते ॥१४॥

### कदन्नमहाकल्याणकत्यागग्रहणे तत्प्रभावश्च

ततोऽशेपजनै सार्द्धं, पर्यालोच्य विचक्षण । अत्याजयत्स तत्पात्र, सज्जले पर्यशोधयत् ॥१५॥
महाकल्याणकस्योच्चैस्तत् पुन पर्यपूरयत् । प्रमोदातिशयात्तत्र, दिने वृद्धिमकारयत् ॥१६॥
धर्मवोधकरो हृष्टस्तद्दया प्रमदोद्धुरा । सद्बुद्धिर्वर्द्धितानन्दा, मुदित राजमन्दिरम् ॥१७॥
प्रवृत्तश्च जने वादो, योऽय राज्ञाऽवलोकित । धर्मवोधकरस्येष्टस्तद्दयापरिपालित ॥१८॥
सद्बुद्ध्याऽधिष्ठिते नित्यमपथ्यत्यागकारक । भेपजत्रयसेवित्वाद्रोगौघेर्मुक्तकल्पक ॥१९॥
स नो निष्पुण्यक किन्तु, महात्मेप सपुण्यक । ततस्तदैव सजात, नामास्येति सपुण्यक त्रिभिर्विशेषकम् ॥420॥
कुत पुण्यविहीनाना, सामग्री भवतीदृशी? । *जन्मदारिद्र्यभाग् नेव, चक्रवर्तित्वभाजनम्* ॥२१॥
सद्बुद्धित [द्धिरत मु] द्दयायोगात्तिष्ठति[1] राजमन्दिरे । तत प्रभृति यत्तस्य, सपन्न तन्निवोधत ॥२२॥
अपथ्याभावतो नास्ति, पीडा देहे परिस्फुटा । क्वचित्सूक्ष्माऽल्पकाला च, यदि स्यात्पूर्वदोपजा ॥२३॥
तत स्वय गताकाङ्क्षो, लोकव्यापारशून्यधी । विधत्ते विमलालोक, नेत्रयोरञ्जन सदा ॥२४॥
तत्त्वप्रीतिकर तोय, पिवत्यश्रान्तमानस । महाकल्याणक भुङ्क्ते, तत्सदन्नमनारतम् ॥२५॥
ततो वल धृति स्वास्थ्य, कान्तिरोज प्रसन्नता । वुद्धि [द्धिपा मु] पाटवमक्षाणा, वर्द्धतेऽस्य प्रतिक्षणम् ॥२६॥
नाद्यापि सम्यगारोग्य, वहुत्वाद्रोगसन्तते । जायते केवल देहे, विशेपो दृश्यते महान् ॥२७॥
य प्रेतभूत प्रागासीद्गाढ वीभत्सदर्शन । स तावदेप सपन्नो, मानुपाकारधारक ॥२८॥
ये रोरभावे भावा प्रागभ्यस्तास्तेन सन्ततम्[2] (सन्ति ते प्र)। तुच्छताक्लीवतालोल्यशोकमोहभ्रमादय ॥२९॥
त्रयोपभोगात्ते सर्वे, नष्टप्रायस्तया तदा (सदा प्र) । न वाधका मनाग् जातास्तेनासो स्फीतमानस ॥430॥

### सत्त्रयीदानादर निष्फलता च

अन्यदाऽत्यन्तहृष्टात्मा, सद्बुद्धि परिपृच्छति । भद्रे! त्रयमिद लव्ध, मयेतत् केन कर्मणा? ॥३१॥
तयोक्त तात! *लभ्यन्ते, सर्वेऽर्था दत्तपूर्वका*[3] । इति वार्ता जने तेन, दत्तमेतत् क्वचित्त्वया ॥३२॥
तत स चिन्तयत्येत्र, वितीर्ण यदि लभ्यते । इद सकलकल्याणकारण भेपजत्रयम् ॥३३॥
इदानी चारुपात्रेभ्य, प्रयच्छामि विशेपत । पुनर्जन्मान्तरे येन, सपद्येतेदमक्षयम् ॥३४॥
तस्य चायमवष्टम्भो[4], राजराजावलोकित । धर्मवोधकरस्येष्टस्तद्दयापरिपूजित ॥३५॥
श्लाघित सर्वलोकेन, सद्बुद्धेर्गाढवल्लभ । अह सपुण्यकस्तेन, लोके वर्त्ते किलोत्तम युग्मम् ॥३६॥
ततश्च यदि मा कश्चिदागत्य प्रार्थयिष्यति [मानव मु] । तद्दास्यामीति मन्वानो, दित्सुरप्येप तिष्ठति ॥३७॥
*अत्यन्त निर्गुणोऽप्यत्र, महद्भि कृतगौरव । नून सजायते गर्वी,* यथाय द्रमकाधम ॥३८॥
तत्र ये मन्दिरे लोकास्ते सर्वे त्रयभोजना । तद्वलादेव निश्चिन्ता, सजाता परमेश्वरा ॥३९॥
प्रविष्टमात्रा दृश्यन्ते[5], तादृशा येऽपि निस्वका । तेऽन्येभ्य एव तद् भूरि, लभन्ते भेपजत्रयम् ॥440॥
ततो न कश्चित्तन्मूले, तदर्थमुपतिष्ठते[6] । स दिक्षु निक्षिपश्चक्षुर्याचमान प्रतीक्षते ॥४१॥
स्थित्वाऽपि काल भूयासमलव्धप्रार्थकस्तत[7] । सद्बुद्धि पुनरप्येष, तदर्थं परिपृच्छति ॥४२॥
सा प्राह भद्र! निर्गत्य, घोपणापूर्वक त्वया । दीयता यदि गृह्णीयु, केचित्स्यादतिसुन्दरम् ॥४३॥
ततोऽसौ घोपयत्युच्चैर्मदीय भेपजत्रयम् । लोका! गृह्णीत गृह्णीत, गृहे[8] तस्मिन्नटाट्यते ॥४४॥

---

1 तिष्ठते प्र । 2 साम्प्रतम् प्र । 3 पूर्वं दत्ता । 4 विचार ।
5 विद्यन्ते पा । 6 वा वीप्सायामित्यात्मन । 7 याचक न लव्धवान् । 8 तानुगृहऽस्मिन्नटा ।

तत पूत्कुर्वतस्तस्माद्, गृह्णीयुरतितुच्छका । ये तत्र तद्विधा केचिद्, अन्येषा तु हृदि स्थितम् ॥४५॥
अहो प्राग् दृष्टदारिद्र्यो, रोरोऽय मत्तता गत । राजवर्णवशेनास्मान्, ग्राहयत्यात्मभेषजम् ॥४६॥
तत केचिद्धसन्त्युच्चै, केचिदुत्प्रासयन्ति[1] तम् । अन्ये पराङ्मुखीभूय, तिष्ठन्ति विगतादरम् [रा मु] ॥४७॥
अथ त तादृश वीक्ष्य, दानोत्साहविवाधकम् । जनव्यापारमागत्य, सद्बुद्धे कथयत्यसौ ॥४८॥

## काष्ठपात्र्या सत्त्रयीप्रतिष्ठा

गृह्णन्ति द्रमका भद्रे! न गृह्णन्ति महाजना । ममेच्छा यदि सर्वेषामेतेषामुपयुज्यते[2] ॥४९॥
पर्यालोचे दृढ पट्वी, वर्त्तसे विमलेक्षणे! । तदत्र हेतुर्विद्येत, ग्राहणेऽस्य महात्मनाम्[3] ॥450॥
तदाकर्ण्य महाकार्ये, नियुक्ताऽहमनेन भो! । चिन्तयन्ती महाध्यान, प्रविष्टा सा विचक्षणा ॥५१॥
अथ निश्चित्य गर्भार्थं, कार्यस्येत्थमभाषत । एक एवात्र हेतु स्याद्, ग्राहणे सर्वसश्रय ॥५२॥
राजाऽजिरे विधायेद, काष्ठपात्र्या जनाकुले । वस्तुत्रय विशालाया, तिष्ठ विश्रब्धमानस ॥५३॥
स्वयमेव ग्रहीष्यन्ति, शून्य दृष्ट्वा तदर्थिन । स्मरन्तो रोरभाव हि, त्वत्करात्ते न गृह्णते ॥५४॥
आदद्यात् कश्चिदेकोऽपि, यदि तत्सगुणो नर । तेन स्यात्तारितो[4] मन्ये, यत एतदुदाहृतम् ॥५५॥
*किञ्चिज्ज्ञानमय पात्र, किञ्चित्पात्र तपोमयम् । आगमिष्यति यत्पात्र, तत्पात्र तारयिष्यति* ॥५६॥
ततोऽसौ वर्द्धितानन्दस्तस्या वचनकौशलै । विधत्ते तत्तथैवेति, तत्रेदमभिधीयते ॥५७॥
प्रयुक्त तादृशेनापि, ये ग्रहीष्यन्ति मानवा । ते भविष्यन्ति नीरोगा, तत्त्रय [यत् त्रय मु] तत्र कारणम् ॥५८॥
अन्यच्च–यावदर्थं[5] निसृष्टत्वाद्, ग्रहणे तदनुग्रहात् । अनुकम्पापरस्तत्र, सर्वस्तल्लातुमर्हति ॥५९॥

## दार्ष्टान्तिकघटना

एष तावत्समासेन, दृष्टान्त प्रतिपादित । अधुनोपनय यूय, कथ्यमान निबोधत ॥460॥
अदृष्टमूलपर्यन्त, यदत्र कथित पुरम् । सोऽय *ससारविस्तारोऽ*दृष्टपार प्रतीयताम् ॥६१॥
महामोहहतोऽनन्तदु खाघ्रातो विपुण्यक । पूर्व मदीयजीवोऽय, स रोर इति गृह्यताम् ॥६२॥
भिक्षाधारतया ख्यात, यत्तस्य घटकर्परम् । तदायुर्गुणदोषाणामाश्रयस्तद्धि वर्त्तते ॥६३॥
डिम्भा कुतीर्थिका ग्राह्या, वेदना क्लिष्टचित्तता । रोगा रागादयो ज्ञेया, अजीर्ण कर्मसञ्चय ॥६४॥
भोगा पुत्रकलत्राद्या, यच्च ससारकारणम् । तज्जीवगृद्धिहेतुत्वात्, कदन्नमभिधीयते ॥६५॥
यश्चासौ **सुस्थितो** नाम, महाराज प्रकाशित । जानीत *परमात्मान,* सर्वज्ञ त जिनेश्वरम् ॥६६॥
यच्च तज्जनितानन्द, गदित **राजमन्दिरम्** । अनन्तभूतिसपन्न, तत् ज्ञेय *जिनशासनम्* ॥६७॥
स्व*कर्मविवर*ो नाम, य प्रोक्तो द्वारपालक । आत्*मीयकर्मविच्छेदो,* यथार्थोऽसावुदाहृत ॥६८॥
ये चान्ये[6] सूचितास्तत्र, *द्वारपाला* प्रवेशका । ते मोहाज्ञानलोभाद्या विज्ञेयास्तत्त्वचिन्तकै ॥६९॥
*आचार्या*स्तत्र राजान, उ*पाध्याया*स्तु मन्त्रिण । *गीतार्थवृषभा* योद्धा, *गणचिन्तानियुक्तका* ॥470॥
*सामान्यभिक्षव* सर्वे, विज्ञेया*स्तलवर्गिका* । *आर्यास्तु* तत्र सद्गेहे, प्रशान्ता *स्थविरा जना* ॥७१॥
भटौघा *श्राद्धसङ्घा*तास्तद्रक्षाबद्धमानसा । ज्ञेया विलासिनीसार्था, भक्तास्तत*प्रमदागणा* ॥७२॥
शब्दादिविषयानन्दवर्णन पुनरत्र यत् । तदेव[7]मर्थ सद्धर्माज्जायन्ते तेऽपि सुन्दरा ॥७३॥
***धर्मबोधकरो*** ज्ञेय, ***सूरिर्यो*** मत्प्रबोधक । तद्दया तस्य या जाता, ममोपरि *महाकृपा* ॥७४॥
ज्ञानमञ्जनमुद्दिष्ट, सम्यक्त्व *जलमुच्यते* । *चारित्रमत्र* विज्ञेय, परमान्न मनीषिभि ॥७५॥
**सद्बुद्धि** *शोभना बुद्धि*, सन्मार्गे या प्रवर्त्तिका । काष्ठपात्री *त्रयाधारा*[8], वक्ष्यमाणा कथोच्यते ॥७६॥
एषा समासतस्तावत्, कृता सामान्ययोजना । विशेषयोजना व्यक्त, गद्येनोदाहरिष्यते ॥477॥

---

1 =उपहासविशेषास्पद कुर्वन्ति । 2 इत्येव स्या । 3 चद्वदेति शेष । 4 भवान् ।
5 यावन्तोऽर्थिनोऽत्र तदर्थम् । 6 त्व प्र । 7 तत् सवमिति ज्ञापनाय । 8 त्रयाकारा प्र ।

### विदुषा सन्मार्ग

तत्रेह तावत्तत्त्वविदुषामेष मार्गो यदुत→'तेषा कल्याणाभिनिवेशितया निष्प्रयोजनो विकल्पो न चेतसि विवर्त्तते, अथ कदाचिदभावितावस्थायां विवर्त्तेत तथापि ते न निर्निमित्त भाषन्ते, अथ [1]कदाचिदतत्त्वज्ञजनान्तर्गततया भाषेरन् तथापि न निर्हेतुक चेष्टन्ते, यदि पुनस्ते निष्कारण चेष्टेरन् ततोऽतत्त्वज्ञजनसार्थादविशिष्टतया तत्त्वविद्वत्ता [वित्ता मु] विशीर्येत, तस्मात्तत्त्ववेदिप्वात्मनोऽन्तर्भावमभिलपता सकलकाल सर्वेण स्वविकल्पजल्पाचरणाना सार्थकत्व यत्नत परिचिन्तनीयम्, तद्वेदिना च पुरत कीर्त्तनीयम्, ते हि निरर्थकेप्वप्यात्मविकल्पजल्पव्यापारेपु सार्थकत्वबुद्धि कुर्वन्तमनुकम्पया वारयेयु' इति । अतो मयाऽपि स्वप्रवृत्ते सार्थकत्वमावेदयतेमा*मुपमितिभवप्रपञ्चाभिधाना* कथामारब्धुकामेन कथानक दृष्टान्तद्वारेण सूचितम्, तदेतद्यद्यवधारित भो भव्यास्ततो मदनुरोधेन विहाय विक्षेपान्तर अस्य दार्ष्टान्तिकम–र्थमाकर्णयत ।

### ससृते नगरकल्पना

तत्र यत्तावद् अदृष्टमूलपर्यन्तं नाम नगरमनेकजनाकुल सदारथायुकमाख्यात सोऽयमनादिनिधनोऽनव [वि मु] वच्छिन्नरूपोऽनन्तजन्तुव्रातपूरित ससारो द्रष्टव्य, तथाहि–युज्यतेऽस्य नगरस्य (=ससारस्य) नगरता कल्पयितु, यतोऽत्र धवलगृहायन्ते देवलोकादिस्थानानि, हट्टमार्गायन्ते परापरजन्मपद्धतय, विविधपण्यायन्ते नानाकारसुखदु खानि, तदनुरूपमूल्यायन्ते बहुविधपुण्यापुण्यानि, विचित्रचित्रोज्ज्वलदेवकुलायन्ते सुगतकणभक्षाक्षपादकपिलादिप्रणीतकुमतानि पौर्वापर्यपर्यालोचनविकलमुग्धजनचित्ताक्षेपकारितया, सहर्षप्रबलकलकलोपेतदुर्दान्तबालकलापायन्ते क्रोधादय कषाया सकलविवेकिमहालोकचित्तोद्वेगहेतुतया, तुङ्गप्राकारायते महामोहोऽलङ्घ्यतया वेष्टकतया च, महापरिखायते रागद्वेषात्मिका तृष्णा विषयजलदुश्पूरतयाऽतिगम्भीरतया च, विस्तीर्णमहासरायन्ते शब्दादयो विषया प्रबलजल[2]–कल्लोलाकुलतया विपर्यस्तजनशकुनाधारतया च, गम्भीरान्धकूपायन्ते प्रियविप्रयोगानिष्टसयोगस्वजनमरणधनहरणादयो भावा त्रासहेतुतया अदृष्टमूलतया च, विशालारामकाननायन्ते जन्तुदेहा हृषीकमनश्चञ्चरीकनिलयनकारणतया स्वकर्मविविधविटपिकुसुमफलभरपूरिततया, चेति ।

### स्वस्य द्रमकोपमा

यस्तु तत्र नगरे निष्पुण्यको नाम द्रमक कथित सोऽत्र ससारनगरे सर्वज्ञशासनप्राप्ते पूर्व पुण्यरहिततया यथार्थाभिधानो मदीयजीवो द्रष्टव्य । यथाऽसा *द्रमको महोदर* तथाऽयमपि जीवो विषयकदशनदुष्पूरत्वान्महोदर । यथासो *द्रमक प्रलीनबन्धुवर्गस्तथाऽयमपि* जीवोऽनादो भवभ्रमणे केवलो जायते, केवलो म्रियते, केवलश्च स्वकर्मपरिणतिढौकित सुखदु खमनुभवति इत्यतो नास्य परमार्थत कश्चिद्बन्धुरस्ति । यथाऽसो *रोरो दुष्टबुद्धिस्तथाऽयमपि* जीवोऽतिविपर्यस्तो, यतोऽनन्तदु खहेतून् विषयानासाद्य परितुष्यति, परमार्थशत्रून् कषायान् बन्धूनिव सेवते, परमार्थतो ऽन्धत्वमपि[3] मिथ्यात्व पटुदृष्टिरूपतया गृह्णाति, नरकपातहेतुभूतामप्यविरति[4] प्रमोदकारणमाकलयति, अनेकानर्थसार्थप्रवर्त्तकमपि प्रमादकदम्बकमत्यन्तस्निग्धमित्रवृन्दमिव पश्यति, धर्म्मधनहारितया चरटकल्पानपि दुष्टमनोवाक्काययोगान् पुत्रानिव बहुधनार्जनशीलान् मन्यते, निबिडबन्धनोपमानमपि पुत्रकलत्रधनकनकादीनाह्लादातिरेकहेतून् पर्यालोचयतीति । *यथाऽसो द्रमको दारिद्र्योपहतस्तथाऽयमपि* जीव सद्धर्मवराटिकामात्रेणापि शून्यत्वाद्दारिद्र्याक्रान्तमूर्त्ति । *यथाऽसो रोर पौरुषविकलस्तथाऽयमपि* जीव स्वकर्महेतूच्छेदवीर्यविकलतया पुरुषकाररहितो विज्ञेय । *यथाऽसौ* द्रमक *क्षुत्क्षामशरीरस्तथाऽयमपि* जीव सकलकाल विषयबुभुक्षाऽनिवृत्तेरत्यन्तकर्पितशरीरो ज्ञातव्य । *यथाऽसौ रोरोऽनाथ* कथितस्तथाऽयमपि[5] जीव सर्वज्ञरूपनाथाप्रतिपत्तेरनाथो द्रष्टव्य । *यथाऽसौ द्रमको भूमिशयनेन गाढ* घृष्टपार्श्वत्रिक प्रतिपादितस्तथाऽयमपि जीव सदाऽतिपरुषपापभूमिविलोठनेन[6] नितरा दलितसमस्ताङ्गोपाङ्गो द्रष्टव्य । *यथाऽसौ द्रमको धूलिधूसरसर्वाङ्गो दर्शितस्तथाऽयमपि* जीवो बध्यमानपापपरमाणुधूलिधूसरसमस्तशरीरो विज्ञेय । *यथाऽसौ रोरश्चीरिकाजालमालितो*

---

1 कथञ्चिद् । 2 पक्षेजडाना कल्लोला । 3 महान्धकारन्धत्वमपि प्र । 4 नरकहेतु प्र ।
5 कलित प्र । 6 सदा परुष प्र ।

*गदितस्तथाऽयमपि* जीवो महामोहकलालक्षणाभिर्लघुचेलपताकाभि समन्तात्परिकरितमूर्त्तिरति [रतीव मु] बीभत्सदर्शनो वर्त्तते । यथाऽसौ *द्रमको निन्द्यमानो दीनश्चाख्यातस्तथाऽयमपि* जीवोऽवाप्तविवेकैर्निन्द्यते सद्भि, भयशोकादिक्लिष्टकर्मपरिपूर्णतया चात्यन्तदीनो विज्ञेय। *यथाऽसौ*[1] *तत्र नगरेऽनवरत गृहे गृहे भिक्षा पर्यटतीत्युक्तस्तथाऽयमपि* जीव[2] ससारनगरेऽपरापरजन्मलक्षणेषु उच्चावचेषु गेहेषु विषयकदन्नाशापाशवशीकृतोऽनवरतं[3] भ्रमतीति । *यत्पुनस्तस्य भिक्षाधार घटकर्परमाख्यात* तदस्य जीवद्रमकस्यायुष्क विज्ञेय, यतस्तदेव तदुपभोग्यस्य विषयकदन्नादेश्चारित्रमहाकल्याणकादेश्चाश्रयो वर्त्तते, यतश्च तदेव गृहीत्वा भूयो भूयोऽस्मिन् ससारनगरेऽय जीव पर्यटतीति । *ये तु तस्य द्रमकस्य दुर्दान्तडिम्भसघाता यष्टिमुष्टिमहालोष्टप्रहारै क्षणे क्षणे ताडयन्त शरीर जर्जरयन्तीति निदर्शितास्तेऽस्य*[4] जीवस्य कुविकल्पास्तत्सपादका कुतर्कग्रन्थास्तत्प्रणेतारो वा कुतीर्थिका विज्ञेया, ते हि यदा यदाऽमु जीव वराक पश्यन्ति तदा तदा कुहेतुशतमुद्गरघातपातैरस्य तत्त्वाभिमुख्यरूप शरीर जर्जरयन्ति ।

### विवेकाभावे कुचेष्टा

ततश्च तैर्जर्जरितशरीरोऽय जीवो न जानीते कार्याकार्यविचार, न लक्षयति भक्ष्याभक्ष्यविशेष, नाकलयति पेयापेयस्वरूप, नावबुध्यते हेयोपादेयविभाग, नावगच्छति स्वपरयोर्गुणदोषनिमित्तमपीति । ततोऽसौ कुतर्कश्रान्तचित्तश्चिन्तयति →नास्ति परलोको, न विद्यते कुशलाकुशलकर्म्मणा फल, न सभवति खल्वयमात्मा, नोपपद्यते सर्वज्ञ, न घटते तदुपदिष्टो मोक्षमार्ग इति, ततोऽसावतत्त्वाभिनिविष्टचित्तो हिनस्ति प्राणिनो, भाषतेऽलीकमादत्ते परधन, रमते मैथुने, परदारेषु वा, गृह्णाति परिग्रह, न करोति चेच्छापरिमाण, भक्षयति मासमास्वादयति मद्य, न गृह्णाति सदुपदेश, प्रकाशयति कुमार्ग, निन्दति वन्दनीयान्, वन्दतेऽवन्दनीयान्, गच्छति स्वपरयोर्गुणदोषनिमित्त, वदति परावर्णवादमाचरति समस्तपातकानीति ।

### जीवस्य नरकवेदना

ततो बध्नाति निबिड भूरिकर्मजाल, पतत्येष जीवो नरकेषु, तत्र च पतित पच्यते कुम्भीपाकेन, विपाट्यते क्रकचपाटनेन, आरोह्यते वज्रकण्टकाकुलासु शाल्मलीषु, पाय्यते सन्दशकैर्मुख विवृत्य कलकलायमान तप्त त्रपु, भक्ष्यन्ते निजमासानि, भृज्ज्यतेऽत्यन्तसन्तप्तभ्राष्ट्रेषु, तार्यते पूयवसारुधिरक्लेदमूत्रान्त्रकलुषा वैतरणी, छिद्यतेऽसिपत्रवनेषु स्वपापभरप्रेरितै परमाधार्मिकसुरैरिति । तथा समस्तपुद्गलराशिभक्षणेऽपि नोपशाम्यति बुभुक्षा, नि शेषजलधिपानेऽपि नापगच्छति तर्ष, अभिभूयते शीतवेदनया, कदर्थ्यते तापातिरेकेण, तथोदीरयन्ति च तदन्यनारका नानाकाराणि दु खानि, ततश्चाय जीवो गाढतापानुगतो हा मातर्हा नाथास्त्रायध्व त्रायध्वमिति विक्लवमाक्रोशति, न चास्य तत्र गात्रत्रायक कश्चिद्विद्यते ।

### तिर्यग्गतिदु खवेदना

कथञ्चिदुत्तीर्णोऽपि नरकाद्विबाध्यते तिर्यक्षु वर्त्तमान, कथम्? वाह्यते भार, कुट्यते लकुटादिभि, छिद्यन्तेऽस्य कर्णपुच्छादय खाद्यते कृमिजालै, सहते बुभुक्षा, म्रियते पिपासया, तुद्यते नानाकारयातनाभिरिति[5] ।

### मनुजगतिवेदना

तत कथञ्चिदवाप्तमनुष्यभवोऽप्येष जीव पीड्यत एव दु खै, कथम्? तदुच्यते→क्लेशयन्त्य[6]नन्तरोगव्राता, जर्जरयन्ति जराविकारा, दोदूयन्ते दुर्जना, विह्वलयन्तीष्टवियोगा, परिदेवयन्त्यनिष्टस[प्र मु]योगा, विसस्थुलयन्ति धनहरणानि, आकुलयन्ति स्वजनमरणानि, विह्वलयन्ति[7] नानाऽध्यसनानीति ।

### विबुधजन्मनि नानावेदना

तथा कथञ्चिल्लब्धविबुधजन्माप्येष जीवो ग्रस्यत एव नानावेदनाभि, तथाहि→आज्ञाप्यते विवश शक्रादिभि, खिद्यते परोत्कर्षदर्शनेन, जीर्यते प्राग्भवकृतप्रमादस्मरणेन, दन्दह्यतेऽस्वाधीनामरसुन्दरीप्रार्थनेन, शल्यते तन्निदानचिन्तनेन, निन्द्यते महर्द्धिकदेववृन्देन, विलपत्यात्मनश्च्यवनदर्शनेन, आक्रन्दति गाढप्राप्तासन्नमृत्यु, पतति समस्ताशुचिनिदाने गर्भकलमल इति ।

### द्रमककुविल्पोपनय

एवं स्थिते–यद् द्रमक वर्णयताऽभ्यधायि यदुत→ सर्वाङ्गीणमहाघातातापानुगतचेतन । हा मातस्त्रायतामित्थं दैन्यविक्रोशविक्लव ॥125॥ इति, तदस्यापि जीवस्य तुल्यमेव द्रष्टव्यम्, त(य)स्मादस्या सर्वस्या महानर्थपरम्परायाश्चा(स्वा)त्मगता

1 [यथा चासौ मु] 2 जीवोऽत्र प्र । 3 अनारतम् पा । 4 दशिता प्र ।
5 तीव्रवेदनाभि 6 एनम् प्र । 7 विधुरयन्ति प्र ।

कुविकल्पास्तत्सम्पादका कुदर्शनग्रन्थास्तत्प्रणेतारश्च कुतीर्थिका कारणमिति[1] । यत्तून्मादादयस्तस्य द्रमकस्य रोगा निर्दिष्टास्तेऽस्य जीवस्य महामोहादयो विज्ञेया । तत्र मोहो मिथ्यात्व, तदुन्माद इव वर्त्तते समस्ताकार्यप्रवृत्तिहेतुतया, ज्वर इव, राग सर्वाङ्गीणमहातापनिमित्ततया, शूलमिव द्वेषो गाढहृदयवेदनाकारणतया, पामेव कामस्तीव्रविषयाभिलाषकण्डूकारितया, गलत्कुष्ठमिव भयशोकारतिसम्पाद्य दैन्य जनजुगुप्साहेतुतया चित्तोद्वेगविधायितया च, नेत्ररोग इवाज्ञान विवेकदृष्टिविघातनिमित्ततया, जलोदरमिव प्रमाद सदनुष्ठानोत्साहघातकतयेति । ततश्चाय जीवो मिथ्यात्वादिभिरेतैर्भावरोगैर्विह्वलीकृतो न किञ्चिच्चेतयते । ततश्च यदेतत् साम्प्रतमेव न जानीते *कार्याकार्यविचार, न लक्षयति भक्ष्याभक्ष्य विशेष*मित्याद्यनध्यवसायरूप महातम प्रतिपादित, ये च *नास्ति परलोक* इत्यादयो विपर्यासविकल्पा प्रतिपादितास्तेऽस्य द्वयस्याप्युत्पत्तौ बाह्या कुतर्कग्रन्थादय सहकारिकारणभावेनोत्पा[2]–दका, एते तु रागद्वेषमोहादय आन्तरा उपादानकारणभावेन जनका, तस्मात्पूर्वोक्ता सर्वानर्थपरम्परा परमार्थतो गाढतरमेतज्जन्याऽपि विज्ञेया । किञ्च—>कुशास्त्रसस्कारादय कादाचित्का, एते तु रागादयस्तदुत्पादने सकलकालभाविन । अन्यच्च—>कुदर्शनश्रवणादयो भवन्तोऽपि भवेयुर्वाऽनर्थपरम्पराकारण न वेति व्यभिचारिण, एते तु रागादयो भवन्तोऽवश्यतया महानर्थगर्त्तपात कुर्वन्त्येव, नास्त्यत्र व्यभिचारो, यतस्तैरभिभूतोऽय जीव प्रविशति महातमोऽज्ञानरूप, विधत्ते नानाविधविपर्यासविकल्पान्, अनुतिष्ठति कदनुष्ठानशतानि, सञ्चिनोति गुरुतरकर्मभार, ततस्तत्परिणत्या क्वचिज्जायते सुरेषु, क्वचिदुत्पद्यते मानुषेषु, क्वचिदासादयति पशुभाव, क्वचित्पतति महानरकेषु । ततश्च—>तदेव प्राक्प्रतिपादितस्वरूप महादु खसन्तानमनवरतमरघट्टघटीयन्त्रन्याये–नानन्तशोऽनुभवद्वारेण परावर्त्तयतीति । एवञ्च स्थिते—>यत्तद्द्रमकवर्णने[3] प्रत्यपादि यदुत *'शीतोष्णदंशमशकक्षुत्पिपासाद्युपद्रवैर्वाध्यमानो महाघोरनारकोपमवेदन* ॥127॥ इति, तदत्र जीवरोरे समर्गलतर मन्तव्यमिति । अत एव च यदुक्त—>यदुत, असो द्रमक *कृपास्पद सता दृष्टो, हास्यस्थान स मानिनाम्। बालाना क्रीडनावासो, दृष्टान्त पापकर्मणाम्* ॥128॥ तदत्रापि जीवे सकल योजनीयम्, तथाहि—>सततमसातसततिजम्बाल[4]ग्रस्तोऽय जीवो दृश्यमानोऽत्यन्तसात्मीभूतप्रशमसुखरसाना भगवता सत्साधूना भवत्येव कृपास्थान, क्लिश्यमानेषु सकलकाल करुणाभाव[5]नाऽभावितचित्तत्वात्तेषा, तथा मानिनामिव वीररसवशेन तपश्चरणकरणोद्यतमतीना सरागसयमाना [ताना मु] भवत्येवाय जीवो हास्यस्थान, धर्माख्यपुरुषार्थसाधनविकलस्य कीदृशी खल्वस्य पुरुषतेति तेषामनादरदृष्टे । तथा बालाना मिथ्यात्वाध्मातमनसा [चेतसा मु] तथाविधलोकाना कथञ्चिदवाप्तविषयसुखलवाना भवत्येवाय पापिष्ठजीव क्रीडनावास, दृश्यन्ते हि धनगर्वोद्धुरचित्तैस्तथाविधकर्म्मकरादयो नानाप्रकार विडम्ब्यमाना । तथा पापकर्म्मणा फलप्रस्पणावसरे भवत्ये(वै)वविधो जीवो दृष्टान्त, तथाहि—>भगवन्त पापकार्याणि[6] दर्शयन्तो भव्यजन्तूना सवेगजननार्थमीदृशजीवानेव दृष्टान्तयन्तीति । यत्पुनरवाचि यदुत—> अन्येऽपि बहव सन्ति, रोरास्तत्र महापुरे । केवल तादृश प्रायो, नास्ति निर्भाग्यशेखर ॥129॥ इति । तदेतदात्मीयजीवस्यात्यन्तविपरीत[7]चारितामनुभवताऽभिहित मया। योऽय मदीयजीवोऽधरितजात्यन्धभावोऽस्य महामोहोऽपहस्तितनरकतापोऽस्य राग, उपमागोचरातीतोऽस्य परेषु द्वेष, अपहसितवैश्वानरोऽस्य क्रोधो, लघूकृतमहाशैलराजोऽस्य मानो, विनिर्जितभुजगवनितागतिरस्य माया, दर्शितस्वयम्भू–रमणसागरलघुभावोऽस्य लोभ, स्वप्नपिपासाकारमस्य विषयलाम्पटच भगवद्धर्मप्राप्ते प्रागासीत्, स्वसवेदनसिद्धमेतत्। अहमेव तर्कयामि–नैवमुल्वणदोषता प्रायोऽन्यजीवाना, यथा चैतत्सोपपत्तिक भवति तथोत्तरत्र प्रतिबोधावसरे विस्तरेणाभिधास्याम। यत्तूक्त—> यथाऽसौ रोरस्तत्रादृष्टमूल पर्यन्ते नगरे प्रतिभवन भिक्षामटन्नेव चिन्तयति, यदुत —>अमुकस्य देवदत्तस्य बन्धुमित्रस्य जिनदत्तस्य च गृहेऽह स्निग्धा मृष्टा[8] बह्वीं सुसस्कृता भिक्षा लप्स्ये, ता चाह तूर्णमादाय यथाऽन्ये द्रमका न पश्यन्ति तथैकान्ते यास्यामि, तत्र कियतीमपि भोक्ष्ये, शेषामन्यदिनार्थं स्थापयिष्यामि, ते तु द्रमका कदाचित्कुतश्चिन्निमित्तान्मा लब्धलाभ ज्ञास्यन्ति, ततश्चागत्य याचमाना मामुपद्रवयिष्यन्ति, ततश्च म्रियमाणेनापि मया न दातव्या सा तेभ्य, ततस्ते बलामोटिकया[9] ग्रहीष्यन्ति, ततोऽह तै सह योद्धु प्रारप्स्ये, ततस्ते मा यष्टिमुष्टिलोष्टादिभिस्ताडयिष्यन्ति, ततोऽह महामुद्गरमादाय तानेकैक चूर्णयिष्यामि, क्व यान्ति दृष्टास्ते मया पापा ? इत्येवमलीकविकल्पजालमालाकुलीकृतमानस केवल प्रतिक्षण रौद्रध्यानमापूरयति, न पुनरसौ वराक प्रतिगृहमटाटचमानोऽपि किञ्चिद्भोजनजातमासादयति, प्रत्युत हृदयखेदमात्मनोऽनन्तगुण विधत्ते । अथ *कथञ्चिद्दैववशात्कदन्नलेशमात्रमाप्नोति तदा महाराज्याभिषेकमिवासाद्य हर्षातिरेकाज्जगदप्यात्मनोऽधस्तान्मन्यते* तदेतत्सर्वमत्रापि

---

1 शरीरजर्जरका । 2 त्पथ प्र । 3 वर्णके प्र । 4 सनिपात प्र । 5 करुणाभावित प्र ।
6 [कर्माणि मु] । 7 विपरीतता प्र । 8 मृद्वीं प्र । 9 बलात्कारेणामोटनम् यस्या सा= ।

जीवे योजनीयम् । तत्रास्य ससारेऽहर्निशं पर्यटतो य एते शब्दादयो विषया यच्चैतद्बन्धुवर्गधनकनकादिकं यच्चान्यदपि क्रीडाविकथादिक संसारकारण तद्गृद्धिहेतुतया रागादिभावरोगकारणत्वात् कर्म्मसञ्चयरूपमहाऽजीर्णनिमित्तत्वाच्च कदन्न विज्ञेय, ततश्चायमपि महामोहग्रस्तो जीवश्चिन्तयति यदुत→

## ससारिजीवस्य मनोरथमाला

"परिणेष्याम्यहमनल्पयोषित ताश्च रूपेण पराजेष्यन्ति त्रिभुवन, सौभाग्येनाभिमुखयिष्यन्ति मकरध्वज, विलासैः क्षोभयिष्यन्ति मुनिहृदयानि, कलाभिरुपहसिष्यन्ति बृहस्पति, विज्ञानेन रञ्जयिष्यन्ति अतिदुर्विदग्धजनचित्तानीति । तासा चाह भविष्यामि सुतरा हृदयवल्लभ । न सहिष्यन्ते ता परपुरुषगन्धमपि, न लङ्घयिष्यन्ति मम कदाचिदाज्ञां, करिष्यन्ति मे सतत चित्तानन्दातिरेक, प्रसादयिष्यन्ति मा दर्शितकृत्रिमकोपविकार, विधास्यन्ति कामोत्कोचकरणपटूनि चाटुशतानि, प्रकटयिष्यन्तीङ्गिताकारैर्मे हृदयसद्भाव, हरिष्यन्ति नानाविकारविव्वोकैर्मे मानस, हनिष्यन्ति मामनवरत ता परस्परेर्ष्यया साभिलाप कटाक्षविक्षेपैरिति । तथा भविष्यति मे विनीतो दक्ष शुचि सुवेषोऽवसरज्ञो हृदयग्राही मय्यनुरक्त समस्तोपचारकुशल शौर्यौदार्यसम्पन्न· सकलकलाकौशलोपेत प्रतिपत्तिनिपुणोऽपहसितशक्रपरिकर परिकर इति। तथा भविष्यन्ति मे निजयश शुभ्रसुधाधवलतया स्वचित्तसन्निभा अत्युच्चतया च हिमगिरिसङ्काशा विचित्रचित्रोज्ज्वला [ल मु] वितानमालोपशोभिता शालभञ्जिकाद्यनेकनयनानन्दकारिरूपरचनाकलिता बहुविधशालाविशाला [1]नानाप्रकारप्रकोष्ठविन्यासा अतिविस्तीर्णनिका-कारास्थानमण्डपपरिकरिता समन्तान्महाप्राकारपरिक्षिप्ता अपहसितविबुधाधिपावासा सप्तभूमिकादयो भूयास प्रासादा, तथा करिष्यन्ति मे भवने सतत प्रकाश मरकतेन्द्रनीलमहानीलकर्केतनपद्मरागवज्रवैडूर्येन्दुकान्तसूर्यकान्तचूडामणिपुष्परागादिरत्नराशय, तथा विराजिष्यन्ते मम मन्दिरे समन्तात्पीतोद्योतमादर्शयन्तो हाटककूटा, तथा भविष्यति मम सदनेऽनन्ततया हिरण्यधान्यकुप्यादि-कमनास्थास्थानम्, तथा नन्दयिष्यन्ति मे हृदय मुकुटाङ्गदकुण्डलप्रालम्बादयो भूषणविशेषा, तथा जनयिष्यन्ति मे चित्तरतिं चीनाशुकपट्टाशुकदेवाशुकप्रभृतयो वस्त्रविस्तारा, तथा वर्द्धयिष्यन्ति मे मानसानन्द मणिकनकविचित्रभक्तिमण्डितराजतक्रीडाप-र्वतकलितानि दीर्घिकागुञ्जालिकायन्त्रवापिकाद्यनेकविधजलाशयमनोहराणि वकुलपुन्नागनागाशोकचम्पकप्रभृतिविविधविटपि-जातिविस्ताराणि पञ्चवर्णगन्धबन्धुरकुसुमभरानम्रशाखापर्यन्तानि कुमुदकोकनदादिजलरुहचारूणि भ्रमद्भृङ्गझङ्कारसारतारोपगीतानि प्रासादसमीपवर्त्तीनि लीलोपवनानि, प्रमोदयिष्यन्ति मा निर्जितदिनकरस्यन्दनसौन्दर्या रथसङ्घाता, हर्षयिष्यन्ति [2]माम–[ममा मु] पहसितसुराधिपहस्तिमाहात्म्याना वरकरिणा कोटय, तोषयिष्यन्ति मामधरितविबुधपतिहरिरया हयकोटिकोटय, समुल्लासयिष्यन्ति मे मनसि प्रमदातिरेक पुरतो धावन्तोऽनुरक्ता अपरपराकरणपटव परस्परमभिन्नचेतोवृत्तयो[विभिन्नचेतसो मु] न चात्यन्तसहता सङ्ख्यातीता पदातिसङ्घाता, रञ्जयिष्यन्ति मे प्रतिदिन प्रणतिलालसानि राजवृन्दानि किरीट-मणिमरीचिजालैश्चरणारविन्दम्, भविष्याम्यह भूरिभूमिमण्डलाधिपति, तन्त्रयिष्यन्ति मे समग्रकार्याणि प्रज्ञाऽवज्ञातसुरमन्त्रिणो[3]ऽमात्यमहत्तमा, *तदिद सुसस्कृतभिक्षालाभेच्छातुल्य विज्ञेयम्* । पुनश्च चिन्तयति→ततोऽहमतिसमृद्धतया निश्चिन्ततया च परिपूर्णसमग्रसामग्रीक करिष्यामि विधिना कुटीप्रावेशिक रसायन, ततस्तदुपयोगात् मपत्स्यते मे वलीपलितखालित्यव्यङ्गादिविकल जरामरणविकाररहित देवकुमाराधिकतरद्युतिवितान निशेषविषयोपभोगभाजन मम [महाप्राण मु]शरीरम् । *तदिद लब्धभिक्षस्यैकान्तगमनमनोरथसममवगन्तव्यम्* ।

भूयश्च मन्यते→ततोऽहमतिप्रमुदितचेता गम्भीररतिसागरावगाढस्तेन ललनाकलापेन सार्द्धं ललमान एवैव करिष्ये यदुत→क्वचिदनवरतप्रवृत्तमदनरसपरवशोऽनारतसुरतविनोदेन स्पर्शनेन्द्रिय प्रीणयिष्ये । क्वचिद्रसनेन्द्रियोत्सवद्वारेण स्वभ्यौकृता-शेषहपीकवर्गान्मनोज्ञरसानास्वादयिष्ये । क्वचिदतिसुरभिकर्पूरानुविद्धमलयजकश्मीरजकुरङ्गमदादिविलेपनद्वारेण च पञ्चसुगन्धिक-ताम्बूलास्वादनव्याजेन चाह घ्राणेन्द्रिय तर्पयिष्ये । क्वचिदनारतताडितमुरजध्वनिसनाथममरसुन्दरीविभ्रमललनालोकसम्पादित-मनेकाकारकरणाङ्गहारमनोहर [4]प्रेक्षणकमीक्षमाणश्चक्षुरिन्द्रियानन्द विधास्ये । क्वचित्कलकण्ठतत्प्रयोगविशारदजनप्रयुक्त वेणुवीणा-मृदङ्गकाकलीगीतादिस्वनमाकर्णयन् श्रोत्रेन्द्रियमाह्लादयिष्ये । क्वचित्पुनरखिलकलाकलापकौशलोपेतै समानवयोभि समर्पितहृदय-सर्वस्वै शौर्यौदार्यवीर्यवर्यैरपहसितमकरध्वजसौन्दर्यैर्मित्रवर्गै सार्द्धं नानाविधक्रीडाविलासै रममाण समग्रेन्द्रियग्राममाह्लादातिरेक-मास्कन्दयिष्यामीति । *तदिदमेकान्ते भिक्षाभक्षणाकाङ्क्षासदृशमवसेयम्* । चिन्तयति च→ततो ममैव निरतिशयगुणानुभवद्वारेण

1 नानाकर प । 2 उपसित पा । 3 मामत्य प । 4 प्रा[illegible] ।

तिष्ठतो भूयास काल समुत्पत्स्यन्ते सुरकुमाराकारधारकाणि रिपुसुन्दरीहृदयदाह(व प्र)दायकानि च समाह्लादित–समस्तवन्धुवर्गप्रणयिजननानाप्रकृतीनि[1] मत्प्रतिविम्वकसकाशानि सुतशतानि, ततोऽह सम्पूर्णाशेषमनोरथविस्तार प्रत्यस्तमित–प्रत्यूहसमूहोऽनन्तकाल यथेष्टचेष्टया विचरिष्यामि । *सोऽय भूरिदिनार्थं स्थापनमनोरथ इव वर्त्तते* । यत् पुनरालोचयति यदुत–अथ कदाचित्त तथाभूत मामकीन सपत्प्रकर्षं शेषनृपतय श्रोष्यन्ति, ततस्ते मत्सराध्मातचेतस सर्वेऽपि सभूय मद्विषयेपूपप्लव विधास्यन्ति, ततोऽह तेषामुपरि चतुरङ्गसेनयाऽविक्षेपेण यास्यामि, ततस्ते स्ववलावलेपवशेन मया सह सङ्ग्राम करिष्यन्ति, ततो भविष्यति प्रभूतकालिको महारणविमर्द्द, ततस्ते परस्पर सहततया भूरिसाधनतया च मनाग् मामाक्रमिष्यन्ति, ततोऽहमभिवर्द्धितक्रोधावन्धतया[2] प्रादुर्भूतप्रवलरणोत्साहस्तानेकैक सवल चूर्णयिष्ये, नास्ति समस्तानामपि पातालेऽपि प्रविष्टाना मया वद्धाना मोक्ष इति, तदिद *रोररणकाण्डविड्वरसमानमववोद्धव्यम्।* भूयश्च भावयति → ततोऽहमवजित–समस्तपृथिवीभाविराजवृन्दत्वाल्लप्स्ये चक्रवर्तिराज्यमहाभिषेकम्, ततो नास्ति वस्तु तत्त्रिभुवने यन्मे न सम्पत्स्यत इति । एवमेष जीवो राजपुत्राद्यवस्थाया वर्त्तमानो वहुशो निष्प्रयोजनविकल्पपरम्परयाऽऽत्मानमाकुलयति, ततश्च रौद्रध्यानमापूरयति, ततो वध्नाति निविड कर्म, तत पतति महानरकेषु, न चेह तथाऽपि खिद्यमानोऽपि पूर्वोपार्जितपुण्यविकल स्वहृदयताप विमुच्यापर कञ्चनार्थमासादयति । तदनेनैतल्लक्षणीय–यदा खल्वेष जीवो नरपतिसुताद्यवस्थायामतिविशालचित्ततया किलापकर्णिततुच्छवस्तुगोचरमनोरथो वृहदर्थप्रार्थकतया स्ववुद्ध्यैव महाभिप्रायस्तदापि विदितप्रशमामृतास्वादनसुखरसाना विज्ञातविषयविषविपाकदारूण [विषयदारूणविपाकविष मु] भावाना सिद्धिवधूसम्वन्धवद्धाध्यवसायाना भगवता सत्साधूना क्षुद्रद्रमकप्राय प्रतिभासते, कि पुन शेषास्ववस्थास्विति? ।

## अर्थकामसक्ताना चेष्टा सकल्पमालाश्च

तथाहि→द्विजातिवणिजकाभीरान्त्यजादिभावेषु वर्त्तमानोऽय जीवोऽदृष्टतत्त्वमार्गो वराकस्तुच्छाऽभिप्रायतया क्वचिद् द्वित्राणामपि क्षुद्रग्रामाणा लाभ चक्रवर्त्तित्व मन्यते, क्वचित् क्षेत्रखण्डमात्रप्रभुत्वमपि महामण्डलिकत्वमाकलयति, क्वचिज्जारकुलटामप्यमरसुन्दरीं कल्पयति, क्वचिद्देशविरूपमप्यात्मान मकरध्वजरूप [ज मु] चिन्तयति, क्वचिन्मातङ्गपाटका–कारमप्यात्मपरिजन शक्रपरिवारमिव पश्यति, क्वचिद् द्रविणस्य त्रिचतुराणा, सहस्राणा शताना विशतीना रूपकाणामपि लाभ कोटीश्वरत्वमवगच्छति, क्वचित्पञ्चषाणामपि धान्यद्रोणानामुत्पत्ति धनदविभवतुल्या लक्षयति, क्वचित्स्वकुटुम्वभरणमपि महाराज्यमववुध्यते, क्वचिद्दुष्पूरोदरदरीपूरणमपि महोत्सवाऽऽकार जानीते, क्वचिद्भिक्षावाप्तिमपि जीवितावाप्ति निश्चिनोति, क्वचिदन्य शब्दादिविषयोपभोगनिरतमुद्वीक्ष्य राजादिक शक्रोऽय, देवोऽय, वन्द्योऽयं, पुण्यभागय, महात्माऽय पुरुषो, यदि ममाऽप्येव सम्पद्यन्ते विषयास्ततोऽहमप्येव विलसामीति चिन्तयन्परिताम्यति । तथाविधाऽऽकूतविडम्वितश्च तदर्थं करोति भूभुजा सेवा, पर्युपास्ते तान् सर्वदा, दर्शयति विनय, वदत्यनुकूल, शोकाऽऽक्रान्तोऽपि हसति तेषु हसत्सु, सञ्जातजातस्वपुत्रहर्षप्रकर्षोऽपि रोदिति तेषु रुदत्सु, निजशत्रूनपि स्तौति तदभिमतान्, स्वपरमसुहृदोऽपि निन्दति तद्द्विषो, धावति पुरतो रात्रिन्दिव, मर्द्दयति खिन्नदेहोऽपि तच्चरणान्, क्षालयत्यशुचिस्थानानि, विधत्ते तद्वचनात्सर्वजघन्यकर्माणि, प्रविशति कृतान्तवदनकुहर इव रणमुखे, समर्पयति करवालादिघातानामात्महृदय, म्रियते धनकामोऽपूर्णकाम एव वराक । तथा प्रारभते कृषी, खिद्यते सर्वमहोरात्र, वाहयति हल, अनुभवत्यटव्या पशुभाव, विमर्द्दयति नानाप्रकारान् प्राणिन, परितप्यते वृष्ट्यभावेन, वाध्यते वीजनाशेन । तथा विधत्ते वाणिज्य, भाषतेऽलीक, मुष्णाति विश्रव्धमुग्धलोकान्, याति देशान्तरेषु, सहते [हेत मु] शीतवेदना, क्षमते तापसन्ताप, तितिक्षते वुभुक्षा, न गणयति पिपासा, अनुभवति त्रासाऽऽयासादीनि दुखशतानि, प्रविशति महारौद्रसमुद्रे, प्रलीयते यानपात्रभङ्गेन, भवति भक्ष्य जलचराणाम् । तथा भ्रमति गिरिकन्दरोदरेषु, आस्कन्दत्यसुरविवराणि, निभालयति रसकूपिका [का मु], भक्ष्यते तदारक्षराक्षसै । तथाऽवलम्वते महासाहस, याति रात्रौ श्मशानेषु, वहति मृतकलेवराणि, विक्रीणाति महामास, साधयति विकरालवेताल, निपात्यते तेन कुपितेन । तथाऽभ्यस्यति खन्यवाद, निरीक्षते निधानलक्षणानि, तुष्यति तद्दर्शनेन, ददाति रात्रौ तद्ग्रहणार्थं भूतवलि, दूयते तदङ्गारभृतभाजनवीक्षणेन। तथाऽनुशीलयति धातुवाद, समुपचरति नरेन्द्रवृन्द, गृह्णाति तदुपदेश, मीलयति मूलजातानि, समाहरति धातुमृत्तिका [का मु], समुपढौकयति पारद, क्लिश्यते तस्य जारणचारणमारणकरणेन, धमते रात्रिन्दिव, पूत्करोति प्रतिक्षण, हृष्यति

1 जनता प्र । 2 क्रोधवन्धतया प्र ।

पीतश्वेतक्रिययोर्लेशसिद्धौ, खादत्यहर्निशमाशामोदकान्, व्ययीकरोति तदर्थं शेषमपि धनलव, मार्यते दु साधितकर्मविभ्रमेण । तथा विषयोपभोगसम्पत्तये धनार्थमेव चाय जीव कुरुते चौर्यं, रमते द्यूतमाराधयति यक्षिणी, परिजपति मन्त्रान्, गणयति ज्योतिषी, प्रयुङ्क्ते निमित्त, आवर्जयति लोकहृदय, अभ्यस्यति सकल कलाकलाप, किम्बहुना? तन्नास्ति यन्न करोति, तन्न विद्यते यन्न वदति, तन्न सम्भवति यन्न चिन्तयति, न च तथाप्ययमनवरतमितश्चेतश्च तदर्थं बभ्रम्यमाण प्राग्विहितपुण्यशून्य समभिलषितार्थस्य तिलतुषत्रिभागमात्रमपि प्राप्नोति, केवल स्वचित्तसन्तापमार्त्तरौद्रध्याने[1], गुरुतरकर्मभार, तद्द्वारेण दुर्गति चात्मनोऽभिवर्द्धयतीति। यदि पुन कथञ्चित्पूर्वविहितपुण्यलव स्यात् ततोऽय जीवस्तदुदयेन धनसहस्रादिक वा, अभिमतभार्यां वा, स्वशरीरसौन्दर्यं[2] वा, विनीतपरिजन वा, धान्यसञ्चय वा कतिचिद्ग्रामप्रभुत्व वा, राज्यादिक वा प्राप्नुयादपि । ततश्च यथाऽसौ द्रमकः कदन्नलेशमात्रलाभात्तुष्टः[3], तथाऽयमपि जीवो माद्यति हृदये, मदसन्निपातग्रस्तहृदयश्च नाकर्णयति विज्ञापनानि[4], न पश्यति शेषलोक, न नामयति ग्रीवा, न भाषते प्रगुणवचनै, अकाण्ड एव निमीलयति चक्षुषी, अपमानयति गुरुसहतिमपि। अतोऽयमेवविधतुच्छाऽभिप्रायहतस्वरूपो जीवो ज्ञानादिरत्नभरपरिपूर्णतया परमेश्वराणा भगवता मुनिपुङ्गवाना क्षुद्रद्रमकेभ्योऽप्यधमतम कथ न प्रतिभासते? यदा पशुभावे नरकेषु वा वर्ततेऽय जीवस्तदा विशेषतो द्रमकोपमामतिलङ्घते[5], यतो विवेकधनाना महर्षीणा य एते किल शक्रादयो देवा महर्द्धयो महाद्युतयो निरुपचरितशब्दादिविषयोपभोगभाजन द्राघीयस्थितिकास्तेऽपि यदि सम्यग्दर्शनरत्नविकला स्युस्तदा महादारिद्र्यभराक्रान्तमूर्त्तयो विद्युल्लताविलसितचटुलजीविताश्च प्रतिभासन्ते, कि पुन शेषा ससारोदरविवरवर्त्तिनो जन्तव? इति । यथा चासौ द्रमक अवज्ञया जनैर्दत्त तत्कदन्न भुञ्जान शक्रादपि शङ्कते, यदुत— अय ममैतदुद्दालयिष्यति तथाऽयमपि जीवो महामोहोपहत तद्द्रविणकलत्रादिक कथञ्चित्तावता क्लेशजालेनोपार्जित यदाऽनुभवति, तदा बिभेति तस्करेभ्य, त्रस्यति नरपतिभ्य, कम्पते भयेन दायादेभ्य, उद्विजते याचकेभ्य, किम्बहुनाऽत्र जल्पितेन? अत्यन्तनिस्पृहमुनिपुङ्गवेभ्योऽपि शङ्कते, यदुत—एते महता वचनरचनाऽऽटोपेन मा प्रतार्य नूनमेतद् ग्रहीतुमिच्छन्ति। तथाविधगाढमूर्च्छाविषाभिभूतचित्तश्चिन्तयत्येव—हन्त! धक्ष्यते ममैतद्द्रविणजात चित्रभानुना, प्लावयिष्यते वा सलिलप्रवाहेन, हरिष्यते वा चौरादिभिरत सुरक्षित करोमि। ततोऽसहाय शेषजनाऽविश्रम्भितया रात्रावुत्थाय खनत्यतिदूर भूतल, निधत्ते तत्तत्र निभृतसञ्चार, पुन पूरयित्वा गर्त्त कुरुते सम भूतल, विकिरति तस्योपरि धूलिकचवरादिक, सम्पादयति किलाऽलक्ष्य स्वाकूतेन, [मा मु] पुनर्न ज्ञास्यामि स्वदेशमिति विधत्ते विविधानि चिह्नानि, प्रयोजनान्तरेण तद्देशेन सञ्चरन्तमपर जन मुहुर्मुहुर्निभालयति, कथञ्चित्तद्देशे यान्ती तद्दृष्टि शङ्कते—आ! ज्ञातमेतेन, अतो मूर्च्छादन्दह्यमानमानसो न लभते रात्रौ निद्रा, पुनरुत्थाय तत्प्रदेशात्तदुत्खनति, निधत्ते च प्रदेशान्तरे, निरीक्षते पुन पुनर्दिगन्तरेषु सभय निक्षिप्तचक्षु यदुत—मा कश्चिद् द्रक्ष्यतीति, व्यापारान्तरमपि स केवल कायेन करोति चेतस्तु तत्प्रतिबन्धबन्धनबद्ध तत स्थानादन्यत्र पदमपि न चलतीति । अथ कथञ्चित्तथाविधयत्नशतैरपि तेन रक्ष्यमाणमपरो लक्षयेत् गृह्णीयाच्च ततोऽसावकाण्डवज्रपातनिर्द्दलितशरीर इव हा तात! हा मात! हा भ्रातरिति विक्लवमारा(र)टचमान सकलविवेकिलोक करुणापरीतचित्तता प्रापयति, अतिमूर्च्छाव्याघ्रा[6]ऽऽघ्रातचेतनो म्रियते वा । तदिद धनलवप्रतिबद्धचेतोवृत्तीना विलसितमुपदर्शितम्। तथा गृहिणीप्रतिबन्धग्रहग्रहीतविग्रह अपि ईर्ष्याशल्यवितुद्यमानमानस खल्वेष जीवस्तस्या परवीक्षणरक्षणाक्षणिक सन्न निसरति गेहात्, न स्वपिति रजन्या, त्यजति मातापितरौ, शिथिलयति बन्धुवर्गान्, न ददाति परमसुहृदोऽपि स्वगृहे ढौक, अवधीरयति धर्म्मकार्याणि, न गणयति लोकवचनीयता, केवल तस्या एव मुखमनवरतमीक्षमाणस्तामेव च परमात्ममूर्तिमिव योगी निवृत्ताशेषव्यापारो ध्यायन्नेवास्ते, तस्य च यदेव सा कुरुते तत्सुन्दर, यदेव सा भाषते तदेवानन्दकारि, यत्सा विचिन्तयति तदेवेङ्गिताकारैर्विज्ञायासौ सम्पादनार्हं मन्यते । एवञ्चाकलयति मोहविडम्बितेन मनसा यदुत—इय ममानुरक्ता हितकारिणी, न चान्येदृशी सौन्दर्यौदार्यसौभाग्यादिगुणकलाप-कलिता जगति विद्यते। अथ कदाचित्ता मातेति भगिनीति [देवतेत्यपि मु] मन्यमान परो वीक्षते ततोऽसौ मन्द मोहात् क्रुध्यतीव, विह्वलीभवतीव, मूर्च्छतीव, म्रियत इव कि करोमीति न जानीते । अथ सा वियुज्यते, म्रियते वा, ततोऽसावप्याक्रन्दति, परिदेवते, म्रियते वा । अथ सा कथञ्चिद्दुःशीलतया परपुरुषचारिणी स्यात् परपुरुषा वा बलात्ता समाक्रम्य गृह्णीयु, ततोऽसौ महामोहविह्वलो यावज्जीव हृदयदाहेन जीर्यते, प्राणैर्वा वियुज्यते दुःखासिकातिरेकेणेति । तदेवमेकैकवस्तुप्रतिबन्धबद्धहृदयोऽय जीवो दुःखपरम्परामासादयति, तथापि विपर्यस्ततया तद्रक्षणप्रवणमना सर्वथा शङ्कते ममेदमय हरिष्यतीति ।

1 मार्त्तध्यानेन प्र । 2 नास्ति प्रत्यन्तरे । 3 भातुष्ट प्र । 4 न विज्ञपयति प्र । 5 तिलङ्घयति मु । 6 व्याघातचेतन प्र ।

### जीवस्याऽतृप्ति

यथा च तस्य रोरस्य तेन कदन्नेनाटरपूर पूरितस्यापि न तृप्ति मपद्यत प्रत्युन प्रतिक्षण सुतरा बुभुक्षाऽभिवर्धत इत्युक्त, तथाऽस्यापि जीवस्यानेन धनविषयकलत्रादिना कदन्नप्रायेण पूर्यमाणस्यापि नाभिलापविच्छेद, किन्तर्हि? गाढतरमभिवर्द्धते तत्तर्ष । तथाहि—›यदि कथञ्चिद् द्रविणशत सम्पद्यते तत सहस्रमभिवाञ्छति, अथ तदपि सञ्जायते ततो लक्षमाकाङ्क्षति, तत्सम्पत्तावपि कोटीमभिलषति, तल्लाभे राज्य प्रार्थयति, अथ राजा जायते ततश्चक्रवर्तित्व मृगयते, तत्सभवेऽपि विबुधत्व–मन्विच्छति । अथ देवत्वमप्यास्कन्देत्तत शक्रत्वमन्वेषयते, अथेन्द्रतामपि लभते ततोऽप्युत्तरोत्तरकल्पाधिपतित्वपिपासापर्यासितचेतसो नास्त्येवास्य जीवस्य मनोरथपरिपूर्त्ति । यथाहि—›गाढग्रीष्मे समन्ताद्दवदाहतापितशरीरस्य पिपासाभिभूतचेतनस्य मूर्च्छया पतितस्य कस्यचित्पथिकस्य तत्रैव स्वप्नदर्शने सुबहून्यपि प्रवलकल्लोलमालाकुलानि महाजलाशयकदम्बकानि पीयमानान्यपि न तर्षापकर्षक मनागपि सम्पादयन्ति तथाऽस्यापि जीवस्य धनविषयादीनि, तथाहि—›अनादौ ससारे विपरिवर्तमानेनानन्तश प्राप्तपूर्वा देवभवेषु निरुपचरितशब्दाद्युपभोगा, आसादितान्यनन्तान्यनर्घेयरत्नकूटानि, विलसित खण्डितरतिविभ्रमै सह विलासिनीसार्थे, क्रीडित त्रिभुवनातिशायिनीभिर्नानाक्रीडाभि, तथाऽप्यय जीवो महाबुभुक्षाक्षामोदर इव शेषदिनभुक्तवृत्तान्त न किञ्चिज्जानाति, केवल तदभिलाषेण शुष्यतीति ।

### अर्थकामविकारा

यत्तूक्त– तत्कदन्न तेन द्रमकेन लाल्येन भुक्त जीर्यति, जीर्यमाण पुनर्वातविसूचिका विधाय त गर पीडयति इति तदेव योजनीयम्→ यदा रागादिपरीतचित्तोऽयं जीवो धनविषयकलत्रादिक कदन्नकल्प स्वीकरोति तदाऽस्य कर्मसञ्चयलक्षणमजीर्णं सम्पद्यते, ततश्च यदा तदुदयद्वारेण जीर्यति तदा नारकतिर्यङ्नरामरभवभ्रमणलक्षणा वातविसूचिका विधायन जीव नितरा कदर्थयति, यथा च तत्कदन्न तस्य सर्वरोगाणा निदान पूर्वोत्पन्नरोगाणा चाभिवृद्धिकारणमत्यर्थमभिहित, तथेदमपि रागग्रस्त चित्तेनानेन जीवेनोपभुज्यमान विषयादिक महामोहादिलक्षणाना प्रागुपवर्णिताना समस्तरोगाणा भविष्यता कारण, पूर्वनिर्वर्णिताना[1] पुनरभिवृद्धिहेतुभूत वर्त्तते ।

### जीवस्य बुद्धिविपरीतता

यथा च स रोर तदेव कुभाजन चारु मन्यते, स्वादुभोजनास्वाद तु स्वप्नान्तेऽपि वराको नोपलभत इत्युक्त तथाऽयमपि जीवो महामोहग्रस्तचेतोवृत्तितया यदिदमशेषदोषराशिदूषितमुपवर्णितस्थित्या विषयधनादिक तदेवातिसुन्दरमात्महितं च चेतसि कल्पयति, यत्पुन पारमार्थिक स्वाधीननिरतिशयाऽऽनन्दसन्दोहदायक महाकल्याणभूतसच्चारित्ररूप परमान्न, तदय वराको महामोहनिद्रातिरोहितसद्विवेकलोचनयुगलो[2] न कदाचिदासादयति, तथाहि—›यद्ययमनादौ भवभ्रमणे पूर्वमेव तत् क्वचिदलप्स्यत, ततोऽशेषक्लेशराशिविच्छेदलक्षणमोक्षाऽवाप्ते [प्ति मु], नेयन्त काल यावत्ससारगहने पर्यटिष्यत्, यतश्चायमद्यापि बभ्रमीति ततो नानेन मदीयजीवेन सच्चरणरूप सद्भोजन प्रागवाप्तमिति निश्चीयते ।

### अचरमावर्त्ते जीवस्य समग्रयोनिस्थाने परिभ्रमणम्

यत्पुनरभ्यधायि यथा तददृष्टमूलपर्यन्त नगरमुच्चावचेषु गहेषु त्रिकचतुष्कचत्वरादिषु नानारूपासु च रथ्यासु पर्यटतोऽनवरतमश्रान्तचेतसाऽनेन रोरेणानन्तश परावर्तितम् इति, तदपि सर्वमत्र समान विज्ञेय, यतोऽमुनापि जीवेनाऽनादितया कालस्य भ्रमताऽनन्तपुद्गलपरावर्त्ता पर्यन्त नीता। यथा च तस्य 'भ्रमता द्रमकस्य तत्र नगरे न ज्ञायते कियान् कालो लङ्घित इत्युक्त तथा जीवभवभ्रमणकालकलनमपि न प्रतीतिगोचरचारितामनुभवति, निरादितया तत्परिच्छेदस्य कर्त्तुमशक्तेरिति । तदवमत्र ससारनगरोदरे मदीयजीवरोरोऽय कुविकल्पकुतर्ककुतीर्थिकलक्षणैर्दुर्दान्तडिम्भसघातैस्तत्त्वाभिमुख्यरूपे शरीरे विपर्याससपादनलक्षणया ताडनया प्रतिक्षण ताड्यमानो महामोहादिरोगव्रातग्रस्तशरीरस्तद्वशेन नरकादियातनास्थानेषु महावेदनोदयद[3]लितस्वरूपोऽत एव विवेकविमलीभूतचेतसा कृपास्थान पौर्वापर्यपर्यालोचनविकलान्त करणतया तत्त्वाववोधविप्रकृष्टोऽत एव प्राय सर्वजीवेभ्यो जघन्यतमोऽत एव धनविषयादिरूपकदन्नदुराशापाशवशीकृत, कथञ्चित्तल्लेशलाभतुष्टोऽपि तेनाऽतृप्तचेतास्तदुपार्जनवर्द्धन–सरक्षणप्रतिबद्धान्त करणस्तद्द्वारेण च गृहीतनिविडगुरुतराष्टप्रकारकर्मभाररूपाऽनिष्ठितापथ्यपाथेयस्तदुपभोगद्वारेण विवर्द्धमान–

---

1 पूर्वनिवर्तिताना प्र । 2 लोचनात्कदाप्यदा प्र । 3 दयादभिलिप्तस्या प्र ।

रागादिरोगगणपीडितस्तथापि विपर्यस्तचित्ततया तदेवानवरत भुञ्जानोऽप्राप्तसच्चारित्ररूपपरमान्नाऽऽस्वादोऽरघट्टघटी-यन्त्रन्यायेनाऽनन्तपुद्गलपरावर्त्तान् समस्तयोनिस्थानास्कदनद्वारेण पर्यटित इति ।

## विवक्षात कालनानात्वम्

अधुना पुनरस्य यत्सम्पन्न तदभिधीयते । इह च–त्रिकालविषयतयाऽस्य व्यतिकरस्य विवक्षया समस्तकालाभिधायिभिरपि प्रत्ययैरत्र सर्वत्रापि कथाप्रबन्धे निर्देश सङ्गतो द्रष्टव्य, यतो विवक्षया कारकवत्कालोऽपि वस्तुस्थित्यैकस्वरूपेऽपि वस्तुनि नानारूप प्रयुक्तो दृष्टोऽभीष्टश्च शब्दविदा, यथा→योऽय मार्गो गन्तव्य आ पाटलिपुत्रात् तत्र कूपोऽभूदभवच्च, वभूव, भविष्यति, भवितेति वा, एते सर्वेऽपि कालनिर्देशा एकस्मिन्नपि कूपाख्ये वस्तुनि विवक्षावशेन साधवो भवन्तीत्यलम-प्रस्तुतविस्तरेणेति ।

## जिनेश्वरस्य सुस्थितनृपता

तत्र योऽसौ तत्स्वभावतया समस्तभूतसंघातात्यन्तवत्सलहृदयः प्रख्यातकीर्त्तिस्तस्मिन्नगरे सुस्थिताभिधानो महानरेन्द्रो दर्शित, स इह परमात्मा, जिनेश्वरो, भगवान्, सर्वज्ञो विज्ञेय । स एव हि प्रलीनाऽशेषक्लेशराशितयाऽनन्तज्ञानदर्शनवीर्यतया निरुपचरितस्वाधीननिरतिशयानन्तानन्दसन्दोहस्वरूपतया च परमार्थेन सुस्थितो भवितुमर्हति, न शेषा अविद्यादिक्लेशराशिवशवर्तिन अतिदुस्थितत्वात्तेषाम्, स एव च भगवान् समस्तभूतसघातस्यापि सूक्ष्मरक्षणोपदेशदायितयाऽक्षेपेण मोक्षप्रापणप्रवणप्रवचनार्थप्रणेतृतया च स्वभावेनैवातिवत्सलहृदय, स एव च प्रख्यातकीर्ति, निशेषामरनरविसरनायकै पुरुहूतचक्रवर्त्यादिभि यत स एव प्रशस्तमनोवाक्कायव्यापारपरायणैरनवरतमभिष्टूयते, अत एव चासावेवाविकल महाराजशब्दमुद्वोढुमर्हति ।

## स्वकर्मविवरो द्वारपाल

यथा च स रोर 'पर्यटंस्तस्य मन्दिरद्वारं कथञ्चित्प्राप्त', तत्र च स्वकर्मविवरो नाम द्वारपालस्तिष्ठति, तेन च कृपालुतया तत्र राजभवने प्रवेशित इत्युक्त तदेवमिह योजनीयम्→तत्र यदाऽस्य जीवस्याऽनादिमता यथाप्रवृत्तसञ्ज्ञेन करणेन कथञ्चिद् घर्षणघूर्णनन्यायेनायुष्कवर्जिताना सप्ताना कर्मप्रकृतीना स्थिते समस्ता अपि सागरोपमकोटीकोटय पर्यन्तवर्त्तिनीमेका सागरोपमकोटीकोटि विहाय क्षयमुपगता भवन्ति, तस्या अपि कियन्मात्र क्षीण, तदाऽय जीवस्तस्याऽऽत्मनृपते सम्बन्धि *यदेतदाचारादिदृष्टिवादपर्यन्त द्वादशाङ्ग परमागमरूप* तदाधारभूतचतुर्वर्णश्रीश्रमणसङ्घलक्षण वा मन्दिर तस्य द्वारि प्राप्तोऽभिधीयते, तत्र च प्रवेशनप्रवण – स्वस्य=आत्मीयस्य, कर्मणो विवरो=विच्छेद =स्वकर्मविवर स एव यथार्थाभिधानो द्वारपालो भवितुमर्हति, अन्येऽपि रागद्वेषमोहादयस्तत्र द्वारपाला विद्यन्ते, केवल तेऽस्य जीवस्य प्रतिवधका, न पुनस्तत्र प्रवेशका, तथाहि→अनन्तवारा प्राप्त प्राप्तोऽय जीवस्तैर्निराक्रियते, यद्यपि क्वचिदवसरे तत्र तेऽपि प्रवेशयन्त्येन तथापि ते प्रवेशितो न परमार्थत प्रवेशितो भवति, रागद्वेषमोहाद्याकुलितचित्ता यद्यपि यतिश्रावकादिचिह्ना क्वचिद्भवन्ति, तथापि ते सर्वज्ञशासनभवनाद् बहिर्भूता द्रष्टव्या इत्युक्त भवति । ततश्चाय जीवस्तेन स्वकर्मविवरद्वारपालेन तावती भुव प्राप्तो ग्रन्थिभेदद्वारेण तत्र सर्वज्ञशासनमन्दिरे प्रवेशित इति युक्तमभिधीयते।

## सर्वज्ञशासनस्य राजमन्दिरता

यथा च तेन कथानकोक्तेन तद्राजभवनमदृष्टपूर्वमनन्तविभूतिसपन्न राजामात्यमहायोधनियुक्तकतलवर्गिकैरधिष्ठित स्थविराजनसनाथं सुभटसंघाताकीर्णं विलसद्विलासिनीसार्थं निरुपचरितशब्दादिविषयोपभोगविमर्दसुन्दरं सततोत्सव दृष्ट तथाऽनेनापि जीवेन वज्रवद्दुर्भेदोऽभिन्नपूर्वश्च ससारे य क्लिष्टकर्मग्रन्थिस्तद्भेदद्वारेण स्वकर्मविवरप्रवेशितेनेद सर्वज्ञशासनमन्दिर तथाभूतविशेषणमेव सकलमवलोक्यते । तथाहि→दृश्यन्तेऽत्र मौनीन्द्रे प्रवचनेऽपास्ताज्ञानतमपटलप्रसरा विविधरत्ननिकराकारधारका विलसदमलालोकप्रकाशितभुवनभवनोदरा ज्ञानविशेषा । तथा विराजन्तेऽत्र भागवते प्रवचने सम्पादितमुनिपुङ्गवशरीरशोभनया मनोहरमणिखचितविभूषणविशदाकारता दधाना खल्वामर्शौषध्यादयो नानर्द्धिविशेषा । तथा कुर्वन्ति सुजनहृदयाक्षेपमत्र जिनमतेऽतिसुन्दरतया विचित्रवस्त्रविस्ताराऽऽकारवहुविधतपोविशेषा । तथा जनयन्ति चित्ताह्लादातिरेकमत्र पारमेश्वरे मते लोलोज्ज्वलाशुकोल्लोचावलम्बिमौक्तिकावचूलरूपतामाविभ्राणा रचनासौन्दर्ययोगितया चरणकरणरूपा मूलोत्तरगुणा तथाऽत्र जैनेन्द्रदर्शने वर्त्तमानाना धन्याना वक्त्रसौष्ठवगन्धोत्कर्षचित्तानन्दातिरेकमुदारताम्वूलसन्निभ सत्यवचनम् । तथा व्याप्नुवन्ति स्वसौरभोत्कर्षेण दिक्चक्रवालमत्र भागवते मते मुनिमधुकरनिकरप्रमोदहेतुतया विचित्रभक्तिविन्यासग्रथिततया मनोहारिकुसुम-

प्रचयाकारधारकाण्यष्टादशशीलाङ्गसहस्राणि । तथा निर्वापयति मिथ्यात्वकषायसन्तापानुगतानि भव्यसत्त्वशरीराणि गोशीर्षचन्दनादिविलेपनसन्दोहदेश्यता दधानमत्र पारमेश्वरदर्शने सम्यग्दर्शनम् ।

### सर्वज्ञशासनस्थितजीवस्वरूपम्

यतश्चात्र सर्वज्ञोपज्ञे सज्ज्ञानदर्शनचारित्रप्रधाने प्रवचने वर्त्तन्ते ये जीवास्तैर्महाभागधेयै स्थगितो नरकान्धकूप, भग्नस्तिर्यग्गतिचारकावास, निर्दलितानि कुमानुषत्वदु खानि, विमर्दिता कुदेवत्वमानससन्तापा, प्रलय नीतो मिथ्यात्ववेताल, निष्पन्दीकृता रागादिशत्रव, जरितप्राय कर्मनिचयाऽजीर्णम्, अपकर्णिता जराविकारा, अपहस्तित मृत्युभय, करतलवर्त्तीनि (सन्ति तानि स्वर्गाऽपवर्गाशातानि प्र) सपादितानि स्वर्गाऽपवर्गसुखानि । अथवाऽवधीरितानि तैर्भगवन्मतस्थैर्जीवै सासारिकसुखानि, गृहीतो हेयबुद्ध्या समस्तोऽपि भवप्रपञ्च, कृत मोक्षैकतानमन्त करणम् । न च तेषा परमपदप्राप्ति प्रति व्यभिचाराशङ्का, न *ह्युपाय उपेयव्यभिचारी, उपायश्चाप्रतिहतशक्तिक परमपदप्राप्ते सज्ज्ञानदर्शनचारित्रात्मको मार्ग*, स च प्राप्तोऽस्माभिरिति । सञ्जाते च तल्लाभे तेषामिति निश्चिता बुद्धि→नास्त्यत पर प्राप्तव्यम्, इत्याकलय्य विहित प्रतिपूर्णमनोरथ चेत, अत एव तेषा पारमेश्वरमतवर्त्तिना [जन्तूना मु] नास्त्येव शोको, न विद्यते दैन्य, प्रलीनमौत्सुक्य, व्यपगतोऽरतिविकार, जुगुप्सनीया जुगुप्सा, असम्भवी चित्तोद्वेग, अतिदूरवर्त्तिनी तृष्णा, समूलकाषकषित सन्त्रास । किन्तर्हि? तेषा मनसि वर्त्तते धीरता, कृतास्पदा गम्भीरता, अतिप्रबलमौदार्य, निरतिशयोऽवष्टम्भ, स्वाभाविकप्रशमसुखामृतानवरतास्वादनजनितचित्तोत्सवाना च तेषा प्रबलरागकलाविकलानामपि प्रवर्द्धते रतिप्रकर्ष, विनिहतमदगदानामपि विजृम्भते चेतसि हर्ष, समवासीचन्दनकल्पानामपि न सम्भवत्यनन्तानन्दविच्छेद । ततश्च जैनेन्द्रशासनस्थायिनो भव्यसत्त्वा स्वाभाविकहर्षप्रकर्षामोदितहृदयतया गायन्ति प्रतिक्षण पञ्चप्रकारस्वाध्यायकरणव्याजेन, नृत्यन्त्याचार्यादिदशविधवैयावृत्त्यानुष्ठानद्वारेण, वल्गन्ति जिनजन्माभिषेकसमवसरणपूजनयात्रादिसम्पादनव्यापारपरतया, उत्कृष्टसिंहनादादीनि चित्तानन्दकार्याणि दर्शयन्ति परप्रवादिनिराकरणचातुर्यमाविभ्राणा क्वचिदवसरे, आनन्दमर्द्दलसन्दोहान् वादयन्त्येव भगवतामवतरणजन्मदीक्षाज्ञाननिर्वाणलक्षणेषु पञ्चसु महाकल्याणककालेषु, तस्मादिद मौनीन्द्र प्रवचन सततानन्द प्रलीनाशेषचित्तसन्ताप, न चानेन जीवेन क्वचिदपीद प्राप्तपूर्व भावसारतया, भवभ्रमणसद्भावादेवेद निश्चीयते, *भावसारमेतल्लाभे हि प्रागेव मोक्षप्राप्ति सपद्येत ।* तदनेन यत्तद्राजभवनस्य कथानकोक्तम्य विशेषणद्वयमकारि यदुत 'अदृष्टपूर्वमनन्तविभूतिसम्पन्नम् इति' तदस्यापि सर्वज्ञशासनमन्दिरस्य दर्शितम् ।

### आचार्योपाध्यायगीतार्थाना राजामात्यमहायोधोपमा

साम्प्रत यदुक्त 'राजामात्यमहायोधनियुक्तकतलवर्गिकैरधिष्ठितम् इति' तदस्यापि विशेषण निदर्श्यते→तत्रेह भगवच्छासनमन्दिरे *राजान सूरयो विज्ञेया*, त एव हि यतोऽन्तर्ज्वलता महातपस्तेजसा प्रलयीभूतरागादिशत्रुवर्गा बहिश्च प्रशान्तव्यापारतया जगदानन्दहेतव, त एव च गुणरत्नपरिपूर्णलोकमध्ये प्रभुत्वयोगितया निरुपचरितराजशब्दवाच्या । तथा *मन्त्रिणोऽत्रोपाध्याया* द्रष्टव्या, यतस्ते विदितवीतरागागमसारतया साक्षाद्भूतसमस्तभुवनव्यापारा, प्रज्ञयाऽवज्ञातरागादिवैरिकसङ्घा, राहस्यिकग्रन्थेषु कौशलशालितया समस्तनीतिशास्त्रज्ञा इत्युच्यन्ते, त एव च सुबुद्धिविभवपरितुलितभुवनतया अविकलममात्यशब्दमुद्वहन्तो राजन्ते, तथा *महायोधा* खल्वत्र *गीतार्थवृषभा* दृश्या, यतस्ते सत्त्वभावनाभावितचित्ततया न क्षुभ्यन्ति देविकाद्युपसर्गेषु, न बिभ्यति घोरपरीषहेभ्य, किम्बहुना? वैवस्वतसङ्काशमपि परमुपद्रवकारिण पुरोऽभिवीक्ष्य न त्रासमुपगच्छन्ति, अत एव ते गच्छकुलगणसङ्घाना द्रव्यक्षेत्रकालापत्तिमग्नाना[1] परम्पराकरणद्वारेण निस्तारकारिण इति हेतोर्महायोधा प्रोच्यन्ते ।

### गणचिन्तकसाधूनां नियुक्तकतलवर्गिकोपमा

*नियुक्तका* पुनरत्र गणचिन्तका ग्राह्या, त एव यतो बालवृद्धग्लानप्राघूर्णकाद्यनेकाकारासहिष्णुपरिपाल्यपुरुषसमाकुला कुलगणसङ्घरूपा पुरकोटीकोटीर्गच्छरूपाश्चासङ्ख्येयग्रामाकारान् गीतार्थतयोत्सर्गापवादयो स्थानविनियोगनिपुणा प्रासुकैषणीयभक्तपानभैषज्योपकरणोपाश्रयसपादनद्वारेण सकलकाल निराकुला पालयितु क्षमा, त एव चाविपरीतस्थित्या आचार्यनियोगकारितया नियुक्तकध्वनिनाऽभिधेया भवितुमर्हन्ति । *तलवर्गिका* पुनरत्र [4]जैनेन्द्रशासनभवने *सामान्यभिक्षवो* ज्ञातव्या, यतस्ते दत्तावधाना सपादयन्त्याचार्यादेश, कुर्वन्त्युपाध्यायाज्ञा, विदधति गीतार्थवृषभविनय, न लङ्घयन्ति गणचिन्तकप्रयुक्तमर्यादा, नियोजयन्त्यात्मान गच्छकुलगणसङ्घप्रयोजनेषु, स्वजीवितव्ययेनापि निर्वहन्ति तेषामेव गच्छादीनामशिवाद्यपायव्यतिकरेषु, अत एव ते

1 लापपतिमग्नाना मु । 2 परपरा प्र । 3 असङ्ख्यात प्र । 4 जिनेन्द्र प्र ।

शूरताभक्तताविनीततास्वभावादल तलवर्गिकशब्दवाच्या । यतश्चेद मौनीन्द्रशासनभवनमनुज्ञात सूरीणा[1], चिन्त्यते सदुपाध्यायै, रक्ष्यते गीतार्थवृषभै, परिपुष्टि नीयते गणचिन्तकै, विहितनिश्चिन्तसमस्तव्यापार सामान्यसाधुभिरतस्तैरधिष्ठित-मित्युच्यते ।

## आर्याणा स्थविरोपमा

साम्प्रत यदुक्त 'स्थविराजनसनाथम्' इति' तदत्रापि जिनसङ्घसदने योजनीयम्, तत्रेह *स्थविरा* जना *खल्वार्यालोका* मन्तव्या, तथाहि ते तत्र [राजमन्दिरे] प्रमत्तप्रमदालोकनिवारणपरायणा निवृत्तविषयासङ्गाश्च व्यावर्णिता, एतच्चोभयमपि निरुपचरितमार्यालोकानामेव घटामाटीकते, यतस्त एव धर्मकार्येषु प्रमादपरतन्त्रतया सीदन्त श्रमणोपासकललनालो-कमात्मीयशिष्यकावर्गं च परोपकारकरणव्यसनितया भगवदागमाभिहित महानिर्जराकारण साधर्मिकवात्सल्य चानुपालयन्त स्मारणवारणचोदनादानद्वारेण कापथप्रस्थितमनवरत निवारयन्ति, सन्मार्गे चावतारयन्ति, त एव च विदितविषयविषविषमविपाकतया विषयेभ्यो निवृत्तचित्ता सन्तो रमन्ते सयमे, क्रीडन्ति तपोविशेषविधानै[2], रज्यन्तेऽनारतस्वाध्यायकरणे, न सेवन्ते प्रमादवृन्द, समाचरन्ति निर्विचारमाचार्यादेशमिति ।

## श्रमणोपासकाना सुभटोपमा

यच्चोक्तम् 'सुभटसंघाताकीर्णं तद्राजभवनम्' इति' तेऽत्र भगवच्छासने *सुभटसघाता श्रमणोपासकसमूहा* द्रष्टव्या, यतस्त एव समस्तमपीद व्याप्नुवन्त्यतिप्रचुरतया, तथाहि→असख्येया विद्यन्ते देवेषु, सख्येया सन्ति मनुजेषु, भूरिप्रकारा सङ्गीतास्ते तिर्यक्षु, बहव सन्ति नरकेष्विति । त एव च शौर्योदार्यगाम्भीर्ययोगितया भगवच्छासनप्रत्यनीकाना मिथ्यात्वाध्मातसत्त्वरूपाणा योधसघातानामुच्चाटनचातुर्य विभ्राणा निरुपचरितप्रवृत्तिनिमित्त सुभटशब्द स्वीकुर्वते । यतश्चैते सदा ध्यायन्ति सर्वज्ञमहाराज, समाराधयन्ति सूरिराजवृन्दानि, समाचरन्त्युपाध्यायामात्योपदेश, प्रवर्तन्ते गीतार्थवृषभमहायोधवचनेन सर्वधर्मकार्येषु, वितरन्ति विधिना सदात्माऽनुग्रहधिया नियुक्तस्थानीयेभ्य साधुवर्गोपग्रहनिरतेभ्यो गणचिन्तकेभ्यो वस्त्रपात्रभक्तपानभेषजा-सनसस्तारकवसत्यादिकम् । नमस्कुर्वन्ति विशुद्धमनोवाक्कायैस्तलवर्गिककल्पमद्यदीक्षितादिभेदभिन्न सकलमपि सामान्यसाधुजन, वन्दन्ते भक्तिभरनिर्भरहृदया स्थविराजनस्थानीयमार्यालोक, प्रोत्साहयन्ति समस्तधर्मकार्येषु विलासिनीसार्थस्थानीय श्राविकाजन, अनुशीलयन्ति सकलकाल जिनजन्माभिषेकनन्दीश्वरवरद्वीपजिनयात्रामर्त्यलोकपर्वस्नात्रादिलक्षणानि तत्र जिनशासनसदने नित्यनैमित्तिकानि, किम्बहुनोक्तेन? ते हि भावत सर्वज्ञशासन विमुच्य नान्यत्किञ्चित्पश्यन्ति, नाकर्णयन्ति, न जानन्ति, न श्रद्दधते, न रोचयन्ति, नानुपालयन्ति, किन्तर्हि? तदेव सकलकल्याणकारण मन्यन्ते इति । अतोऽतिभक्ति[क्त मु] तया सर्वज्ञमहाराजादीनामभिप्रेता इति कृत्वा तस्यैव मन्दिरस्य मध्यवासिनो विनीतमहर्द्धिकमहाकुटुम्बिककल्पास्ते द्रष्टव्या, अन्यादृशा कुतस्तत्र भवने वास इति? ।

## श्राविकाणा विलासिन्योपमा

तथा यदुक्त 'विलसद्विलासिनीसार्थं तन्नृपतिगृहम्' इति तदत्रापि मौनीन्द्रदर्शने दर्शनीय, तत्रेह *विलसद्विलासिनीसार्था* सम्यग्दर्शनधरणाणुव्रतचरणजिनसाधुभक्तिकरणपरायणतया विलासवत्य *श्राविकालोकसघाता* विज्ञेया, यतश्च ता अपि श्रमणोपासिका श्रमणोपासकवत् सर्वज्ञमहाराजाद्याराधनप्रवणान्त करणा सत्य कुर्वन्ति सदाऽऽज्ञाऽभ्यास, वासयन्ति दृढतरमात्मान दर्शनेन, धारयन्त्यणुव्रतानि, गृह्णन्ति गुणव्रतानि, अभ्यस्यन्ति शिक्षापदानि, समाचरन्ति तपोविशेषान्, रमन्ते स्वाध्यायकरणे, वितरन्ति साधुवर्गाय स्वानुग्रहकरमुपग्रहदान, हृष्यन्ति गुरुपादवन्दनेन, तुष्यन्ति सुसाधुनमस्करणेन, मोदन्ते साध्वीधर्मकथासु, पश्यन्ति स्वबन्धुवर्गादधिकतर साधर्म्मिकजनमुद्विजन्ते साधर्म्मिकविकलदेशवासेन, न प्रीयन्तेऽसविभागितभोगेन[3] ससार-सागरादुत्तीर्णप्रायमात्मान मन्यन्ते भगवद्धर्माऽऽसेवनेनेति, तस्मात्ता अपि तस्य मौनीन्द्रप्रवचनमन्दिरस्य मध्ये पूजोपकरणाकारास्तेषामेव श्रमणोपासकाना प्रतिबद्धा मुत्कला वा निवसन्ति, या पुनरेवविधा न स्युस्ता यद्यपि कथञ्चित्तन्मध्या[4]ध्यासिन्यो दृश्येरन् तथाऽपि परमार्थतो बहिर्भूता विज्ञेया[5] । 'भावग्राह्य हीद भागवत[6]शासनभवन, नात्र बहिश्छायया[7] प्रविष्ट परमार्थत प्रविष्टो भवति' इति विज्ञेयम् ।

1 सूरिणा प्र । 2 तपोविधानविशेषै प्र । 3 सविभागसभोगेन प्र । 4 ध्यासिनो प्र ।
5 द्रष्टव्या प्र । 6 वत शा प्र । 7 बहि स्थो यथा प्र ।

शासनस्थाना निरुपचरितविषयभोग

तथा–यथा 'तद्राजभवन निरुपचरितशब्दादिविषयोपभोगविमर्द्दसुन्दर' तथेदमपि विज्ञेय, तथाहि→सर्वेऽपि देवेन्द्रास्तावदेतन्मध्यपातिनो¹ वर्त्तन्ते, ये चान्येऽपि महर्द्धिकामरसघातास्तेऽपि प्रायो न भगवन्मतभवनाद्बहिर्भूता भवितुमर्हन्ति, ततश्च तथाविधविबुधाधारभूतस्यास्य निरुपचरितशब्दादिविषयोपभोगविमर्द्दसुन्दरता न दुरुपपादा ।

पुण्यानुबन्धिपुण्यफलम्

तद्वर्णनेन चैतल्लक्षणीय, यदुत→भोगास्तावत्पुण्योदयेन संपद्यन्ते, किन्तु तदेव पुण्य द्विविध–*पुण्यानुबन्धि पापानुबन्धि* च । तत्र ये पुण्यानुबन्धिपुण्योदयसम्पाद्या शब्दाद्युपभोगास्त एव सुसस्कृतमनोहरपथ्यान्नवत्सुन्दरविपाकतया निरुपचरित–शब्दादिभोगवाच्यता प्रतिपद्यन्ते, ते हि भुज्यमाना स्फीततरमाशय सपादयन्ति, ततश्चोदाराभिप्रायोऽसौ पुरुषो न तेषु प्रतिबन्ध विधत्ते, ततश्चासौ तान् भुञ्जानोऽपि निरभिष्वङ्गतया प्राग्बद्धपापपरमाणुसञ्चयं शिथिलयति, पुनश्चाभिनव शुभतरविपाक पुण्यप्राग्भारमात्मन्याधत्ते, स चोदयप्राप्तो भवविरागसम्पादनद्वारेण सुखपरम्परया तथोत्तरक्रमेण मोक्षकारणत्व प्रतिपद्यत इति हेतो सुन्दरविपाकास्तेऽभिधीयन्ते ।

पापानुबन्धिपुण्यफलम्

ये तु पापानुबन्धिपुण्योदयजनिता शब्दादिविषयानुभवास्ते सद्योघातिविषोपदिग्धमोदकवद्दारुणपरिणामतया तत्त्वतो भोगा एव नोच्यन्ते, यतस्ते मरुमरीचिकाजलकल्लोला इव तदुपभोगार्थं धावत पुरुषस्य विफलश्रमसम्पादनेन गाढतर तृष्णामभिवर्द्धयन्ति, न तु सपद्यन्ते, कथञ्चित्सम्प्राप्ता अपि ते भुज्यमाना क्लिष्टमाशय जनयन्ति, ततश्च तुच्छाभिप्रायोऽसौ पुरुषो²ऽन्धीभूतबुद्धिस्तेषु नितरा प्रतिबन्ध विधत्ते, ततस्तान् कतिपयदिवसभाविनो भुञ्जानस्तत्सम्पादक प्रागुपनिबद्ध पुण्यलवं व्यवकलयति, पुनश्चोदग्रगुरुतरपापभरमात्मन्याधत्ते, ततश्च तेनोदयप्राप्तेनानन्तदु खजलचराकुल ससारसागरमनन्तकाल स जीव परावर्त्तते, तेन ते पापानुबन्धिपुण्यसम्पाद्या शब्दादयो दारुणपरिणामा इत्यभिधीयन्ते ।

अनुषङ्गतो भोगप्राप्ति

येषा तु ससारोदरविवरवर्त्तिना जन्तुसघातानामवश्यतया ये शब्दादिविषयोपभोगा सुन्दरपरिणामास्ते नियमतो भगवच्छासनमन्दिरादुक्तन्यायेन न बहिर्भूता वर्त्तन्ते, तस्मादन्यैरपि प्रेक्षापूर्वकारिभिरक्षेपेण मोक्षप्रापकेऽत्र भगवन्मन्दिरे भावत स्थेय, अत्र स्थितानामनुषङ्गत एव तेऽपि सुन्दरतरा भोगादय सपद्यन्ते, न तेषामपि सम्पादकोऽन्यो हेतुरित्युक्त भवति, अत एव चेद परमेश्वरदर्शनसदनमप्रतिपातिसुखपरम्पराकारणतया सततोत्सवमभिधीयते । तदेव यथा यावद्विशेषणकलापयुक्त तद्राजमन्दिर तेन कथानकोक्तेनावलोकित तथा तावद्विशेषणकलापोपेतमेवाऽनेनापि जीवेनेद सर्वज्ञशासनसदनमवलोकितमिति स्थितम् ।

जीवस्य जिनमतजिज्ञासा तद्दर्शनानन्दश्च

यथा च स कथानकोक्त सततानन्द तद्राजभवनमुपलभ्य किमेतदिति विस्मितश्चिन्तयति, न चासौ सोन्मादतया तद्विशेषगुणास्तत्त्वतो जानातीत्युक्त तथाऽयमपि जीव सर्वज्ञशासन सञ्जातकर्मविवर कथञ्चिदुपलभ्य किमेतदिति जिज्ञासते, न चाय मिथ्यात्वाशेरुन्मादकल्पैरनुवर्त्तमानैस्तस्यामवस्था³यामस्य जिनमतस्य ये विशेषगुणास्तास्तत्त्वतो जानीते ।

यथा च तस्य कथानकोक्तस्य तात्पर्यवशेन लब्धचेतस सतो हृदयाकूते परिस्फुरित यदुत–यदेतद्राजमन्दिर सकलाश्चर्यधामास्य स्वकर्मविवरद्वारपालस्य प्रसादेन मयाऽधुना दृश्यते लग्न, नूनमेतन्न मया कदाचिद् दृष्टपूर्वं, प्राप्तोऽहमस्य द्वारदेशे बहुश पूर्वं, केवल मम मन्दभाग्यतया येऽन्ये द्वारपाला पापप्रकृतयस्तत्राभूवस्तैरह प्राप्त प्राप्त कदर्थयित्वा निर्धाटित इति, तदेतत्सर्वं जीवेऽपि समान, तथाहि – भव्यस्य प्रत्यासन्नभविष्यद्भद्रस्य कथञ्चिदुपलभ्य सर्वज्ञशासनमविदिततद्गुणविशेषस्यापि मार्गानुसारितया भवत्येवविधोऽभिप्राय , यदुत–अत्यद्भुतमिदमर्हद्दर्शन, यतोऽत्र तिष्ठन्ति ये लोकास्ते सर्वेऽपि सुहृद इव बान्धवा इवैकप्रयोजना इव समर्पितहृदया इवैकात्मका इव परस्पर वर्त्तन्ते । तथाऽमृततृप्ता इव निरुद्वेगा इव निरौत्सुक्या इव सोत्साहा इव

---

1 वासिनो प्र । 2 °विशेषसुखसाध्या प्र । 3 मपि प्र ।

परिपूर्णमनोरथा इव समस्तजन्तुसघातहितोद्यतचेतसश्च सकलकाल दृश्यन्ते, तस्मात्सुन्दरमिदमद्य मया विज्ञात, न पूर्वं, विमर्शाभावात् । अन्यच्चाय जीवोऽनन्तवारा (रान् प्र)ग्रन्थिप्रदेश यावत्प्राप्तो न चानेन तद्भेदद्वारेण क्वचिदपि सर्वज्ञशासनमवलोकित, यतो रागद्वेषमोहादिभि क्रूरद्वारपालकल्पैर्भूयो भूयो निरस्त इति एतावताऽशेनेदमुपदर्शित, न पुनस्तस्यामवस्थायाममु विभागमद्याप्यय जीवो जानीते चिन्तयति वा ।

### भद्रकभाववर्त्तमानजीवव्यतिकर·

यथा च तस्य कथानकोक्तस्य पर्यालोचनपरायणवृत्ते सत पुनिरद परिस्फुरित, यदुत–येन मया पूर्वमिदं नयनानन्दकारि राजसदनं न दृष्ट, न चास्य दर्शनार्थं कश्चिदुपाय· प्राग्विहित· सोऽह सत्यं निष्पुण्यक एव, (तथाहि· प्र) कीदृशं राजमन्दिरमिति जिज्ञासामात्रमपि ममाधमस्य कदाचिदपि पूर्वं नासीत्, येन चानेन महात्मना स्वकर्मविवरद्वारपालेन कृपापरीतचेतसा भाग्यकलाविकलस्यापि ममेदं दर्शितं सोऽयं मे परमबन्धुभूतो वर्त्तते, एते च धन्यतमा जना येऽत्र राजमन्दिरे सदा निःशेषद्वन्द्वरहिताः प्रमुदितचेतसोऽवतिष्ठन्ते तदेतदपि समस्तमत्र जीवे योजनीय, तथाहि–शुभध्यानविशुध्यमानाध्यवसायस्यापि जीवस्य विवर्त्तते चेतसीद सर्वं सर्वज्ञदर्शनगोचर क्वचिदवसरे समवसरणदर्शनेन वा, जिनस्नात्रविलोकनेन वा, वीतरागबिम्बनिरीक्षणेन वा, शान्ततपस्विजनसाक्षात्करणेन वा, सुश्रावकसङ्गतेन वा, तदनुष्ठानप्रतिभासेन वा, द्रावितमिथ्यात्वतया मृदूभूतभावस्य, तथाहि–उत्प[उप मु]द्यते तदा तद्विचारेणास्य प्रीति, शोचति प्रागविचारकमात्मान, गृह्णाति मार्गोपदेशक[1] बन्धुबुद्ध्या बहु मन्यते सद्धर्मनिरतचित्ताश्चान्यलोकान् सद्भावनयेति, तदियता प्रपञ्चेन लघुकर्मण सन्मार्गाभ्यर्णवर्तिनोऽभिन्नकर्मग्रन्थेर्भिन्नकर्मग्रन्थेर्वा पुरस्कृतसम्यग्दर्शनस्य कियन्तमपि काल भद्रकभावे वर्त्तमानस्यास्य जीवस्य यो व्यतिकरो भवति स व्यावर्णित।

### नृपभूतजिनस्य दर्शनम्

तदनन्तरमिदानी सकलकल्याणाक्षेपकारणभूता परमेश्वरावलोकना प्राप्नुवतोऽस्य[2]य सपद्यते [प्र (तस्याया) मु], तत्र योऽसौ कथानकोक्तो रोरो लब्धचेतनो यावदित्थ विप्रकीर्णं चिन्तयति तावद् वृत्तान्तान्तरमपर महाराजावलोकनलक्षणमापतित तथेहापि यदाऽय जीव सञ्जातस्वकर्म्मलाघवतया सन्मार्गाभिमुखो भद्रकभावे वर्त्तते तदाऽस्य योग्यतया परमात्मावलोकनलक्षणोऽयमपरो वृत्तान्त सपद्यते[3] । तत्र योऽसौ सुन्दरे प्रासादशिखरे सप्तमे भूमिकातले निविष्टमूर्त्तिरधस्ताद्वर्त्तमानं तददृष्टमूलपर्यन्तं नगरं समस्त समस्तव्यापारकलापोपेतं सकलकालं समन्तान्निरीक्षमाण[4]स्तस्माद्बहिरपि सर्वत्राप्रतिहतदर्शनशक्ति· सततानन्दो लीलया ललमानो महानरेन्द्रो दर्शितः स इह निष्कलावस्थाया वर्तमान· परमात्मा भगवान् सर्वज्ञो विज्ञेय, स एव यतो मर्त्यलोकापेक्षया उपर्युपरिस्थायिन्यो भूमिकाकल्पा सप्तरज्जव तदात्मको यो लोकप्रासादस्तच्छिखरे वर्त्तते, स एव हि परमेश्वरो युगपदमु समस्तससारविस्तार विचित्रनगरव्यापाराकारमलोकाकाश च तद्बहिर्भागकल्प केवलालोकेन करतलगतामलकन्यायेनावलोकयति, स एव चानन्तवीर्यसुखपरिपूर्णतया सततानन्दो लीलया ललते, नापरो, भवगर्त्तमध्यपतितजन्तुलीलाललनस्य परमार्थतो विडम्बनारूपत्वात् ।

### भगवदनुग्रह·

यथा च स कथानकोक्तः तेन महाराजेन महारोगभराक्रान्ततया गाढबीभत्सदर्शन इतिकृत्वा करुणया विशेषेणावलोकित इत्युक्तं तदत्रैवं द्रष्टव्य–यदाऽयमात्मा निजभव्यत्वादिपरिपाकवशादेतावती कोटिमध्यारूढो भवति, तदाऽस्य भवत्येव भगवदनुग्रह, न तद्व्यतिरेकेण यतो मार्गानुसारिता सपद्यते, तदनुग्रहेणैव भवति भावतो भगवति बहुमानो, नान्यथा, स्वकर्मक्षयोपशमादीना शेषहेतूनामप्रधानत्वात्, ततोऽयमात्मा तस्यामवस्थाया वर्त्तमानोऽमुमर्थमाकलय्य भगवता विशेषेणावलोकित इत्युच्यते, स एव परमेश्वरोऽचिन्त्यशक्तियुक्ततया परमार्थकरणैकतानतया चास्य जीवस्य मोक्षमार्गप्रवृत्ते परमो हेतुरित्युक्त भवति, समस्तजगदनुग्रहप्रवण हि भगवतो[5] निष्कलमपि रूपमिति परिभावनीय, केवल तथापि तत् जीवभव्यता कर्म्मकालस्वभावनियत्यादिक च सहकारिकारणकलापमपेक्ष्य जगदनुग्रहे व्याप्रियते, तेन न यौगपद्येन समस्तप्राणिना ससारोत्तार इति, *आलोचनीयमेतदागमानुसारेणेति*, तस्माद्भवत्येव भाविकल्याणस्य भद्रकभावे वर्त्तमानस्यास्य जीवस्य भगवदवलोकना ।

---

1 मार्गाऽऽदेशक वञ्चकबु प्र। 2 यतसप प्र । 3 सपत्स्यते प्र । 4 क्षण कुर्वाण प्र । 5 भावतो प्र ।

## सूरिलक्षितजीवयोग्यता

यथा च ता महाराजदृष्टि तत्र रोरे निपतन्ती धर्मबोधकराभिधानो महानसनियुक्ता निरीक्षितवानित्युक्त तथा परमेश्वरावलोकना मज्जीवे भवन्ती धर्मबोधकरणशीलो *धर्मबोधकर* इति, यथार्थाभिधानो सन्मार्गोपदेशक सूरि, स निरीक्षते स्म, तथाहि–सद्ध्यानबलेन विमलीभूतात्मान परहितैकनिरतचित्ता भगवन्तो [ये मु] योगिन [ते मु] पश्यन्त्येव देशकालव्यवहितानामपि जन्तूना छद्मस्थावस्थायामपि वर्त्तमाना दत्तोपयोगा भगवदवलोकनाया योग्यता, पुरोवर्तिना पुन प्राणिना भगवदागमपरिकर्मितमतयोऽपि योग्यता लक्षयन्ति, तिष्ठन्तु विशिष्टज्ञाना इति, ये च मम सदुपदेशदायिनो भगवन्त सूरयस्ते विशिष्टज्ञाना एव, यत कालव्यवहितरनागतमेव तैर्ज्ञात समस्तोऽपि मदीयवृत्तान्त, स्वसवेदनससिद्धमेतदस्माकमिति ।

## सद्धर्माचार्यस्य मनोव्यथा समाधिश्च

यत्पुन तेन धर्मबोधकरेण साकूतमानसेन सता तदनन्तर चिन्तित यदुत–किमेतदाश्चर्य मयाऽधुना दृश्यते? यतोऽय सुस्थिता महानरेन्द्रो यस्योपरि विशेषेण दृष्टि पातयति, स पुरुषस्त्रिभुवनस्यापि द्रागेव प्रभु सञ्जायत इति सुप्रसिद्धमेतत्, अय पुनर्योऽधुनाऽस्य राज्ञो दृष्टेर्गोचरचारितामनुभवन्नुपलक्ष्यते स द्रमको दैन्योपहतो, रोगग्रस्तदेहोऽलक्ष्मीभाजनभूतो, मोहोपहतात्मा ऽतिबीभत्सदर्शनो, जगदुद्वेगहतुस्तत्कथ समस्तदोषराशेरस्य परमेश्वरदृष्टिपातेन सार्द्ध सम्बन्ध ? पौर्वापर्येण विचार्यमाणो न युज्यते, न कदाचनापि दीर्घतरदौर्गत्यभाजिना गेहेषु अनर्घ्यरत्नवृष्ट्या निपतितुमुत्सहन्ते, तत्कथमेतदिति विस्मयातिरेकाकुल नश्चेत, तदिद सर्वमत्रापि जीवविषय सद्धर्माचार्यचेतसि वर्त्तमान योजनीय, तथाहि–यदाऽय जीवो नितरा गुरुकर्मतया प्रागवस्थाया समाचरति समस्तपातकानि, भाषते नि शेषासभ्यालीकवचनानि, न मुच्यतेऽनवरत रौद्रध्यानेन, स एव चाकाण्ड एव कुतश्चिन्निमित्ताच्छुभसमाचार इव सत्यप्रियवद इव प्रशान्तचित्त इव पुनर्लक्ष्यते, तदा भवत्येव पौर्वापर्यपर्यालोचनचतुराणा विवेकिना मनसि वितर्को, यदुत–*न तावत्सुन्दरा मनोवाक्कायप्रवृत्ति सद्धर्मसाधिका भगवदनुग्रहव्यतिरेकेण कस्यचित्सपद्यते।* अय चेहभव एवातिक्लिष्टमनोवाक्कायप्रसरोऽवधारितोऽस्माभि, तदिद पूर्वापरविरुद्धमिव प्रतिभासते, यत कथमेवविधपापोपहतसत्त्वे भगवदवलोकना प्रवर्त्तते, सा हि प्रवर्त्तमाना जीवस्य मोक्षसम्पादकत्वेन त्रिभुवननाथत्वमक्षेपेण जनयति, तस्मान्नात्र तस्या सम्भवो लक्ष्यते, यतश्चास्य सुन्दरमनोवाक्कायप्रवृत्तिलेशो दृश्यते, ततोऽन्यथाऽनुपपत्त्या भगवदवलोकनाया सद्भावोऽत्र निश्चीयते, तदिदम[1]लब्धसन्देहविच्छेदकारण अस्माक मनो दोलायते किमिदमाश्चर्यमित्याकूते । यथा च तेन तात्पर्येण पर्यालोचयता महानसनियुक्तकेन पश्चान्निश्चित यदुत– सम्भवतोऽस्य द्रमकस्य द्व कारणे महानरेन्द्रावलोकनाया, तेन युक्तियुक्त एवास्य पारमेश्वरो दृष्टिपात, तत्र–यस्मादेष सुपरीक्षितकारिणा स्वकर्म्मविवरेण द्वारपालनात्र भवने प्रवेशित, तेनाचित एवाय विशेषदृष्टेरित्येक कारण, तथा यस्यैतद्भवनमालोक्य नरस्य मन प्रसादो जायते, स महानरेन्द्रस्यात्यन्तवल्लभ इति प्रागेव विनिश्चितमिद मया, सजातश्चास्य मन प्रसादो लक्ष्यते, यतो नेत्ररोगपीडाभराक्रान्ते अपि लोचने भवनदिदृक्षया प्रतिक्षणमयमुन्मीलयति, तद्दर्शनेन बीभत्सदर्शनमप्यस्य वदन सहसा प्रसादसम्पत्तेर्दर्शनीयतामासादयति, धूलिधूसराणि चास्य सर्वाङ्गोपाङ्गानि पुलकोद्भेदभेदभाञ्जि दृश्यन्ते, न चैतदन्तर्विवर्त्तमानहर्षव्यतिरेकेण सपद्यते, तस्मादिदमस्य नृपभवनपक्षपातलक्षण परमेश्वरावलोकनाया द्वितीय कारणमिति तदेतत्सर्व सद्धर्माचार्या अपि जीवविषय पर्यालोचयन्त परिकल्पयन्त्येव, तथाहि–यो जीवो हेतुभिर्लक्ष्यते, यथा सजातकर्म्मविवरोऽय, तथा भगवच्छासनमुपलभ्य यस्य प्रादुर्भवति मन प्रसाद, स च भवन् [भगवान् मु] लक्ष्यते प्रतिक्षण नेत्रोन्मीलनकल्पया जीवादिपदार्थजिज्ञासया, विभाव्यते प्रवचनार्थलवाधिगमे विकसितवदनकल्पेन सवेगदर्शनेन, निश्चीयते च धूलिधूसरिताङ्गोपाङ्गरोमाञ्चाकारेण सदनुष्ठानलेशप्रवृत्तिविलोकनेन तस्य जीवस्य सम्पन्ना भगवदवलोकनेति निर्णीयते, तस्मादिहापि निश्चयकरणे तदस्त्येव हेतुद्वय, यदुत–सञ्जातकर्म्मविवरता भगवच्छासनपक्षपातश्चेति । यथा च 'तेन महानसनियुक्तकेन द्रमकगोचरमेतच्चिन्तित यदुत यद्यपीदानीमेष रोराकारमाबिभर्त्ति तथाऽपि महानरेन्द्रावलोकनादेवोत्तरोत्तरक्रमेण सभवत्कल्याणपरम्पर कालान्तरेण वस्तुतत्त्व प्रतिपत्स्यते खल्वेष, नास्त्यत्र सन्देह इति' तथा सद्धर्मगुरवोऽपि परमात्मावलोकना जीवे विनिश्चित्य तस्य भविष्यद्भद्रता विगतसन्देहा स्वहृदय स्थापयन्त्यव।

---

1 °मवलब्धस प्र ।

### सद्धर्माचार्यस्य करुणा सदुपदेशश्च

यथा च 'असौ महानसनियुक्तकतद्द्रमके महानरेन्द्रावलोकनं निर्णीय तदनुवृत्तिवशेन करुणाप्रवण सम्पन्न.' तथा जीवेऽपि परमात्मावलोकनामाकलय्य सद्धर्मगुरवस्तदाराधनपरायणतयैव करुणाप्रवणमानसा सञ्जायन्ते, तदनुकम्पया तैरपि भगवानाराधितो भवतीत्यर्थ । यत् पुनरभ्यधायि, यथा– असौ रसवतीपति शीघ्र तत्समीपमादरवशेनाऽगच्छत्, [आगच्छत्, मु] गत्वा चैह्येहि भद्र! दीयते तुभ्यं भिक्षेत्येव रोरमाकारितवानिति तदेवमिह योजनीय→यदाऽस्य जीवस्य पूर्वोक्तन्यायेनाऽनादौ ससारे पर्यटत परिपक्वा भव्यता, क्षीणप्राय क्लिष्टकर्म्म, स्तोकमास्ते तच्छेष, तेनापि दत्त रन्ध्र, प्राप्ता मनुजभवादिसामग्री, दृष्ट सर्वज्ञशासन, सजाता तत्र सुन्दरबुद्धि, प्रवृत्ता मनाक्पदार्थजिज्ञासा, समुत्पन्ना कुशलकर्म्मलेशबुद्धि, अथ चानुवर्त्तन्तेऽद्यापि पापकला, तदेवविधे भद्रकभावे वर्त्तमानस्य सञ्जाताया भगवदवलोकनाया सद्धर्म्माचार्या प्रादुर्भूतत व्रकरुणापरिणामा सन्मार्गावतारणार्थ योग्यता निश्चित्य भावतोऽभिमुखीभवन्ति, *तदेततेषा तत्समीपागमनमभिधीयते* । सञ्जातप्रसादाश्च कथयन्ति ते [1]तस्मै यथा→"भद्र। अकृत्रिमोऽय लोक, अनादिनिधन काल, शाश्वतरूपोऽयमात्मा, कर्मजनितोऽस्य भवप्रपञ्च, तच्चानादिसम्बद्ध प्रवाहेण, मिथ्यात्वादयस्तस्य हेतव, तत् पुनर्द्विविध कर्म=कुशलरूपमकुशलरूप च, यत्तत्र कुशलरूप तत् पुण्य धर्मश्चोच्यते, यत् पुनरकुशलरूप तत्पापमधर्मश्चाभिधीयते, पुण्योदयजनित सुखानुभव, पापोदयसपाद्यो दु खानुभव, तयोरेव पुण्यपापयोरनन्तभेदभिन्नेन तारतम्येन सपद्यते खल्वेपोऽधममध्यमोत्तमाद्यनन्तभेदवर्त्तितया विचित्ररूप ससारविस्तार" इति।

### जीवकुविकल्पविनाश

ततश्चैवविध सद्धर्माचार्यवचनमाकर्णयतोऽस्य जीवस्य ते पूर्वमनादिकुवासनाजनिता कुविकल्पा प्रवर्त्तन्ते स्म, यदुत→"अण्डसमुद्भूतमेतत्त्रिभुवन, यदिवेश्वरनिर्मित वा, ब्रह्मादिकृत वा प्रकृतिविकारात्मक वा, यदि वा प्रतिक्षणविनश्वर वा, पञ्चस्कन्धात्मकोऽय जीव, पञ्चभूतात्मको वा । विज्ञानमात्र चेद सर्व शून्यरूप वा । न विद्यते वा कर्म, महेश्वरवशादिद सर्व नानारूप वर्त्तते इत्यादय", ते सर्वेऽपि भीममहायोधदर्शनात्सग्रामशिरसि प्रत्यनीककातरनरा इव निवर्त्तन्ते । ततश्चाय तदा जीवो मन्यते–यदेते महात्मानो मह्य कथयन्ति तत्सर्वमुपपद्यते, मत्तोऽधिकतर परीक्षितु वस्तुतत्त्वमेत एव जानन्ति ततश्च यदुक्त कथानक कथयता यदुत 'कदर्थनार्थमायाता, पश्चाल्लग्ना सुदारुणा । दुर्दान्तडिम्भा ये तस्य, दृष्ट्वा तं ते पलायिता ॥185॥ तदपि योजित विज्ञेय, यत कुविकल्पा एव दुर्दान्तडिम्भा, त एव जीव कदर्थयन्ति, तन्निवृत्तिश्च सुगुरुसम्पर्क्केणेति ।

### सन्मार्गदेशना

तदेवमपगतेषु सकलेषु कुविकल्पेषु यदाऽय जीव सद्धर्मगुरूणा तद्वचनाकर्णनस्पृहया मनागभिमुखो भवति, तदा ते परहितकरणैकव्यसनितया *सन्मार्गदेशना कुर्वाणा* खल्वेवमाचक्षते यदुत →"आकर्णय भो भद्र। ससारे पर्यटतोऽस्य जीवस्य धर्म एवाऽतिवत्सलहृदय पिता, धर्म एव गाढस्नेहबन्धुरा जनयित्री, धर्म एवाभिन्नहृदयाभिप्रायो भ्राता, धर्म्म एव सदैकस्नेहरसवशा भगिनी, धर्म एव समस्तसुखखानीभूताऽनुरक्ता गुणवती भार्या, धर्म एव विश्वासस्थानमेकरसमनुकूल सकलकलाकलापकुशल मित्र, धर्म एव सुरकुमाराकारधारकश्चित्तानन्दातिरेकहेतुरतनय, धर्म एव शीलसौन्दर्यगुणलब्धजयपताकाकुलोन्नतिनिमित्तभूता दुहिता, धर्म्म एवाव्यभिचारी बन्धुवर्ग, धर्म एव विनीत परिकर, धर्म एव नरेश्वरता, धर्म एव चक्रवर्त्तित्व, धर्म्म एव विबुधभाव, धर्म एवामरेश्वरता, धर्म एव वज्राकारो लावण्यापकर्णितभुवनो जरामरणविकारविकल काय, धर्म एव समस्तशास्त्रार्थशुभशब्दग्रहणचतुर श्रोत्रं, धर्म एव भुवनालोकनक्षमे कल्याणदर्शने लोचने, धर्म एव मन प्रमोदहेतवोऽनर्घ्येया रत्नराशय, धर्म एव चित्ताह्लादविधायिनो विषघातनाद्यष्टगुणोपेता कनककूटा, धर्म एव परनिराकरणदक्ष चतुरङ्ग बल, धर्म एवानन्तरतिसागरावगाहनहेतुभूतानि विलासस्थानानि, किम्बहुना जल्पितेन? धर्म एवैको निर्विघ्नानन्तसुखपरम्पराकारण, नापर किञ्चिदपि" इत्येव च कथयति मधुरभाषिणि भगवति धर्मगुरौ भवत्यस्य जीवस्य मनाक् चित्ताक्षेप, तद्वशेन विस्फारयतीक्षणयुगल, दर्शयति वदनप्रसन्नता, त्यजति विकथादीनि विक्षेपान्तराणि, क्वचिद्द्रावितहृदयो विधत्ते ऽस्मित वक्त्रकुहर, ददाति नखस्फोटिकाम्, ततो भगवन्त सूरयो मनाक् प्रविष्टरस तमाकलय्येत्थमभिदधते यदुत–"सौम्य। स धर्मश्चतुर्विधो

1 तत्तोऽसो प्र ।

भवति तद्यथा→*दानमय शीलमयस्तपोमयो भावनामयश्चेति,* अतो यदि भवतोऽस्ति सुखाकाङ्क्षा ततोऽयमनुष्ठातु चतुर्विधोऽपि युज्यते भवता, दीयता सुपात्रेभ्यो यथाशक्त्या दान, क्रियतां समस्तपापेभ्यो वा स्थूलपापेभ्यो वा, प्राणातिपाताद्वा, मृषावादाद्वा, चौर्यकरणाद्वा, परदारगमनाद्वा, अपरिमितग्रहणाद्वा, रात्रिभोजनाद्वा, मद्यपानाद्वा, मांसभक्षणाद्वा, सजीवफलास्वादनाद्वा, मित्रद्रोहाद्वा, गुर्वङ्गनागमनाद्वा, अन्यस्माद्वा शक्यपरिहारान्निवृत्ति । तथा विधीयता यथाशक्ति कश्चित्तपोविशेष , भाव्यतामनवरत शुभभावना भवता, येन ते सपद्यन्ते नि सशयमिहामुत्र च सकलकल्याणानि" इति ।

## भिक्षादानाह्वानोपनय

तदनेन यत्तदुक्तमासीत् कथानके यथा– महानसनियुक्तकस्त धर्म समाहूय भिक्षाचराचित भूभागे स्थापितवान् ततस्तद्भिक्षादानार्थ परिजनमादिष्टवान्, तदनन्तरं तद्दया नाम तद्दुहिता सा परमान्नमादायातिसुन्दर त्वरया तद्दानार्थमुपस्थितेति तत्सर्वं योजित विज्ञेयम् । तथाहि →इह धर्मगुणवर्णन जीवस्याऽऽकारणकल्प विज्ञेय, तच्चित्ताक्षेपो भिक्षाचरोचितभूभागस्थापनतुल्यो द्रष्टव्य , धर्मभेदवर्णन परिजनादेशसम मन्तव्य, *तस्यैव गुरोर्या जीवस्योपरि कृपा सेव तद्दया नाम्नी दुहिता विज्ञेया,* चतुर्विधधर्मानुष्ठानकारण सुन्दरपरमान्नग्र[ग्र मु]हणसमान विज्ञेयं, तच्च सद्धर्माचार्यानुकम्पयैव जीव प्रत्युपढौकयति नापरो हेतुरिति विज्ञेयम् ।

## द्रमकस्य कुविकल्पकल्लोलमालास्तदुपनयश्च

यत् पुनरभिहित यदुत–आकारणसमनन्तर त तथाभूतमत्यादरमालोक्य स रोरश्चिन्तयति स्म, यथा–मामन्यदा भिक्षा प्रार्थयमानमपि लोका निराकुर्वन्ति, तिरस्कारपूर्वं वा किञ्चिद्ददति, अधुना पुनरय सुवेषो नरेन्द्राकार· पुरुष स्वयमागत्य मामाकारयति, भिक्षा ते दीयत इति च मामुपप्रलोभयति, तत्किमिदमाश्चर्यम् ? ततस्तच्छाभिप्रायदर्शन पर्यालोचयतस्तस्य चेतसि परिस्फुरित, हन्त ! नैवेतत्सुन्दर मम प्रतिभासते, मन्मोषणार्थ खल्वेष प्रारम्भो, यतो भृतप्रायमिद भिक्षाया भाजन मामकीन, तदेष विजने नीत्वा मा निश्चितमेतदुद्दालयिष्यति, एवञ्च स्थिते कि मयाऽधुना विधेयम् ? किमित एव स्थानात् सहसा नश्यामि ? उतोपविश्य तावद्भक्षयामीद भाजनस्थ भोजनम् ? आहोस्विन्न कार्यं मम भिक्षयेति प्रतिषेधं विधाय पदमपि न चलामि ? कि वा वञ्चयित्वैन पुरुष कुत्रचित् सत्वर प्रविशामि ? कथ कुर्वतो ममास्मान्मोक्षा भविष्यतीति न जाने । यावदेव निश्चिन्वन् विकल्पमालाकुलचेतारिचन्तयति तावत्तस्य प्रवर्द्धत प्रबल भय, प्रसर्प्यति तृष्णा, शुष्यति हृदय, विह्वलीभवत्यन्तरात्मा, [1]मूर्च्छातिरेकाभिभृतचित्तवृत्त सरक्षणानुबन्धि प्रादुर्भूत महारौद्रध्यान, निरुद्ध करणग्रामप्रसर , मीलिते विलोचने, नष्टा चेतना, न जानीते क्वाह नीत , कुत्र वा स्थित ? केवल निखातकाष्ठकील इवोर्ध्वाकारोऽवतिष्ठते । सा तु तद्दया गृहाणेद भोजनमिति भूयो भूय ससाकुला व्याहरति स्म, तथाऽपि स निष्पुण्यको द्रमक सर्वरोगकर तुच्छ यत्तदात्मीय कदशनं तत्सरक्षणानुबन्धेन नष्टात्मा ता कन्यका समस्तरोगहरामृतस्वादपरमान्नदानार्थं व्याहरन्ती वराको नाववुध्यत इति तदिद समस्त जीवेऽपि समानमवगन्तव्य, तथाहि–यदाऽस्य हितचिकीर्षया भगवन्त सद्धर्मगुरवो विस्तरेण धर्मगुणानुपवर्ण्य पुनश्चतुर्विधधर्मानुष्ठानमुपदिशन्ति तदाऽय जीवो मिथ्याज्ञानमहातम काचपटलतिमिरकामलावलेपलुप्तविवेकलोचनयुगलदी–धितिप्रसरोऽनादिभवाभ्यस्तमहामिथ्यात्वोन्मादसन्तापविधुरितहृदय प्रबलचारित्रमोहनीयरोगकदम्बकविह्वलचेतनस्तत्र विषयधनकलत्रादिके [कया मु] गाढमूर्च्छया[2]ऽभिभूतचित्तवृत्ति सन्नेव चिन्तयति→यावदह पूर्वं धर्माधर्मविचारपर्येषणा नाकार्षं तावदेते श्रमणा क्वचिदुपलभ्यमाना अपि न मम वार्त्तामपि पृष्टवन्तो, यद्यपि ते [तत् मु] कथञ्चित् क्वचिदवसरे मा धर्मगोचर किञ्चिद् ब्रूयु, तथाऽप्यनादरेण वचन वा द्वेषेण वा, इदानी पुनर्मां धर्माधर्मजिज्ञासापरमवगम्य गतोऽयमस्माकमादेशगोचरमिति मत्वा स्वगलतालुशोषमवगणय्योच्चैर्ध्वनिना महता वचनरचनाटोपेन स्वयमदृष्ट एवैष लोकप्रकाश[3] श्रमणो मम पुरतो धर्मगुणानुपवर्णयति, मा चाक्षिप्तचित्तमुपलभ्य दान दापयति, शील ग्राहयति, तपश्चारयति, भावना भावयति । तदियतोऽकाण्ड एव स्फुटाटोपस्यास्य हन्त को गर्भार्थ ? आ ज्ञातम्, अस्ति मे सुन्दरकलत्रसङ्ग्रह , विद्यते नानाकारो द्रविणनिचय , सम्भवति भूरिरूपो धान्यप्राग्भार , समस्ति सम्पूर्णं चतुष्पदकुप्यादिक, नून तत् ज्ञातमेतेन, तदेषोऽत्र तात्पर्यार्थो यदुत–दीक्षा ते दीयते रजस्ते पात्यते बीजदाहस्ते[4] क्रियते । कुरु लिङ्गपूरण, विधेहि गुरुपादपूजन, निवेदय स्वकलत्रधनकनकादिक, समस्तसर्वस्व गुरुपादेभ्य , पुनस्तैरनुज्ञात अनुभवितेतरत्वमेव विदधान पिण्डपातेन शिवीभविष्यसीत्येव वचनरचनया विप्रतार्य शैवाचार्य इव मामेष श्रमणको मुमुषति[5] यदि वा भूरिफल सुवर्णदान महोदय गोदानमक्षय्य पृथिवीदान अतुल पूर्त्तधर्मकरणमनन्तगुण वेदपारगे दान, यदि पुनर्गौर्विज्ञायमाना निर्गतवत्सखुरमुखा सचेला कनकश्रृङ्गी रत्नमण्डिता सोपचारा द्विजेभ्यो दीयते ततश्चतुस्दधिमेखला सग्रामनगराकरा सशैलकानना पृथिवी तेन दत्ता भवति, सा

1 सत्या प्र । 2 मूढतया प्र । 3 स्वयमदृष्टलोकप्रकाश एवैष इति वा ? । 4 दान हस्ते । 5 मुमोषिषति प्र ।

चाक्षय्यफला संपद्यते, इत्येव मुग्धजनवञ्चनपरै कूटश्लोकरचितग्रन्थैर्मां विप्रलभ्य द्विजातिरिव नूनमेष श्रमणो मे द्रविणजात जिहीर्षति । अथवा कारय रमणीयत ान् विहारान्, वासय तेषु बहुश्रुतान्, पूजय सङ्घ, प्रयच्छ भिक्षुभ्यो दक्षिणा, मीलय सङ्घसम्बन्धिनि कोशे स्वीय द्रविणजात, निक्षिप सङ्घसम्बन्धिन्येव कोष्ठागारे स्वधान्यसञ्चय, समर्पय सङ्घसम्बन्धिन्यामेव संज्ञातौ स्वकीय चतुष्पदवर्गं, भव बुद्धधर्मसङ्घशरण । एव ते कुर्वतोऽचिराद् बुद्धपद भविष्यतीत्येव वाचालविरचितमायाजालेनात्मीयशास्त्रसन्दर्भेण रक्तभिक्षुरिव मा विसवाद्य निश्चितमेष श्रमणो मदीयसर्वस्व लातुमभिकाङ्क्षति । यद्वा क्रियता सङ्घभक्ति[1] भोज्यन्तामृषयो दीयन्ता सुन्दरखाद्यानि उपनीयन्ता मुखक्षेपणानि, दानमेव गृहस्थस्य परमो धर्म , तत एव सपद्यते ससारोत्तार इत्येव मामुपप्रलोभ्य स्वशरीरपोषणपरो दिगम्बर इव मदीयधनमेष श्रमणो निर्वाहयिष्यति । अन्यथा कथमेवविधोऽस्य ममोपरि प्रपञ्चकथनरूपोऽत्यादर स्यात् ?

### मिथ्यादृक्त्वे विकल्पा

तदिदमिह तत्त्व–तावदेवैते सुन्दरा श्रमणा यावन्नोपलभ्यन्ते यावच्चैतेषा न वशवर्तिभिर्भूयते, वश ार्त्तिन पुनर्मुग्धजन श्रद्धालुमवगम्यैते मायाविनो नानावचनरचनया विप्रतार्य मदीयसर्वस्वमपहरन्ति, नास्त्यत्र सन्देह , ततो मयाऽधुनाऽनेन श्रमणेन प्रारब्धेन सता कि विधेयमित्यालोचयामि, किमदत्तप्रतिवचन समुत्थाय गच्छामि ? उत नास्त्येव धर्मानुष्ठानकरणे मम शक्तिरिति दीपयामि ? आहोस्विच्चौरहरणादिभि प्रलीन मे द्रव्यजात नास्त्येवाधुना किञ्चिद्यत् दीयते पात्रेभ्य इत्येव प्रत्युत्तरयामि ? उताहो न कार्यं मे तावकधर्मानुष्ठानेन न पुनर्मह्य किञ्चिद् भवता कथनीयमित्येवमेन श्रमण निराकरोमि ? कि वा अकाण्डकथनजनितक्रोधसूचिका भृकुटी [2]जनयामीति ? न जाने कथमेष श्रमणो मद्वञ्चनप्रवणमना निवर्त्त्यास्माद् दुरध्यवसायान्मम मोक्ष दास्यति ? इति

### देशकस्वरूपम्

न पुनरसौ वराको गाढमूढात्मतया खल्वेतल्लक्षयति यथा–"एते भगवन्त सद्धर्माचार्या विदिततुषमुष्टिनि सारससारगर्भार्था अतुलसन्तोषामृततृप्तान्त करणा अवगतविषयविषविषमविपाका मोक्षकाङ्क्षैकतानेन चेतसा सर्वत्र समवृत्ततयाऽत्यन्तनि स्पृहतया च सन्मार्गोपदेशदाने प्रवर्त्तमाना सन्तो न देवेन्द्रद्रमकयोर्विशेष लक्षयन्ति, न महर्द्धिविबुधनिर्द्धनपुरूषयोर्विभाग कल्पयन्ति न चक्रेश्व– ररोरयोरन्तर दर्शयन्ति, नोदारपरमेश्वरकृपणनरयोरादरानादराभ्या विवर्त्तन्ते । समानमेषा चेतसि विवर्त्तते परमैश्वर्य दारिद्र्येण तुल्या महार्हरत्नराशयो जरठपाषाणनिकरेण, सदृशा उत्तप्तहाटककूटा लोष्टपूगेन सदृशा हिरण्यस्तोमा धूलिपुञ्जेन, सन्निभो धान्यनिचय क्षारराशे , तुल्य चतुष्पदकुप्यादिक नि सारकचवरेण, न विशेषो निर्जितरतिरूपाभिरपि ललितललनाभि सह जरत्काष्ठस्तम्भानामिति"। एवञ्च स्थिते नैतेषा परहितकरणैकव्यसनिता विमुच्यापर स (म) दुपदेशदाने प्रवर्त्तमानाना कारणमुपलभ्यते, यत स्वार्थसम्पादनमपि परमार्थत स्वाध्यायध्यानतपश्चरणकरणादिना द्वारान्तरेणैव सम्पद्यत एव, न तदर्थमप्येतेषामत्र प्रवृत्ति , दुरापास्तावकाशा लाभादिका शेषाकाङ्क्षा, न चैतदेषको [3]ध्यन्धीभूतबुद्धिर्जानीते, ततोऽय जीवोऽनवगतसद्गुरूदाराशयोऽत्यन्ततुच्छस्वचित्तदुष्टताऽनुमानेन तच्चित्तमपि तथारूप परिकल्पयन् महामोहवशेन तानतत्त्वदर्शनै शैवद्विजाति [रिव मु] रक्तभिक्षुदिगम्बरादिभि तुल्यान् कल्पयति, सम्भवन्ति च भिन्नकर्मग्रन्थेरपि दर्शनमोहनीयपुञ्जत्रयकरणेन यदा पुनर्मिथ्यात्वपुञ्जे वर्त्ततेऽय जीवस्तदैवविधा कुविकल्पा इति ।

### मिथ्यादृक्त्वे प्रवृत्ति

ततश्च तैराकुलीकृतहृदयस्यास्य जीवस्य पुन प्रसर्पति मिथ्यात्वविष, ततस्तद्वशगोऽय जीव शिथिलयति मौनीन्द्रदर्शनपक्षपात, विमुञ्चति पदार्थजिज्ञासा, अवधीरयति सद्धर्मनिरत जन, बहु मन्यते निर्विचारकलोक, प्रमादयति प्राक् प्रवृत्त सत्कर्त्तव्यलेश, परित्यजति भद्रकभाव, रज्यते नितरा विषयेषु, पश्यति तत्त्वबुद्ध्या तत्साधन धनकनकादिक, गृह्णाति तथोपदिशन्त गुरु वञ्चकबुद्ध्या, नाकर्णयति तद्वचन, भाषते धर्मावर्णवादान्, उद्घट्टयति धर्म्मगुरूणा मर्मस्थानानि, लगति प्रतीप कूटवादेन, निराक्रियते पदे पदे गुरुभि । ततश्चासौ चिन्तयति–सुरचितग्रन्थप्रपञ्चा एते श्रमणा न निराकर्त्तुं मादृशै पार्यन्ते, ततो मामलीकविकल्पजालेन विप्रतार्य पुन करिष्यन्त्येते मायावितयाऽऽत्मभक्ष्यस्थान, अतो दूरत एव मयैते वर्जनीया , स्वगृहाद्वारणीया , दृष्टा अपि न सम्भाषणीया , नामापि न सोढव्यमेतेषामित्येव कदन्नकल्पे [ल्प मु] धनविषयकलत्रादिके मूर्च्छितहृदयस्तत्सरक्षणप्रवणोऽय जीव सदुपदेशदायकान् महामोहवशगो वञ्चकत्वेन कल्पयन् रौद्रध्यानमापूरयति, ततो नष्टविवेकचेतनस्तै सद्धर्माचार्यैस्र्वाकारनिखातकाष्ठकीलककल्पो लक्ष्यते । अत एव च तेषा सम्बन्धिन्या

---

1 भक्तम् प्र । 2 रचयामीति प्र । 3 [ऽऽध्यान्धीकृत मु]

दयया दीयमान तदानी सुन्दरपरमान्नकल्प सदनुष्ठानोपदेश वराकोऽय जीवो न जानीते, न चेत पर विवेकिना विस्मयकरमस्ति, यदेष जीवो महानरकगर्त्तपातहेतो धनविषयादिके गृद्धात्माऽनन्तसुखमोक्षाक्षेपकारण सदनुष्ठान सद्गुरुदयोपनीतमवधीरयति ।

### सद्गुरोश्चिन्ता

यथा च तेन महानसनियुक्तकेन तत्तथाभूतमसभाव्य व्यतिकरमवलोक्य चिन्तित यदुत किं पुनरय रोरो दीयमानमादरेणद परमान्न न गृह्णाति, नूनमयमस्य पापोपहतात्मतया न योग्य इति तदत्रापि तुल्य विज्ञेय, तथाहि—सद्गुरूणामपि त तथाविध विस्तरधर्मोपदेश[1]नयाऽन्यथा वा विनष्टभद्रकभाव विपरीतचारिण जीवमुपलभ्य भवत्येवम्भूतो भावो यदुत — न भाजनमेषोऽकल्याण—भाजनतया भगवद्धर्मस्य, नोचित [2]कुगतिगामितया सुगतिगमनस्य, न परिकर्मणीयो दुर्दल (र्लभ प्र) कल्पतया सद्धर्मचेतसा, ततोऽत्र मोहोपहतचेतसि विफलो मे परिश्रम इति । यथा च पुनर्विमृशता तेन रसवतीपतिना निश्चित यदुत नास्य वराकस्याय दोष, यतो बहिरन्तश्चार रोगजालेन परिवेष्टित इति कृत्वा वेदनाविह्वलो न किञ्चिच्चेतयते, यदि पुनरय नीरोग स्यात् ततो योऽय कदन्नलवलाभेनापि तुष्यति सोऽमृतास्वादमेतत्परमान्न दीयमान कथ न गृह्णीयादिति तदेतदाचार्यस्यापि पर्यालोचयतो मनसि वर्त्तत एवेति, यदुत—यदेष जीवो गृध्यति विषयादिषु, गच्छति कुमार्गेण, नादत्ते दीयमान सदुपदेश, नपोऽस्य वराकस्य दोष, किं तर्हि? मिथ्यात्वादीना भावरोगाणा, तैर्विसम्थुलचेतनोऽय न किञ्चिज्जानीते, यदि पुनरेष तद्विकल स्यात् तत्कथमात्मनो हित विमुच्याऽऽत्माऽहिते प्रवर्तेत ? ।

### भेषजत्रयोपमितरत्नत्रयीमाहात्म्यम्

यच्च तेन महानसनियुक्तेन पर्यचिन्ति यथा कथ पुनरेष रोरो नीराग स्यात्? ततो मनसि निरूपयता तेन पुन पर्यकल्पि—अय विद्यत एवास्य रोगनिराकरणोपाय, यतोऽस्ति मम चारु भेषजत्रितय, तद्यथा—एक *तावद्विमलालोक* नाम परमाञ्जन, तद् विधानेन प्रयुज्यमान समस्त नेत्ररोगान्नाशयति, सूक्ष्मव्यवहितातीतभाविभावविलोकनदक्ष चक्षु सपादयति, तथा द्वितीय *तत्त्वप्रीतिकर* नाम सत्तीर्थोदक, तत् पुनर्विधिना स्वाद्यमान समस्तगदव्राततानव विधत्ते, दृष्टिश्चाविपरीतार्थग्रहणचतुरता कुरुते, विशेषत पुनरुन्मादमुद्दलयति तृतीय पुनरेतदेव कन्यकोपनीत *महाकल्याणक* नाम परमान्न, एतत्पुन सम्यगुनिषेव्यमान नि शेषरोगगण समूलकाष कषति, तथा पुष्टि जनयति, धृति वर्द्धयति, बलमुज्ज्वलयति, वर्णमुत्कर्षयति, मन प्रसाद सपादयति, वयस्तम्भ विधत्ते, सवीर्यता करोति, ओजित्य प्रवणयति, किम्बहुना? अजरामरत्वमपि नि सन्देहमेतत्सन्निधापयति, तस्मादनेनौषधत्रयेण सम्यगुपक्रम्येन तपस्विन व्याधिभ्यो मोचयामीति तेन मनसि सिद्धान्त स्थापित तदेतत्सद्धर्माचार्योऽपि जीवगोचर समस्त चिन्तयत्येव, तथाहि—यदा निश्चित तेन प्राक्प्रवृत्तिदर्शनेन यथा भव्योऽय जीव, केवल प्रबलकर्म्मकलाऽऽकुलितचेता सन्मार्गात्परिभ्रष्ट । तदा भवति गुरोरयमभिप्राय यथा→ कथ पुनरेषोऽस्माद्रोगस्थानीयात् कर्मजालान्मोक्ष्यते ? पर्यालोचयतश्च तात्पर्यपर्याकुलेन चेतसा सुदूरमपि गत्वा पुनरेतदेव ज्ञानदर्शनचारित्ररूपत्रय भेषजत्रयकल्प तन्मोचनोपाय प्रतिभासते, नापर। तत्रेह ज्ञानमञ्जन विज्ञेय, तदेव परिस्फुटदर्शितया *विमलालोक*मुच्यते, तदेव च नयनगदसन्दोहकल्पमज्ञानमुन्मूलयति, तदेव च भूतभवद्भाविभावस्वभावाविर्भावनचतुर जीवस्य विवेकचक्षु सपादयति। दर्शन पुन *सत्तीर्थोदक* बोद्धव्य, तदेव जीवादिपदार्थगोचरश्रद्धानहेतुतया तत्त्वप्रीतिकरमभिधीयते, यतश्च तदुदयसमये सर्वकर्मणामन्त सागरोपमकोटीकोटिमात्रमवतिष्ठते, समुत्पन्न पुन प्रतिक्षण तत्तानि तनूकुरुते, तेन समस्तगदतानवकारक, कर्मणामिह रोगकल्पत्वात्, तदेव दृष्टिप्रख्यस्य ज्ञानस्य यथावस्थितार्थग्रहणचातुर्यमाधत्त, तदेव च महोन्माददेश्य मिथ्यात्वमुद्दलयतीति । चारित्र पुनरत्र परमान्नमवगन्तव्य, तस्येव सदनुष्ठान धर्म सामायिक विरतिरित्यादय पर्याया, तदेव मोक्षलक्षणमहाकल्याणा—व्यवहितकारणतया महाकल्याणकमिति गीयते, तदेव च रागादिमहाव्याधिकदम्बक समूलघात हन्ति, तदेव च वर्णपुष्टि—धृतिबलमन प्रसादौर्जित्यवय स्तम्भसवीर्यतातुल्यानात्मगुणान् समस्तानाविर्भावयति, तथाहि—तज्जीवे वर्तमान प्रभवो धैर्यस्य कारणमौदार्यस्याऽऽकरो गाम्भीर्यस्य, शरीर प्रशमस्य, स्वरूप वैराग्यस्यातुलहेतुर्वीर्योत्कर्षस्य आश्रयो निर्द्वन्द्वताया कुलमन्दिर चित्तनिर्वाणस्य उत्पत्तिभूमिर्दयादिगुणरत्नाना, किं चानेन? यत्तदनन्तज्ञानदर्शनवीर्यानन्दपरिपूर्णमक्षयमव्ययमव्याबाध धाम तदपि तत्सम्पाद्यमेवेत्यतोऽजरामरत्वमपि तज्जनयतीत्युच्यते, तस्मादेनमनेन ज्ञानदर्शनचारित्रत्रयेण सम्यगुपक्रम्य जीव क्लिष्टकर्मकलाजालान् मोचयामीति सद्धर्मगुरुरपि चित्तेऽवधारयति ।

---

1 धर्मदेश प्र । 2 नरक प्र ।

गुरुभ्यो निवेदयति, यदुत →"भगवन्! अह यदा युष्मन्निवारणया न गृह्णामि स्तेनाहृत, न करोमि विरुद्धराज्यातिक्रम, नाचरामि वेश्यादिगमन, नानुतिष्ठामि तथाविधमन्यदपि धर्मलोकविरुद्ध, न रज्यामि महारम्भपरिग्रहयो, तदा मा लोक साधुतया गृह्णाति, मयि विश्रम्भ विधत्ते, श्लाघा चाचरति । तथा न जानामि शरीरायासजनित दुःख, सपद्यते हृदयस्वास्थ्य, धर्मश्चैव तिष्ठता सुगतिप्रापको भवतीतिभावनया भवति चितानन्द इति । यदा तु युष्मन्निवारणा न भवति, भवन्ती वा तामनपेक्ष्य निर्भयतया 'न जानन्ति मा गुरव', इत्यभिप्रायेण धनमूर्च्छनया गृह्णामि स्तेनाहृतादिक, विषयलौल्येन गच्छामि वेश्यादिक, समाचरामि तादृशमन्यदपि भगवन्निवारित, तदा लोकादश्लाघा, राजकुलात्सर्वस्वहरण, शरीरखेद, मनस्तापमपराश्च समस्ताननर्थानिहलोक एव प्राप्नोमि, पाप च दुर्गतिगर्त्तपातहेतुरेव वर्त्तमानाना भवतीतिचिन्तया दन्दह्यमानहृदय क्षणमपि सुख न लभेऽहमिति। तस्मान्नाथा! तथा कुरुध्व यूय यथाऽहमनवरत युष्मद्वचनाचरणसन्नाहेन सततमेतस्मादनर्थशरजालाद्रक्षिते भवामि" इति।

## गुरुभ्य सद्बुद्धिप्राप्ति

ततस्तदाकर्ण्य गुरवो ब्रूयु→भद्र! यदेतत्परप्रत्ययेनाऽकार्यवर्जन, कादाचित्कमेतत्, केवल तथाऽपि क्रियमाणस्य तस्येतरस्य च दृष्ट एव भवता विशेष, वय चानेकसत्त्वोपकारकरणव्यग्रा, न सदा सन्निहिता भवन्त वारयितु पारयाम, एव च स्थिते न यावद्भवत स्वकीया सद्बुद्धि सपन्ना, तावदेषाऽस्मन्निवारिताऽऽचरणनिबन्धनाऽनर्थपरम्परा भवन्ती न विनिवर्त्तते । सद्बुद्धिरेव हि परप्रत्ययमनपेक्ष्य स्वप्रत्ययेनैव जीवमकार्यान्निवारयति, ततो मुच्यतेऽनर्थेभ्य इति । ततोऽय जीवो ब्रूयात्→नाथा । साऽपि भवत्प्रसादादेव यदि पर मम सपत्स्यते, नान्यथा । ततो गुरवोऽभिदध्यु→भद्र! दीयते सद्बुद्धि, वचनायत्ता हि सा मादृशा वर्त्तते, केवल दीयमानाऽपि सा पुण्यभाजामेव जन्तूना सम्यक् परिणमति, नेतरेषा, यत पुण्यभाज एव तस्यामादरवन्तो जायन्ते, नापरे, तदभावभाविनो हि देहिना सर्वेऽनर्था, तदायत्तान्येव सकलकल्याणानि, तस्यामेव च ये महात्मानो यतन्ते त एव भगवन्त सर्वज्ञमाराधयन्ति, नेतरे, तत्सपादनार्थ खल्वेष मादृशा वचनप्रपञ्च, सद्बुद्धिविकलाना हि पुरुषाणा व्यवहारत सजातान्यपि ज्ञानादीनि नासजातेभ्यो विशिष्यन्ते, स्वकार्याऽकरणात्, किम्बहुनोक्तेन? *सद्बुद्धिविकल पुरुषो न पशूनतिशेते*, तस्माद्यदि तेऽस्ति सुखाकाङ्क्षा, दुःखेभ्यो वा यदि बिभेषि, ततोऽस्यामस्माभिर्दीयमानाया सद्बुद्धौ यत्नो विधेय, तस्या हि यत्नवता समाराधित प्रवचन, बहुमतो भुवनभर्त्ता, परितोषिता वय, अङ्गीकृत लोकोत्तरयान, परित्यक्ता लोकसज्ञा, समासेविता धर्मचारिता, समुत्तारितो भवोदधेरात्मा भवतेति । ततो भगवता सद्धर्मगुरूणा—मेवविधवचोऽमृतप्रवाहप्रह्लादितहृदयोऽय जीवस्तद्वचन तथेति प्रतिपद्यते ।

## उपदेशदानम्

ततस्ते तस्मै दद्युरुपदेश यदुत→सौम्य! इदमेवात्र परमगुह्य सम्यगवधारणीय भवता यदुत→यावदेष जीवो विपर्यासवशेन दुःखात्मकेषु धनविषयादिषु सुखाध्यारोप विधत्ते, सुखात्मकेषु वैराग्यतपसयमादिषु दुःखाध्यारोप कुरुते तावदेवास्य दुःखसम्बन्ध। यदा पुनरनेन विदित भवति→विषयेषु प्रवृत्तिर्दुःख, धनाद्याकाङ्क्षानिवृत्ति सुख, तदाऽयमशेषेच्छाविच्छेदेन निराकुलतया स्वाभाविकसुखाविर्भावात् सततानन्दो भवति । अन्यच्च भवतोऽय परमार्थ कथ्यते, 'यथा यथाऽय पुरुषो निःस्पृहीभवति तथा तथाऽस्य पात्रतया सकला सपद सपद्यन्ते, यथा यथा सपदभिलाषी भवति, तथा तथा तदयोग्यतामिव निश्चित्य तास्ततो गाढतर दूरीभवन्ति' तदिद निश्चित्य भवता सर्वत्र सासारिकपदार्थसार्थे नास्था विधेया, ततस्ते स्वप्नदशायामपि पीडागन्धोऽपि मनःशरीरयोर्नैव सपत्स्यत इति ।

## सद्बुद्धिप्रभाव

ततोऽय जीवस्तमुपदेशममृतमिव गृह्णीयात् । ततस्ते धर्मगुरव सपन्ना सद्बुद्धिरस्येतिकृत्वा नेदानीमेषोऽन्यथा भविष्यतीति त प्रति निश्चिन्ता भवेयुरिति । तत प्रादुर्भूतसद्बुद्धिरय जीवो यद्यपि श्रावकावस्थाया वर्त्तमान कुरुते विषयोपभोग, आदत्ते धनादिक, तथापि यस्तत्राभिष्वङ्गोऽतृप्तिकारणभूत स न भवति । ततो ज्ञानदर्शनदेशचारित्रेषु प्रतिवद्धान्तकरणस्य तस्य ते द्रविणभोगादयो यावन्त एव सपद्यन्ते तावन्त एव सन्तोषमुत्पादयन्ति । ततोऽय सद्बुद्धिप्रभावादेव तदानी यथा ज्ञानादिषु यतते न तथा धनादिषु, ततोऽपूर्वा न वर्द्धन्ते रागादय, तनूप्रभवन्ति प्राचीना, तथा पूर्वोपचितकर्मपरिणतिवशेन यद्यपि क्वचिदवसरे काचिच्छरीरमनसोर्बाधा सपद्यते, तथापि सा निरनुबन्धतया न चिरमवतिष्ठते, ततो जानीते तदाऽय जीव सन्तोषासन्तोषयोर्गुणदोषविशेष, सजायते चोत्तरगुणस्कन्दनेन चित्तप्रमोद इति ।

## सद्बुद्धिदत्तसावधानी दोलायितमनश्च

ततो यथा तेन वनीपकेन तया सद्बुद्ध्या परिचारिकया सह पर्यालोचित भद्र! किन्निमित्त खल्वेष मम देहचेतसो प्रमोद ? तया च कदन्नलौल्यवर्जन भेषजत्रयासेवनं च तस्य कारणमाख्यात, तत्र युक्तिश्चोपन्यस्ता तदिहापि समानमेव, तथाहि–सद्बुद्ध्यैव सह पर्य्यालोचयन्नेष जीवो लक्षयति यदुत→यदेतत्स्वाभाविक देहमनोनिवृत्तिरूप सुखमाविर्भूत मम अस्य निवन्धन विषयादिष्वभिष्वङ्गत्यागो ज्ञानाद्याचरण च, तथाहि→प्रागभ्यासवशेन विषयादिषु प्रवर्त्तमानोऽप्येष जीव सद्बुद्धिकलित सन्नेव भावयति–न युक्तमीदृश विधातु मादृशा, ततो गृद्धिविकलतया निवर्त्तते चेतसोऽनुवन्ध , तत सपद्यते प्रशमसुखासिकेत्ययमत्र युक्तेरुपन्यासो विज्ञेय इति ।

तत यदुपलब्धसुखरसेन तेन रोरेण तस्या परिचारिकाया पुरतोऽभिहित यदुत→भद्रे! सर्वथाऽधुना मुञ्चामीद कदन्नं, येनात्यन्तिकमेतत्सुख मे संपद्यत इति । तयोक्त–चार्विद, केवल सम्यगालोच्य मुच्यता भवता, यतस्तेऽत्यन्तवल्लभमेतद, ततो यदि मुक्तेऽपि तवात्र स्नेहवन्धोऽनुवर्त्तते तद्वरतरमस्याऽत्याग एव, यतस्तीव्रलाल्यविकलतया भुञ्जानस्यापीद भेषजत्रयाऽऽसेवनगुणेनाधुना याप्यता ते विद्यते, साऽपि चात्यन्तदुर्लभा, यदि पुनरस्य सर्वत्याग विधाय त्वमेतद्वाचर स्मरणमपि करिष्यसि, ततो रोगा भूयोऽपि पकोप [कोप मु] यास्यन्ति । तद्वचनमाकर्ण्य तस्य दोलायिता वुद्धि, कि करवाणीति न सजातो मनसि निश्चय इति तदिदमत्रापि जीवे तुल्य वर्त्तते, तथाहि–यदाऽय सासारिककार्येषु[1] चित्तानुवन्धत्रोटनेन ज्ञानाद्याचरणे दृढमनुरक्त[सक्त मु]तया गृहस्थावस्थायामपि वर्त्तमानो विज्ञातसतोषसुखस्वरूपो भवति, तदाऽस्याऽविच्छिन्नप्रशम–सुखवाञ्छया प्रादुर्भवत्येव सवसगत्यागवुद्धि, पर्य्यालोचयति चात्मीयसद्बुद्ध्या सार्द्धं यदुत→किमहमस्य विधाने समर्थो न वेति? तत सद्बुद्धिप्रसादादेवेदमेष लक्षयत्येव यथा→अनादिभवाऽभ्यासवशेन स्वरसप्रवृत्तिरेष जीवो विषयादिषु, ततो यदि नि शेषदोषनिवृत्तिलक्षणा भागवतीमपि दीक्षामुररीकृत्य पुनरय तामनादिरूढकर्मजनिता प्रकृतिमनुवर्तमानो विषयादिस्पृहयाऽऽत्मान [ऽप्यात्मान मु]विडम्वयिष्यति, ततोऽस्यादित एव तदनङ्गीकरण श्रेयस्कर यतस्तीव्राभिष्वङ्गरहितो विषयादिषु वर्त्तमानो गृहस्थोऽपि द्रव्यस्तव ज्ञानाद्याचरणप्रधान कुर्वाण कर्माजीर्णजरणेन रागादिभावरोगतनुतामधिकृत्य याप्यता लभते, न चेयमप्यनादौ भवभ्रमणे क्वचिदवाप्तपूर्वाऽनेन जीवेनातोऽत्यन्तदुर्लभेयम्। यदि तु प्रव्रज्या प्रतिपद्य पुनर्विषयाद्यभिलाष विधत्ते, तत प्रतिज्ञाताऽकरणेन वृहत्तरचित्तसक्लेशप्राप्तेर्गुरुत्तररागाद्युद्रेकेण तामपि याप्यता न लभते, ततो यावदेव निरूपयत्यय जीव तावदस्य चारित्रमोहनीयकर्मांशैरनुवर्त्तमानैर्विधुरिता सती पूर्वं प्रवृत्ताऽपि सर्वसगत्यागवुद्धि पुनर्दोलायते । तत सपद्यते वीर्यहानि, ततोऽवलम्वते खल्वयमेवविधानि कदालम्वनानि यदुत→सीदति तावदधुना ममेद कुटुम्वक, मन्मुखनिरीक्षक चेद, न वर्त्तते मद्विरहे, अत कथमकाण्ड एव मुञ्चामि? यदि वाऽद्याप्यसजातवलोऽय तनय, अपरिणीतेय दुहिता, प्रोषितभर्तृकेय भगिनी मृतपतिका वा, अत पालनीया ममेय, तथा नाद्यापि गृहधूर्धरणक्षमोऽय भ्राता, जराजर्जरितशरीराविमो मातापितरो, स्नेहकातरौ च, गर्भवतीय भार्या दृढमनुरक्तहृदया च, न जीवति मद्विरहिता, अत कथमेव विसस्थुल परित्यजामि? । यदि वा विद्यते मे भूरिधननिचय, सन्ति वहवोऽधमर्णा, अस्ति च सुपरीक्षितभक्तिर्भूयान् परिकरो वन्धुवर्गश्च, तदय पोष्यो मे वर्त्तते, तस्मादुद्ग्राह्य द्रविण लोकेभ्य, कृत्वा वन्धुपरिकराधीन, विधाय धर्मद्वारेण धनविनियोग, अनुज्ञात स्वरभसेन सर्वेर्मातापित्रादिभि–र्विहिताशेषगृहस्थकृत्य एव दीक्षामङ्गीकरिष्ये, किमनेनाकाण्डविड्वरेणेति?।

## प्रव्रज्याकाठिन्यविचार

अन्यच्च→यदिद प्रव्रजन नाम साक्षाद्वाहुभ्या तरणमेतत् स्वयभूरमणस्य वर्त्तते, प्रतिस्रोतोगमनमेतद्गङ्गाया, चर्वणमेतदयोयवाना, भक्षणमेतदयोगोलकाना, भरणमेतत्सूक्ष्मपवनेन कम्वलमुत्कोल्या, भेदनमेतत् शिरसा सुरगिरे, मानग्रहणमेतत्कुशाग्रेण नीरनिधे, नयनमेतदविन्दुपात धावता योजनशत तैलापूर्णपात्र्या, ताडनमेतत् सव्यापसव्यभ्रमणशीलाष्टचक्रविवरगामिना शिलीमुखेन वामलोचने पुत्रिकाया, भ्रमणमेतदनपेक्षितपादपात निशातकरवालधारायामिति । यतोऽत्र परिसोढव्या परिषहा, निराकर्त्तव्या दिव्याद्युपसर्गा, विधातव्या समस्तपापयोगनिवृत्ति, वोढव्यो यावत्कथ सुरगिरिगुरु शीलभारो, वर्त्तयितव्य सकलकाल माधुकर्या वर्त्तनयाऽऽत्मा, निष्टप्तव्यो विकृष्टतपोभिर्देह, स्वात्मीभावमानेतव्य सयम, समुन्मूलयितव्या रागादयो, निरोद्धव्यो हार्दतम प्रसर,

1 सासारिकार्थेषु मु ।

किम्बहुना? निहन्तव्योऽप्रमत्तचित्तैर्मोहमहावेताल इति । मृदुशयनाहारलालितपालित च मामक शरीर, तथा अपरिकर्मितमद्यापि चित्त, तन्नैतावत प्रायेण महाभारस्योद्वहने सामर्थ्यम् । अथ चैतदप्यस्ति, न यावत्सकलद्वन्द्वविच्छेदद्वारेण भागवती दीक्षाऽभ्युपगता, न तावत्सम्पूर्णं प्रशमसुखमशेषक्लेशविन्त्रोटलक्षणो वा मोक्षोऽवाप्यत इति । न जानीम, कि कुर्महे? ततोऽयमेव जीवोऽनवाप्तकर्त्तव्यनिर्णय सन्देहदोलारूढहृदय कियन्तमपि काल चिन्तयन्नेवावतिष्ठते ।

## आस्वादितप्रशमसुखस्य सवेगवृद्धि वैराग्ये स्थितप्रज्ञता

ततो यदुक्त यदुत—अन्यदा तेन वनीपकेन महाकल्याणकाऽऽपूर्णोदरेण तत्कदन्नं लीलया कथञ्चित् प्राशित, ततस्तृप्त्युत्तरकाले भुक्तत्वात्तस्य यथावस्थितैरेव गुणै· कुथितत्वविरसत्वनिन्द्यत्वादिभिश्चेतसि प्रतिभातं, तत· संजातोऽस्य तस्योपरि व्यलीकीभाव·, ततस्त्यक्तव्यमेवेदं मयेति सिद्धान्तीकृत्य स्वमनसा तत्त्यागार्थमादिष्टा सद्बुद्धि·, तयाऽभिहितं नर्मब्रोधकरेण सार्द्ध पर्यालोच्य मुच्यतामेतदिति, ततस्तदन्तिके गत्वा निवेदित· स्वाभिप्रायो वनीपकेन, तेनापि निकाचनापूर्वं त्याजितोऽसौ तत्कदन्नं, क्षालितं विमलजलैस्तद्भाजनं, पूरितं परमान्नेन, विहितस्तद्दिने महोत्सवः, जात जनप्रवादवशेन तस्य वनीपकस्याऽभिधानं सपुण्यक इति तदिद वृत्तान्तान्तरमस्यापि जीवस्य दोलायमानबुद्धेस्तथा गृहस्थावस्थाया वर्त्तमानस्य क्वचित्सभवतीत्यवगन्तव्य, तथाहि—यदाऽय जीवो विदितप्रशमसुखास्वादो भवति भवप्रपञ्चाद्विरक्तचित्तस्तथापि केनचिदालम्बनेन गृहमधिवसति तदा करोत्येव विशिष्टतर तपोनियमाभ्यास, *स एष परमान्नाभ्यवहारोऽभिधीयते ।* यत्तु तस्यामवस्थायामनादरेणार्थोपार्जन, कामासेवन वा *तल्लीलया कदशनप्राशनमिति* विज्ञेयम् । ततो यदा भार्या वा व्यलीकमाचरेत्, पुत्रो वा दुर्विनीतता कुर्यात्, दुहिता वा विनयमतिलङ्घयेत्, भगिनी वा विपरीतचारितामनुचेष्टेत, भ्राता वा धर्मद्वारेण धनव्यय विधीयमान न बहु मन्यते, जननीजनकौ वा गृहकर्त्तव्येषु शिथिलोऽयमिति जनसमक्षमाक्रोशेता, बन्धुवर्गो वा व्यभिचार भजेत, परिकरो वाऽऽज्ञा प्रतिकूलयेत्, स्वदेहो वाऽतिलालितपालितोऽपि खलजनवद्रोगादिक विकारमादर्शयेत्, धननिचयो वा अकाण्ड एव विद्युल्लताविलसितमनुविदध्यात्, तदाऽस्य परमान्नतृप्तस्य कुभोजनमिव समस्तोऽपि ससारविस्तार [तर मु] सुतरा यथावस्थितस्वरूपेण मनसि प्रतिभासयेत् । ततस्तदाऽय विविक्तेन चेतसा प्रादुर्भूतसवेग सन्नेव भावयेत् अये! यदर्थमह विज्ञातपरमार्थोऽपि स्वकार्यमवधीर्य सदनमधिवसामि तस्य स्वजनधनादेरेवविध परिणाम, तथापि ममाऽपर्यालोचितकारिणो नास्योपरि स्नेह (मोह) प्रवर्त्तमानो निवर्त्तते, नूनमविद्याविलसितमेवेद, यदीदृशेऽप्यत्र चेतस प्रतिबन्ध, तत्किमर्थमनर्थव्यामूढहृदय खल्वहमात्मान वञ्चयामि, तस्मान्मुञ्चामीद सकल जम्बालकल्प *कोशिकाकारकीटस्येवात्मबन्धनमात्रफल* बहिरन्तरङ्गसङ्गकदम्बकम् । यद्यपि यदा यदा पर्यालोच्यते तदा तदा विषयस्नेहकलाकुलितचेतसि दुष्करोऽस्य त्याग प्रतिभासते, तथाऽपि त्यक्तव्यमेवेद मया पश्चाद्यद्भाव्य तद्भविष्यति । अथवा किमत्र यद्भाव्यम्? न भविष्यत्येव मे किञ्चितपरित्यक्तेऽस्मिन्नसुन्दर, किन्तर्हि? निरुपचरितश्चित्तप्रमोद एव सजनिष्यते । ततो यावदेष जीवोऽत्र परिग्रहकर्दमे गज इव निमग्नोऽवसीदति तावदेवास्याऽयमतिदुस्त्यज प्रतिभासते, यदा पुनरयमेतस्मान्निर्गतो भवति तदाऽय जीव सति विवेके नास्य धनविषयादे समुखमपि निरीक्षते *को हिं नाम सकर्णको लोके महाराज्याभिषेकमासाद्य पुनश्चाण्डालभावमात्मनोऽभिलषेत्?* तदेवमेष जीवस्त्यक्तव्यमेवेद मया, नास्ति त्यजत कश्चिदपाय इति स्थितपक्ष करोति।

## दीक्षाऽऽदानम्

ततश्च पुन सद्बुद्ध्या पर्यालोचयन्नेव निश्चिनुते यदुत—प्रष्टव्या मयाऽत्र प्रयोजने सद्धर्मगुरव, ततो गत्वा तत्समीपे तेभ्य सविनय स्वाकूत निवेदयति । ततस्ते तमुपबृहयन्ति, "साधु भद्र! सुन्दरस्तेऽध्यवसाय, केवल महापुरुषक्षुण्णोऽय मार्ग त्रासहेतु कातरनराणा, ततोऽत्र प्रवर्तितुकामेन भवता गाढमवलम्बनीय धैर्यं, न खलु विशिष्टचित्तावष्टम्भविकला पुमासोऽस्य पर्यन्तगामिन सपद्यन्ते," *सेय निकाचना विज्ञेया* । ततोऽय जीवस्तद्गुरुवचन तथेति भावत प्रतिपद्यते । ततो गुरव सम्यक् परीक्ष्य सन्निहितगीतार्थैश्च सार्द्ध पर्यालोच्य योग्यतामेन प्रव्राजयेयुरिति । ततश्च समस्तसङ्गत्यागकारण *कदन्नत्याजनतुल्य* वर्त्तते, आजन्माऽऽलोचनादापनपुरस्सर प्रायश्चित्तेन तज्जीवितव्यस्य विशोधन *विमलजलैर्भाजनक्षालनकल्प* विज्ञेय, चारित्राऽऽरोपण तु तस्यैव *परमान्नपूरणसदृशम*वगन्तव्यमिति । भवति च सद्गुरूपदेशप्रसादादेवास्य जीवस्य दीक्षाग्रहणकाले भव्यप्रमोदहेतुश्चैत्यसघादिपूजाप्रधानोऽन्येषामपि सन्मार्गप्रवृत्तिकारणभूतो महानुत्सव इति ।

## दीक्षितस्य सपुण्यकत्व सार्थकम्

तथा सजायते गुरूणामपि समुत्तारितोऽस्माभिरय ससारकान्तारादिति भावनया चित्तपरितोष, तत प्रवर्त्त[र्द्ध मु]ते तेषामस्योपरि गुरुतरा दया, तत्प्रसादादेवास्य जीवस्य विमलतरीभवति सद्बुद्धि, ततस्तादृशसदनुष्ठानविलोकनेन लोकतो वर्णवादोत्पत्ति, सपद्यते प्रवचनोद्भासना, ततश्चेद तेन समान विज्ञेय यदवाचि कथनके यदुत धर्मबोधकरो हृष्टस्तद्दया प्रमदोदधुरा सद्बुद्धिर्वर्द्धिताऽऽनन्दा, मुदित राजमन्दिरम् ॥417॥ ततोऽङ्गीकृतमन्दराऽऽकारविरतिमहाभारमेन जीव तदा श्लाघन्ते भक्तिभरनिर्भरतया रोमाञ्चाञ्चितवपुषो भव्यलोका, यदुत→धन्य, कृतार्थोऽय, सुलब्धमस्य महात्मनो जन्म, यस्यास्य सत्प्रवृत्तिदर्शनेन निश्चीयते संजाता भगवदव[दा मु]लोकना, सपन्न सद्धर्मसूरिपादप्रसाद, तत एवाऽऽविर्भूता सुन्दरा बुद्धि तत कृतोऽनेन बहिरन्तरङ्गसङ्गत्याग, स्वीकृत ज्ञानादित्रय, निर्द्दलितप्राया रागादय, न ह्यपुण्यवतामेष व्यतिकर सभवति, ततोऽय जीव *सपुण्यक* इति जनैस्तदा सयुक्तिकमभिधीयत इति ।

## रागादिभावरोगतानवविशेष

ततस्तदनन्तर यदुक्त यथा तस्य वनीपकस्यापथ्याभावे नास्ति परिस्फुटा देहे रोगपीडा, यदि स्यात्पूर्वदोषजा क्वचिदवसरे सापि सूक्ष्मा भवति, तथा झटिति निवर्त्तते, तच्च चारुभेषजत्रयमनवरतमासेवते, ततस्तस्य धृतिबलादीनि वर्द्धन्ते, केवल बहुत्वाद्रोगमन्ततेर्नाद्यापि नीरोगो भवति, विशेषस्तु महान् सपन्न तथाहिय *प्रेतभूत प्रागासीद्, गाढ बीभत्सदर्शन । स तावदेष सपन्नो, मानुषाकारधारक'* ॥428॥ इति तदत्रापि जीवे तुल्य वर्त्तते, तथाहि—भावसार परिमुक्तगृहादिद्वन्द्वस्याऽस्य कारणाऽभावान्न भवत्येवाभिव्यक्ता काचिद्रागादिबाधा, अथ कथञ्चित् प्रागुपचितकर्मोदयवशेन सजायते तथाऽपि सा सूक्ष्मैव भवति, न चिरकालमवतिष्ठते । ततोऽय लोकव्यापारादिनिरपेक्षोऽनवरत वाचनाप्रच्छनापरावर्त्तनाऽनुप्रेक्षाधर्मकथालक्षण—पञ्चप्रकारस्वाध्यायविधानद्वारेण ज्ञानमभिवर्द्धयति, प्रवचनोन्नतिकरशास्त्राभ्यासादिना सम्यग्दर्शन स्थिरता लम्भयति, विशिष्ट—तरतपोनियमाद्यनुशीलनया चारित्रमपि सात्मीभाव नयति, *तदिद भावतो भेषजत्रयसेवनमभिधीयते* । ततस्तत्परिणत्या प्रादुर्भवन्त्येवास्य धीधृतिस्मृतिबलाऽऽधानादयो गुणविशेषा, केवलमनेकभवोपात्तकर्मप्रचयप्रभवा भूयास खलु रागादयो भावरोगा, ततो नायमद्यापि नीरोग सपद्यते, किन्तु रोगतानवविशेषो बृहत्तम सजात । तथाहि—योऽय जीवो गाढमनार्यकार्याऽऽचरणरति स्वसवेदनेन प्रागनुभूत सोऽधुना धर्माचरणेन प्रीतिमनुभवन्ननुभूयत इति ।

## प्राप्तज्ञानादित्रिकविनियोगेच्छा

ततो यथा भेषजत्रयोपभोगमाहात्म्येनैव रोरकालाभ्यस्ततुच्छताक्लीबतालौल्यशोकमोहभ्रमादीन् भावान् विरहय्य स वनीपको मनागुदारचित्त· सपन्न इत्युक्तम्, तथाऽयमपि जीवो ज्ञानाद्यभ्यासप्रभावेनैवाऽनादिकालपरिचितानपि तुच्छतादि—भावानवधीर्य किञ्चिन्मात्र स्फीतमानस इव सजात इत्युक्तमिति लक्ष्यते । यत्पुनरभिहित यदुत तेन वनीपकेन सा सद्बुद्धि· पृष्टा हृष्टेन, यथा—भद्रे! केन कर्मणा मयेतद् भेषजत्रयमवाप्तम्? तयोक्त स्वय दत्तमेवात्र लोके लभ्यते, तदेतज्जन्मान्तरे क्वचिद्दत्तपूर्वं त्वयेति । ततस्तेन चिन्तितं→यदि दत्त लभ्यते तत पुनरपि महता यत्नेन सत्पात्रेभ्य· प्रयच्छामि, येनेद सकलकल्याणहेतुभूत जन्मान्तरेऽपि ममाऽक्षय्यं सपद्यत इति। तदिदमत्रापि जीवे समान वर्त्तते, तथाहि ज्ञानदर्शन—चारित्राऽऽचरणजनित प्रशमाऽऽनन्द वेदयमानोऽय जीव सद्बुद्धिप्रसादादेवेदमाकलयति,यदुत→यदिद ज्ञानादित्रयम—शेषकल्याणपरम्परासपादकमतिदुर्लभमपि मया कथञ्चिदवाप्त, नेद प्राचीनशुभाऽऽचरणव्यतिरेकेण घटते, तदस्यानुगुण विहित मया प्रागपि किञ्चिदवदात कर्म, येनेदमासादितमिति । ततश्चेयमाविर्भवत्यस्य चिन्ता, यदुत—कथ पुनरेतत्सकलकालमविच्छेदेन मया लभ्य[क्ष्य मु]ते, ततोऽयमेतद्दानमेवास्य लाभकारण निश्चिनुते, ततोऽवधारयत्येव प्रयच्छामीदमधुना यथाशक्ति सत्पात्रेभ्यो, येन सपद्यते मे समीहितसिद्धिरिति ।

## महत्कृतगौरवस्य गर्वातिरेक

यथा च असौ द्रमकस्तथा चिन्तयन्नपि महाराजाद्यभिमतोऽहमित्यवलेपेनेद मन्यते, यदुत—यदि मां कश्चिदागत्य प्रार्थयिष्यति ततोऽह दास्यामि, नेतरथा, इत्यभिप्रायेण दित्सुरपि याचकं प्रतीक्षमाणश्चिरकालमवतिष्ठते स्म । तत्र च मन्दिरे ये लोकास्तेषा तद्भेषजत्रय चारुतरमस्त्येव, येऽपि तत्र तत्कालप्रविष्टतया तेन विकलास्ते(ऽन्येभ्य) तेभ्य एव तद् भूरि लभन्ते। ततोऽसौ वनीपको दिशो निभालयन्नास्ते, न कश्चित्तज्जिघृक्षया तत्समीपमुपतिष्ठत इति तथाऽयमपि जीवश्चिन्तयति,

यदुत—विहिते मे भगवदवलोकना, दृष्टोऽहं धर्मसूरिपादानां, नूनमनवरतमनुवर्तते ममोपरि सद्गुरुप्रपन्नता सदया, समुन्मीलिता मे मनसि लेशतः सद्बुद्धिः, श्लाघितोऽहं समस्तलोकैस्तद्द्वारेण, ततः सपुण्यतया निरत्तोरोऽस्मि [illegible], अतो निष्पन्दिनतं वितनुते । भवति चात्यन्तनिर्गुणस्यापि जन्तोर्मन्दर्भिः कृतगौरवस्य चेतसि गर्वातिरेकः । [illegible]दाहरणं, अन्यथा कथमयं जीवः समस्तजघन्यतानात्मनो विस्मृत्येत्थं प्रारभते? ततोऽयं भावयति—यदि मां [illegible] ज्ञानादिस्वरूपं प्रश्नयिष्यति ततोऽहं तत्तस्मै प्रतिपादयिष्यामि, नापरथा । ततस्तादृशाकूतविटम्बितोऽयं भूयांसमपि [illegible]मानोऽत्र मौनीन्द्रप्रवचने न कथञ्चित्तथाविधं प्रतीच्छकमासादयति, यतोऽत्र भवने वर्तन्ते ये जीवास्ते स्वत एव ज्ञानदर्शन-चारित्रत्रयं सुन्दरतरमाबिभ्रते, नैवंविध(स्य)सम्बन्धिनमुपदेशमपेक्षन्ते, येऽप्यधुनैव लब्धकर्मविवराः सन्मार्गाभिमुख[illegible]ऽपि विशिष्टज्ञानादिरहिता विद्यन्तेऽत्र केचिज्जीवा, तेऽप्यमुष्य प्रस्तुतजीवस्य संमुखमपि न निरीक्षन्ते, यतोऽत्र भगवन्मते [illegible] भूरितमा महामतयः सद्बोधादिविधानपटवोऽन्य एव महात्मानो, येभ्यस्ते प्राणिनस्तज्ज्ञानदर्शनचारित्रत्रयपरिकरं [illegible] प्राप्नुवन्ति । ततोऽयं जीवोऽनासादिततदर्थी व्यर्थकमात्मगुणोत्सेकमनुवर्तमानश्चिरमप्यासीत, न [illegible] स्वार्थं पुष्णीयादिति ।

## परोपकारार्थं परोपदेशप्रयासः

ततस्तदनन्तरं यथा 'तेन सपुण्यकेन सा सद्बुद्धिस्तद्दानोपायं परिपृष्टा, तया चोक्तं—भद्र! [illegible] भवता दीयतामिति । ततोऽसौ तत्र राजकुले घोषयत्युच्चैःशब्देन यदुत—"मदीयं भेषजत्रयं भो लोका! [illegible]" [illegible], ततस्तस्मात्पूत्कुर्वतः केचित्तथाविधास्तुच्छप्रकृतयो गृहीतवन्तोऽन्येषां पुनर्महतां स हास्यपात्रं प्रतिभासते स्म, हीलितश्चानेकाकारम् । ततो निवेदितस्तेन सद्बुद्धेर्वृत्तान्तः, तयाऽभिहितं—भद्र! भवतो रोरभावं स्मरन्तः [illegible] भद्रमनादरेणावलोकयन्ति, तेन न गृह्णन्ति भवता दीयमानं, ततो यदि भद्रस्य समस्ति समस्तजनग्राहणाभिलाषः ततोऽयं सदुपायो मामके चेतसि परिस्फुरति, यदुत—निधायेदं भेषजत्रयं विशालायां काष्ठपात्र्यां ततस्तां महाराजाङ्गणाजिरे [illegible] प्रदेशे समस्तजना पश्यन्ति तस्मिन् विमुच्य ततो विश्रब्धमानसोऽवतिष्ठस्व, का ते चिन्ता? यतोऽज्ञातस्वामिभावाः [illegible] तथाकृतं सर्वेऽपि ग्रहीष्यन्ति, किं वा तेन? यद्येकोऽपि सद्गुणः पुरुषस्तदादद्यात् ततो भविष्यति ते मनोरथपरिपूर्तिरिति । ततस्तथैव कृतं समस्तं तत्तेनेति' तथाऽयमपि जीवोऽनासादितज्ञानादिनिक्षेपपात्रः सद्बुद्धिपर्यालोचितेदं जानीते यदुत—न मौनमालम्बमानैः परेषां ज्ञानाद्याधानं विधातुं पार्यते, न च ज्ञानादिसंपादनं विहायान्यः परमार्थतः परोपकारः संभवति, अत्[illegible] च पुरुषेण जन्मान्तरेऽपि तस्याविच्छेदनमभिलषता परोपकारकरणपरेण भवितव्यं, तस्यैव पुरुषगुणोत्कर्ष[illegible] । यतः परोपकारः सम्यक् क्रियमाणो धीरतामभिवर्द्धयति, दीनतामपकर्षति, उदारचित्ततां विधत्ते, आत्मम्भरितां मोचयति, चेतोवैमल्यं वितनुते, प्रभुत्वमाविर्भावयति । ततोऽसौ प्रादुर्भूतवीर्योल्लासः, प्रणष्टरजोमोहः, परोपकारकरणपरः पुरुषो जन्मा-न्तरेष्वप्युत्तरोत्तरक्रमेण चास्तरं सन्मार्गविशेषमासादयति, न पुनस्ततः प्रतिपततीति । तदिदमवेत्य स्वयमुपेत्यापि ज्ञानादिस्वरूपप्रकाशने यथाशक्ति प्रवर्त्तितव्यं, न पराभ्यर्थनमपेक्षणीयमिति । ततोऽयं जीवोऽत्र भगवन्मते वर्त्तमानो देशकालाद्यपेक्षयाऽपरापरस्थानेषु परिभ्रमन् महता प्रपञ्चेन कुरुते भव्येभ्यो ज्ञानदर्शनचारित्ररूपमार्गप्रतिपादनं, सेयं *घोषणा विज्ञेया* । ततस्तथा [illegible] प्रस्तुतजीवाद्ये मन्दतरमतयस्ते तदुपदिष्टानि ज्ञानादीनि कदाचिद् गृह्णीयुः, ये पुनर्महागतयस्तेषामेष दोषपुञ्जानां [illegible] हास्यप्रायः प्रतिभासते, हीलनोचितश्च तेषामयं जीवः, यत्तु न हीलयन्ति स तेषामेव गुणो, न पुनरस्येति ।

## ज्ञानाद्युपदेशसर्वानुग्राहकतार्थं कथाकृतिः

ततोऽयं चिन्तयति—कथं पुनरयं ज्ञानाद्युपदेशः सर्वानुग्राहको भविष्यति? इति । ततः सद्बुद्धिमतादेवेदं [illegible] यदुत न साक्षान्मया दीयमानोऽयममीषां समस्तलोकानामुपादेयतां प्रतिपद्यते, तस्मादेवं करिष्ये यदुत—यान्येतानि ज्ञानदर्शनचारित्राणि भगवन्मतसारभूतानि प्रतिपाद्यानि वर्तन्ते, तान्येकस्यां ग्रन्थपद्धतौ ज्ञेयश्रद्धेयानुष्ठेयार्थविरचनेन [illegible] व्यवस्थाप्य ततस्तां ग्रन्थपद्धतिमत्र मौनीन्द्रे प्रवचने भव्यजनसमक्षं मुत्कलां मुञ्चामि, [illegible] वर्त्तमानानि तानि समस्तज[illegible] भविष्यन्ति, किञ्च—यद्येकस्यापि जन्तोरेतानि भावतः परिणमेयुः, ततस्तत्[illegible] न पर्याप्तम्? इति [illegible] जीवेनेयमुपमितिभवप्रपञ्चा नाम कथा यथार्थाभिधाना प्रकृष्टशब्दार्थविकल[illegible] निहितज्ञानदर्शनचारित्रभेषजत्रयी तथैव विधारयते ।

## कथाश्रवणे विज्ञप्ति

तत्रैव स्थिते भो भव्या ! श्रूयता भवद्भिरियमभ्यर्थना यथा→तेनापि रोरेण तथा प्रयुक्त तद्भेषजत्रयमुपादाय ये रोगिण सम्यगुपभुञ्जते ते नीरोगतामास्कन्दन्ति, युज्यते च तत्तेषा गृहीतु, तस्य ग्रहणे रोरोपकारसपत्ते, तथा मादृशाऽपि भगवदवलोकनयाऽवाप्तसद्गुरुपादप्रसादेन तदनुभावाविर्भूतसद्बुद्धितया यदस्या कथाया विरचयिष्यते ज्ञानादित्रय तल्लास्यन्ति ये जीवास्तेषा तद्रागादिभावरोगनिबर्हण सपत्स्यत एव, न खलु वक्तुर्गुणदोषावपेक्ष्य वाच्या पदार्था स्वार्थसाधने प्रवर्त्तन्ते, तथाहि–यद्यपि स्वय बुभुक्षाक्षाम पुरुष स्वामिसवन्धिनमाहारविशेष तदादेशेनैव तदुचितपरिजनाय प्रकटयन् न भोजनायोत्सङ्गे (त्सव प्र)कलयति तथाऽप्यसावाहारविशेषस्त परिजन तर्पयत्येव, न वक्तृदोषेण स्वस्प विरहयति, तथेहापि योजनीय तथाहि→स्वयं ज्ञानाद्यपरिपूर्णेनापि मया भगवदागमानुसारेण निवेदितानि ज्ञानादीनि ये भव्यसत्त्वा ग्रहीष्यन्ति, तेषां रागादिबुभुक्षोपशमेन स्वास्थ्य करिष्यन्त्येव, स्वरूप हि तत्तेषामिति । किञ्च यद्यपि भगवत्सिद्धान्तमध्यासीनमेकैक पदमाकर्ण्यमान भावत सकल रागादिरोगजालं समुन्मूलयितुं पटिष्ठमेव, स्वाधीन च तदाकर्णन भवता, तथा यद्यपि चिरन्तनमहापुरुषोपनिबद्धकथाप्रबन्धश्रवणेनापि सद्भावनया क्रियमाणेन रागादित्रोटन सुन्दरतर सभवत्येव, तथाऽप्यमुनोपायेन ससारसागर तरितुकामे मयि परमकरुणैकरसा सन्त प्रस्तुतकथाप्रबन्धमपि सर्वेऽपि भवन्त श्रोतुमर्हन्तीति ।

## पीठबन्धोपसहार

तदेवमेतत्कथानक प्राय प्रतिपदमुपनीत, यत्पुनरन्तरान्तरा किञ्चिन्नोपनीत तस्याप्यनेनैवानुसारेण स्वबुद्ध्यैवोपनय कार्य। भवत्येव गृहीतसङ्केतानामुपमानदर्शनादुपमेयप्रतीति, अत एवेद कथानकमादावस्यैवार्थस्य दर्शनार्थमुपन्यस्त, ततो [यतो मु] ऽस्या कथाया न भविष्यति प्रायेण निरुपनय पदोपन्यास, सूत्रोक्तशिक्षिताना [ततोऽत्रा मु] शिक्षिताना सुखेनैव तदवगतिर्भविष्यतीत्यलमतिविस्तरेणेति ।

इह हि जीवमपेक्ष्य मया निज, यदिदमुक्तमद सकले जने ।
लगति सभवमात्रतया त्वहो, गदितमात्मनि चारु विचार्यताम् ॥१॥
निन्दाऽऽत्मन प्रवचने परम प्रभावो, रागादिदोषगणदौष्ट्यमनिष्टता च ।
प्राक्कर्मणामतिबहुश्च भवप्रपञ्च, प्रख्यापित सकलमेतदिहाद्यपीठे ॥२॥
ससारेऽत्र निरादिके विचरता जीवेन दुखाकरे, जैनेन्द्र मतमाप्य दुर्लभतर ज्ञानादिरत्नत्रयम् ।
लब्धे तत्र विवेकिनाऽऽदरवता भाव्य सदा वर्द्धने, तस्यैवा[स्येवा मु]ऽऽद्यकथानकेन भवतामित्येतदावेदितम् ॥३॥

इत्युपमितिभवप्रपञ्चाया कथाया पीठबन्धो नाम प्रथम प्रस्ताव समाप्त

### उपमितिपीठबन्धामृतबिन्दव:

तत्त्वविदुषामेष मार्गो यदुत →
'तेषा कल्याणाभिनिवेशितया निष्प्रयोजनविकल्पो न चेतसि विवर्त्तते
अथ कदाचिदभावितावस्थाया विवर्त्तेत तथापि ते न निर्निमित्त भाषन्ते
अथ कदाचिदतत्त्वज्ञजनान्तर्गततया भाषेरन् तथापि न निर्हेतुक चेष्टन्ते
यदि पुनस्ते निष्कारण चेष्टेरन् ततोऽतत्त्वज्ञजनसार्थादविशिष्टतया तत्त्वविद्वत्ता विशीर्येत
तस्मात्तत्त्ववेदिष्वात्मनोऽन्तर्भावमभिलषता सकलकाल सर्वेण स्वविकल्पजल्पाचरणाना
सार्थकत्व यत्नत परिचिन्तनीयम् तद्वेदिना च पुरत कीर्त्तनीयम्
ते हि निरर्थकेष्वप्यात्मविकल्पजल्पव्यापारेषु सार्थकत्वबुद्धि कुर्वन्ममनुकम्पया वारयेयु' इति

॥ श्री नदीकर पार्श्वनाथाय नम ॥

॥ नमोत्थु ण समणस्स भगवओ महावीरस्स ॥

## तिर्यग्गति वक्तव्यतावर्णनो नाम

## द्वितीय प्रस्ताव

### मनुजगतेर्नगरकल्पना

*अस्तीह लोके सुमेरुरिवाऽऽका*[1]*लप्रतिष्ठा, नीरनिधिरिव महासत्त्व*[2]*सेविता, कल्याणपरम्परेव मनोरथपूरणी, जिनप्रणीत*–प्रव्रज्येव सत्पुरुषप्रमोदहेतु, समरादित्यकथेवानेकवृत्तान्ता, निर्जितत्रिभुवनेव लब्धश्लाघा, सुसाधुक्रियेवापुण्यैरतिदुर्लभा *मनुजगतिर्नाम नगरी* । सा च कीदृशी? उत्पत्तिभूमिर्धर्मस्य, मन्दिरमर्थस्य, प्रभव कामस्य, कारणं मोक्षस्य, स्थान महोत्सवानामिति । यस्यामुत्तुङ्गानि विशालानि विचित्रकनकरत्नभित्तिविचित्राणि अतिमनोहारितया परमदेवाध्यासितानि *मेरुरूपाणि* देवकुलानि । यस्या चानेकाद्भुतवस्तुस्थानभूतत्वेना[3]पहसितामरनिवासा क्षितिप्रतिष्ठिताद्यनेकपुरकलिता भरतादिवर्षरूपा पाटका, अत्युच्चतया कुलशैलाकारा पाटकपरिक्षेपा । यस्याश्च मध्यभागवर्त्ती दीर्घतराकारो विजयरूपाऽऽ[4]पणपङ्क्तिभिर्विराजितो महापुरुषकदम्बकसकुल शुभाशुभमूल्यानुरूपपण्यलाभहेतुर्महाविदेहरूपो विपणिमार्ग । यस्याश्च निरुद्धचन्द्राऽऽदित्यादिगतिप्रसरतयाऽतीत परचक्रलङ्घनाया *मानुषोत्तरपर्वताकार* प्राकार, तस्मात्प[5](दा)रतो यस्या विस्तीर्णगम्भीरा समुद्ररूपा परिखा, यस्या च सदा विबुधाध्यासितानि भद्रशालवनादिरूपाणि नानाकाननानि, यस्या च बहुविधजन्तुसघातजलपूरवाहिन्यो महानदीरूपा महारथ्या, यस्या च समस्तरथ्यावताराधारभूतौ लवणकालोदसमुद्ररूपौ द्वावेव महाराजमार्गौ, यस्या च महाराजमार्गप्रविभक्तानि जम्बूद्वीपधातकीखण्डपुष्करवरद्वीपार्द्धरूपाणि वसन्ति त्रीण्येव पाटकमण्डलानि, यस्या च लोकसुखहेतव समुचितस्थानस्थायिन कल्पद्रुमरूपा भूयास स्थानान्तरीयनृपतय इति ।

### मनुजनगर्या माहात्म्यम्

अपि च–यस्या क कोटिजिह्वोऽपि, गुणसंभारगोरवम् । शक्तो वर्णयितु लोके, नगर्या? किमु मादृश? ॥१॥
यस्या तीर्थकृतोऽनन्ताश्चक्रिकेशवशीरिण[6] । सजाता सजनिष्यन्ते, जायन्तेऽद्यापि केचन ॥२॥
या चेह सर्वशास्त्रेषु, लोके लोकोत्तरेऽपि च । अनन्तगुणसपूर्णा, दुर्लभत्वेन गीयते ॥३॥
उच्चावचेषु स्थानेषु, हिण्डित्वा श्रान्तजन्तव । प्राप्ता खेदविनोदेन, लभन्ते यत्र निर्वृतिम् ॥४॥
विनीता शुचयो दक्षा, यस्या धन्यतमा नरा । न धर्ममपहायान्यन्नून चेतसि कुर्वते ॥५॥
यस्या नार्य्य सदाऽनार्यकार्यवर्जनतत्परा । पुण्यभाज सदा धर्मं, जैनेन्द्र पर्युपासते ॥६॥
किञ्चात्र बहुनोक्तेन? वस्तु नास्ति जगत्त्रये । तस्या निवसता सम्यक्, पुसा यन्नोपपद्यते ॥७॥
सा हि रत्नाकरै पूर्णा, सा विद्याभूमिरुत्तमा । सा मनोनयनानन्दा, सा दुःखौघविनाशिका ॥८॥
साऽखिलाश्चर्यभूयिष्ठा, सा विशेषसमन्विता । सा मुनीन्द्रसमाकीर्णा, सा सुश्रावकभूषिता ॥९॥
सा जिनेन्द्राभिषेकादितोषिताखिलभव्यका । साऽपवर्गाय भव्याना, सा ससाराय पापिनाम् ॥10॥
जीवोऽजीवस्तथा पुण्यपापाद्या सन्ति नेति वा । अयं विचार प्रायेण, तस्यामेव विशेषत ॥११॥
यस्तस्यामपि सप्राप्तो, नगर्यां पुरुषाधम । न युज्यते गुणैर्लोकै, सोऽधन्य इति [7]गण्यते ॥१२॥
ता विमुच्य न लोकेऽपि, स्थानमस्तीह मानवा । । सपूर्णं यत्र जायेत, पुरुषार्थचतुष्टयम् ॥१३॥

### कर्मपरिणामस्य महानरेन्द्रत्व, केलिप्रियता च

तस्या च मनुजगतौ नगर्यामतुलबलपराक्रम, स्ववीर्याक्रान्तभुवनत्रय, शक्रादिभिरप्रतिहतशक्तिप्रसर *कर्मपरिणामो* नाम *महानरेन्द्र* ।

1 =शाश्वती । 2 =महाजलचरा तीर्थकृदाद्याश्च । 3 तिरस्कृता । 4 पावपण मु । 5 मानुषोत्तरपुष्कराधाभ्या अर्वाक् । 6 सीरिण प्र । 7 भण्यते प्र ।

यो नीतिशास्त्रमुल्लङ्घ्य, प्रतापैकरस सदा । तृणतुल्य जगत्सर्वं, विलोकयति हेलया ॥१॥
निर्दयो निरनुक्रोश, सर्वावस्थासु देहिनाम् । स चण्डशासनो दण्ड, पातयत्यनपेक्षया ॥२॥
स च केलिप्रियो दुष्टो, लोभादिभटवेष्टित । नाटकेषु परा काष्ठा, प्राप्तोऽत्यन्तविचक्षण ॥३॥
नास्ति मल्लो जगत्यन्यो, ममेति मदविह्वल । स राजोपद्रव कुर्वन्न [1]धनायति कस्यचित् ॥४॥
ततो हास्यपरो लोकान्, नानाकारैर्विडम्वनै । सर्वान्विडम्वयन्नुच्चैर्नाटयत्यात्मनोऽग्रत ॥५॥
तेऽपि लोका महान्तोऽपि, प्रतापमसहिष्णव । तस्य यद्यदसौ वक्ति, तत्तत्सर्वं प्रकुर्वते ॥६॥
ततश्च—कांश्चिन्नारकरूपेणाक्रोशतो वेदनातुरान् । नर्त्तयत्यात्मन प्रीति, मन्यमानो मुहुर्मुहु ॥७॥
यथा यथा महादुखैर्विह्वलास्तानुदीक्षते । तथा तथा मनस्युच्चैस्ल्लसत्येष तोषत ॥८॥
कांश्चिद्दर्पोद्धुरो भूत्वा, स इत्थ वत भाषते । भयविह्वलचित्तत्वादाज्ञानिर्देशकारकान् ॥९॥
अरे रे । तिर्यगाकार, गृहीत्वा रङ्गभूमिषु । कुरुध्व नाटक तूर्णं, मम चित्तप्रमोदकम् ॥10॥
ततश्च—काकरासभमार्जारमूषकाकारधारका । सिहचित्रकशार्दूलमृगवेषविडम्वका ॥११॥
गजोष्ट्राश्वबलीवर्दकपोतश्येनरूपिण । यूकापिपीलिकाकीटमत्कुणाकारधारिण ॥१२॥
अनन्तरूपास्तिर्यञ्चो, भूत्वा तच्चित्तमोदनम् । ते नाटक महाहास्यकारण नाटयन्ति वै ॥१३॥
कुब्जवामनमूकान्धवृद्धवाधिर्यसगतै । तथाऽन्यमानुषै पात्रैर्नाटक नाटयत्यसौ ॥१४॥
ईर्ष्याशोकभयग्रस्तैर्देववेषविडम्वकै । विहित नाटक दृष्ट्वा, स तुष्टो वत जायते ॥१५॥
तथा यथेष्टचेष्टोऽसौ, पुनस्तानेव सुन्दरै । आकारैर्योजयत्युच्चैर्लोकान्नाटककाम्यया ॥१६॥
विडम्व्यमानास्ते तेन, प्राणिन प्रभविष्णुना । त्रातारमात्मन कञ्चिन्न लभन्ते कदाचन ॥१७॥
स हि विज्ञापनातीत, स्वतन्त्रो यच्चिकीर्षति । तत्करोत्येव केनापि, न निषिद्धो निवर्तते ॥१८॥
ततश्च—क्वचिदिष्टवियोगार्त्तं, क्वचित्सगमसुन्दरम् । क्वचिद्रोगभराक्रान्त, क्वचिद्दारिद्र्यदूषितम् ॥१९॥
क्वचिदापद्गतानेकसत्त्वसघातदारुणम् । क्वचितसपत्समुद्भूतमहानन्दमनोहरम् ॥२०॥
विलङ्घ्य कुलमर्यादा, प्रधानकुलपुत्रकै । अनार्यकार्यकारित्वात्, क्वचिद्दर्शितविस्मयम् ॥२१॥
[2]क्वचिदनुरक्तभर्तार, मुञ्चद्भि कुलटागणै । नीचगामिभिराश्चर्यं, दधान सुकुलोद्गतै ॥२२॥
क्वचित् कृतचमत्कार, नृत्यद्भिर्हास्यहेतुभि । स्वागमोत्तीर्णकर्त्तव्यासक्तपाखण्डमण्डलै ॥२३॥
तदेवविधवृत्तान्तप्रतिवद्धमनाकुलम् । ससारनाटक चित्र, नाटयत्येष लीलया ॥२४॥
रागद्वेषाभिधानौ द्वौ, मुरजौ तत्र नाटके । दुष्टाभिसन्धिनामा तु, [3]तयोरास्फालको मत ॥२५॥
मानक्रोधादिनामानो, गायका [ना मु] कलकण्ठका । महामोहाभिधानस्तु, सूत्रधार प्रवर्त्तक ॥२६॥
रागाभिलाषसज्ञोऽत्र, नान्दीमङ्गलपाठक । अनेकविब्बोककर, कामनामा विदूषक ॥२७॥
कृष्णादिलेश्यानामानो, [4]वर्णका पात्रमण्डना । योनि प्रविशत्पात्राणा, नेपथ्य व्यवधायकम् ॥२८॥
भयादिसज्ञा विज्ञेया, कशिकास्तत्र नाटके । लोकाकाशोदरा नाम, विशाला रङ्गभूमिका ॥२९॥
पुद्गलस्कन्धनामान, शेषोपस्करसचया । इत्थ समग्रसामग्रीयुक्ते नाटकपेटके ॥30॥
नानापात्रपरावृत्त्या, सर्वलोकविडम्वनाम् । अपरापररूपेण, कुर्वाणोऽसौ प्रमोदते युग्मम् ॥३१॥
किञ्चात्र वहुनोक्तेन ? नास्ति तद्वस्तु किञ्चन । यदसौ मनसोऽभीष्ट, न करोति महानृप ॥३२॥

## कालपरिणतिर्महादेवी

तस्य चैवभूतस्य त्रिगण्डगलितवनहस्तिन इव सर्वत्रास्खलितप्रसरतया यथेष्टचेष्टया विचरतो यथाभिरुचितकारिण कर्मपरिणाममहानृपते समस्तान्त पुरतिलकभूता [कुलतिलक मु] ऋतुलक्ष्मीणामिव शरल्लक्ष्मी, शरल्लक्ष्मीणामिव कुमुदिनी, कुमुदिनीनामिव कमलिनी, कमलिनीनामिव कलहसिका, कलहसिकानामिव राजहसिका, वह्वीना नियतियदृच्छाप्रभृतीना देवीना मध्ये निजरूपलावण्यवर्णविज्ञानविलासादिभिर्गुणै रमणीयत्वेन प्रधानतमा कालपरिणतिर्नाम महादेवी । सा च तस्य

1 गृद्धिविषया न भवति । 2 नवाक्षरोऽय पाद । 3 वादक । 4 रङ्गा ।

नृपतेर्जीवितमिवात्यन्तवल्लभा, आत्मीयचित्तवृत्तिरिव सर्वकार्येषु यत्कृतप्रमाणा, सुमन्त्रिसहतिरिव स्वयमपि किञ्चित् कुर्वता तेन प्रष्टव्या, सुमित्रसन्ततिरिव विश्वासस्थान, किम्बहुना ? तदायत्त हि तस्य सकलमधिराज्यमिति, अत एव चन्द्रिकामिव शशधरो, रतिमिव मकरध्वजो, लक्ष्मीमिव केशव, पार्वतीमिव त्रिनयनस्तां कालपरिणति महादेवीं स कर्मपरिणामो महानरेश्वरो विरहकातरतया न कदाचिदेकाकिनी विरहयति, किन्तर्हि ? सर्वत्र गच्छस्तिष्ठश्चात्मसन्निहिता धारयति । साऽपि च दृढमनुरक्ता भर्त्तरि न तद्वचन प्रतिकूलयति, *परस्परानुकूलतया हि दम्पत्यो प्रेम निरन्तर सपद्यते, नान्यथा,* ततस्तथा वर्त्तमानयोस्तयोर्गाढ निरूढमागत प्रेम, विच्छिन्ना तद्विचलनाशङ्का ।

## तत्कृतविचित्रनाटकनिर्देश

ततश्चासौ कालपरिणतिर्गुस्तया महाराजप्रसादस्य, उन्मादकारितया यौवनस्य, तुच्छतया स्त्रीहृदयस्य, चञ्चलतया तत्स्वभावाना, कुतूहलतया तथाविधविडम्बनस्य, सर्वत्र लब्धप्रसराऽह प्रभवामीति मन्यमाना युक्ता सुषमदुष्षमादिभि शरीरभूताभि प्रियसखिभि परिवेष्टिता समयावलिकामुहूर्त्तप्रहरदिनाहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगपल्योपमसागरोपमावसर्पिण्युत्सर्पिणीपुद्गलपरावर्त्तादिना परिकरेण विविधकार्यकरणक्षमाऽस्मि लोकेऽहमिति सजातोत्सेकाऽस्मिन्नेव कर्मपरिणाममहाराजप्रवर्त्तिते *चित्रससारनाटके* तस्यैव राज्ञो निकटोपविष्टा सती साहङ्कारमेव निमन्त्रयति, यदुत →यान्येतानि योनिजवनिकाव्यवहितानि पात्राणि तिष्ठन्ति (तानि) मद्वचनेन निर्गच्छन्तु शीघ्रम् । एतानि च निर्गतानि उपगतरुदितव्यापाराणि गृह्णन्तु मातुस्तनम्, पुनर्धूलीधूसराणि रङ्गन्तु भूमौ, पुनर्लुठमानानि पदे पदे परिष्वजन्तु चरणाभ्या, कुर्वन्तु मूत्रपुरीषविमर्दनबीभत्समात्मानम् । पुनरतिक्रान्तबालभावानि धारयन्तु कुमारता, क्रीडन्तु नानाविधक्रीडाविब्बोकै, अभ्यस्यन्तु सकलकलाकलापकोशलम् । पुनरतिलङ्घितकुमारभावान्यध्यासयन्तु तारुण्यम् [तरुणता मु], दर्शयन्तु मन्मथगुरूपदेशानुसारेण सकलविवेकिलोकहास्यकारिणोऽनपेक्षितनिजकुलकलङ्काद्यपायान् कटाक्षविक्षेपादिसारान् नानाकारविलासविशेषानिति, प्रवर्तन्ता पारदार्यादिष्वनार्यकार्येषु । पुनरपगततारुण्यानि स्वीकुर्वन्तु मध्यमवयस्ता, प्रकटयन्तु सत्त्वबुद्धिपौरुषपराक्रमप्रकर्षम् । पुनरतिवाहितमध्यमवयोभावानि सश्रयन्तु जराजीर्णता, दर्शयन्तु वलीपलिताङ्गभङ्गकरणविकलत्वमलजम्बालाविलशरीरता, समाचरन्तु विपरीतस्वभावता, पुनर्व्यवकलितसकलजीवितभावानि देहत्यागेन नाटयन्तु मृतरूपताम् । तत पुन प्रविशन्तु योनिजवनिकाभ्यन्तरे, अनुभवन्तु तत्र गर्भकलमलान्तर्गतानि विविधदुखानि [ख मु] पुनश्च निर्गच्छन्तु रूपान्तरमुपादाय, कुर्वन्त्वेवमनन्तवारा प्रवेशनिर्गमनम् । तदेव सा कालपरिणतिर्महादेवी तेषा ससारनाटकान्तर्गताना समस्तपात्राणामवस्थितरूपेण क्षणद्वयमध्यासितु न ददाति, किन्तर्हि ? क्षणे क्षणे वराकाणि तान्यपरापररूपेण परावर्त्तयति, किञ्च–तेषा नृत्यता यान्युपकरणानि पुद्गलस्कन्धनामानि पूर्वमाख्यातानि तान्यप्यतिचपलस्वभावतया साऽऽत्मन प्रभुत्व दर्शयन्ती क्षणे क्षणे अपरापररूप भाजयति, तानि च पात्राणि "किं क्रियते ? (किं किं कुर्वन्ति ?) तत्र राजाप्यस्या वशवर्ती, न चान्योऽस्ति कश्चिदात्मनो मोचनोपाय" इति विचिन्त्य निर्गतिकानि सन्ति यथा यथा सा कालपरिणतिराज्ञापयति तथा तथा नानाकारमात्मान विडम्बयन्तीति [यती ति मु] ।

## तस्या प्रभुत्वाधिक्यम्

किञ्च–कर्मपरिणामादपि सकाशात्सा कालपरिणतिरात्मन्यधिकतर प्रभुत्वमावेदयत्येव स्वचरितै, तथाहि→कर्मपरिणामस्य ससारनाटकार्गतभूत[र्गत मु]जन्तुसन्तानापरापररूपकरणगोचर एव प्रभाव, तस्या पुन कालपरिणते ससार–नाटकव्यतिकरातीतरूपेष्वपि निर्वृतिनगरीनिवासिलोकेषु क्षणे क्षणे अपरापरावस्थाकरणचातुर्यं समस्त्येव, तत [इत्यत मु] सा सजातोत्सेकातिरेका किं न कुर्यादिति ? तदेवमनवरतप्रवृत्तेन परमाद्भुतभूतेन तेन नाटकेन तयोर्देवीनृपयोर्विलोकितेन सपद्यते मनप्रमोद, तद्दर्शनमेव तौ स्वराज्यफलमववुध्येते इति ।

## पुत्रचिन्ता

तयोश्च तिष्ठतोरेवमन्यदा रहसि स्थिता । सहर्ष वीक्ष्य राजान, सा देवी तमवोचत ॥१॥
भुक्त यन्नाथ। [यच्चाद्य मु] भोक्तव्य, पीत यत्पेयमञ्जसा । मानित यन्मया मान्य, साभिमानं च जीवितम् ॥२॥
नास्त्येव तत्सुख लोके, यस्य नास्वादितो रस । प्राप्त समस्तकल्याण, प्रसादाद्देवपादयो ॥३॥
दृष्ट द्रष्टव्यमप्यत्र, लोके यन्नाथ। सुन्दरम् । किन्तु पुत्रमुख देव ! मया नाद्यापि वीक्षितम् ॥४॥
यदि तद्देवपादाना, प्रसादादेव जायते । ततो मे जीवित श्लाघ्यमन्यथा जीवित वृथा ॥५॥

नरपतिस्वाच→साधु, साधूदित देवि । रोचते मह्यमप्यद । समदुखसुखो देव्या, वर्त्तेऽह सर्वकर्म्मसु ॥६॥
किं च→न विषादोऽत्र कर्त्तव्यो, देव्या यस्मात्प्रयोजने । आवयोरेकचित्तत्व, यत्र तज्जायते ध्रुवम् ॥७॥
कालपरिणतिस्वाच→चारु चारूदित नाथैर्विहितो मदनुग्रह । भविष्यतीत्थमेवेद वद्धो ग्रन्थिरय मया ॥८॥
आनन्दजलपूर्णाक्षी, भर्त्तुर्वाक्येन तेन सा । तत सजातविश्रम्भा, सतोषा समपद्यत ॥९॥
अन्यदा पश्चिमे यामे, रजन्या शयन गता । स्वप्ने कमलपत्राक्षी, दृष्ट्वैव सा व्यवुध्यत ॥10॥
वदनेन प्रविष्टो मे, जठरे निर्गतस्तत । नीत केनापि मित्रेण, नर सर्वाङ्गसुन्दर ॥११॥
ततो हर्षविषादाढ्य, वहन्ती रसमुत्थिता । त स्वप्न नरनाथाय, साऽऽचचक्षे विचक्षणा ॥१२॥
नरपतिस्वाच–स्वप्नस्यास्य फल देवि। मम चेतसि भासते । भविष्यत्युत्तम पुत्रस्तवानन्दविधायक ॥१३॥
केवल न चिर[1] हे, तावके स भविष्यति । धर्म्मसूरिवचोवुद्ध, स्वार्थसिद्धि करिष्यति ॥१४॥
कालपरिणतिस्वाच–जायता पुत्रकस्तावत्पर्याप्त तावतैव मे । करोतु रोचते तस्मै, यत्तदेव तत परम् ॥१५॥
ततश्चाविरभूद् गर्भस्त वहन्त्या प्रमोदत । अथ मासे तृतीयेऽस्या, सजातोऽय मनोरथ ॥१६॥
अभय सर्वसत्त्वेभ्य, सर्वार्थिभ्यो धन तथा । ज्ञान च ज्ञानशून्येभ्यश्चेद्यच्छामि यथेच्छया ॥१७॥
तथाविधविकल्प त, निवेद्य वरभूभुजे । सपूर्णेच्छा ततो जाता, कृत्वेष्ट तदनुज्ञया ॥१८॥
अथ सपूर्णकालेन, मुहूर्त्ते सुन्दरेऽनघा । सा दारक शुभ सूता, सर्वलक्षणसयुतम् ॥19॥

### पुत्रजन्ममहोत्सवो नामकरणविधिश्च

तत ससम्भ्रममुपगम्य निवेदित दारकस्य जन्म नरपतये प्रियनिवेदिकाभिधानया दासदारिकया, दत्त च तेनाह्लादातिरेक–सपाद्यमनाख्येयमवस्थान्तरमनुभवता तस्यै एव [तस्यैव मु] मनोरथाधिक पारितोषिक दान, दत्तश्चानन्दपुलकोद्भेदसुन्दर देह दधानेन महत्तमानामादेश, यदुत→भो भो महत्तमा। देवीपुत्रजन्माभ्युदयमुद्दिश्य घोषणापूर्वक ददध्वमनपेक्षितसारासारविचाराणि महादानानि, पूजयत गुरूजन, समानयत परिजन, पूरयत प्रणयिजन, मोचयत वन्धनागार, वादयताऽऽनन्दमर्द्दलसन्दोह, नृत्यत यथेष्टमुद्दामतया, पिवत पान, सेवध्व दयिताजन, मा गृह्णीत शुल्क, मुञ्चत दण्ड, आश्वासयत भीतलोक, वसन्तु सुस्वस्थचित्ता समस्ता जना, नास्ति कस्यचिदपराधगन्धोऽपीति । ततो 'यदाज्ञापयति देव' इति विनयनतोत्तमाङ्गै प्रतिपद्य सपादित तद्राजशासन महत्तमै, निर्वर्त्तितोऽशेषजनचमत्कारकारी जन्मदिनमहोत्सव, प्रतिष्ठापित समुचिते काले दारकस्य नरनाथेन स्वचित्तेनैव पर्यालोच्य 'यतोऽस्य गर्भावतारकाले जननी सर्वाङ्गसुन्दर नर वदनेन प्रविशन्त दृष्टवती' ततोऽस्य भवतु *भव्यपुरुष* इति नाम । ततस्तदाकर्ण्य देवी राजानमुवाच→'देव। अहमपि पुत्रकस्य किंचिन्नाम कर्त्तुमभिलषामि, तदनुजानातु देव' इति, नृपतिराह–देवि। क कल्याणेषु विरोध? अभिधीयता समीहितमिति, ततस्तयोक्त–यतोऽत्र गर्भस्थे मम कुशलकर्म्मकरणपक्षपातिनी मतिरभूत्ततोऽस्य भवतु *सुमति*रित्यभिधानम् । ततोऽहो क्षीरे खण्डक्षेपकल्पमेतद्देवीकौशलेन सपन्न यद्भव्यपुरुषस्य सत सुमितिरित्यभिधानान्तरमिति ब्रुवाण परितोषमुपागतो राजा। विशिष्टतर नामकरणमहोत्सव कारयामास।

### प्रज्ञाविशालोक्तराजनिर्बीजख्यातिहेतुता

इतश्चास्ति तस्यामेव मनुजगतौ *नगर्यामगृहीतसङ्केता* नाम ब्राह्मणी, सा जनवादेन नरपतिपुत्रजन्मनामकरणवृत्तान्तमवगम्य सखी प्रत्याह→प्रियसखि प्रज्ञाविशाले। पश्य यत् श्रूयते महाश्चर्यं लोके यथा→कालपरिणतिर्महादेवी भव्यपुरुषनामान दारक प्रसूतेति, तत प्रज्ञाविशालयोक्त→प्रियसखि। किमत्राश्चर्यम्? अगृहीतसङ्केताऽऽह→यतो मयाऽवधारितमासीत् किलैष कर्म्मपरिणाममहाराजो निर्वीज स्वरूपेण, इयमपि कालपरिणतिर्महादेवी वन्ध्येति । इदानी पुनरनयोरपि पुत्रोत्पत्ति श्रूयत इति महदाश्चर्यम्। प्रज्ञाविशालाऽऽह→अयि मुग्धे। सत्यमगृहीतसङ्केताऽसि, यतो न विज्ञातस्त्वया परमार्थ, अय हि राजा अविवेकादिभिर्मन्त्रिभिरतिवहुवीज इति मा भूद्दुर्जनचक्षुर्दोष इति कृत्वा निर्वीज इति प्रख्यापितो [प्रकाशितो मु] लोके । इयमपि महादेव्यनन्तापत्यजनयित्री तथापि दुर्जनचक्षुर्दोपभयादेव तैरेव मन्त्रिभिर्वन्ध्येति लोके प्रख्याप्यते, तथाहि–यावन्त क्वचित्केचिज्जन्तवो जायन्ते तेषां सर्वेषामेतावेव देवीनृपौ परमवीर्ययुक्ततया परमार्थतो [र्थतया मु] जननीजनकौ, अन्यच्च–किं न दृष्ट श्रुत वा क्वचिदपि प्रियसख्या अनयोर्नाटक पश्यतोर्यन्माहात्म्यम्? यदुत–राजा समस्तपात्राणि यथेच्छया

1 तदा सफल जनुरिति शेष

नारकतिर्यङ्नरामरगतिलक्षणससारान्तर्गतानेकयोनिलक्षप्रभवजन्तुरूपेण नाटयति, महादेवी पुनस्तेषामेव महाराजजनितनानारूपाणा समस्तपात्राणा गर्भावस्थित[ति मु]बालकुमारतरुणमध्यमजराजीर्णमृत्युगर्भप्रविष्टनिष्क्रान्तादिरूपाण्यनन्तवारा कारयतीति।

## कर्म–कालपरिणती–तत्त्वत सर्वेषा पितरौ

अगृहीतसङ्केताऽऽह→प्रियसखि। श्रुतमेतन्मया, किन्तु यदि नाम कर्म्मपरिणामस्य राज्ञ समस्तपात्रपरावर्तने सामर्थ्यं कालपरिणतेर्वा महादेव्यास्तेषामेवापरापरावस्थाकरणशक्ति तत्किमेतावतैवानयोर्जननीजनकत्व सभवति? प्रज्ञाविशालाऽऽह→ अयि प्रियवयस्ये। अत्यन्तमुग्धाऽसि, यतो गौरपीहार्द्धकथितमवबुध्यते, त्व पुन परिस्फुटमपि कथ्यमान न जानीषे, यत ससार एवात्र परमार्थतो नाटक , तस्य च यौ जनकावेतौ परमार्थत सर्वस्य जननीजनकाविति । अगृहीतसङ्केताऽऽह प्रियसखि। यदि समस्तजगज्जननीजनकयोरपि देवीनृपयोर्देव्या वन्ध्यात्व नृपस्य निर्बीजत्व दुर्जनचक्षुर्दोषभयादविवेकादिभिर्मन्त्रिभि प्रख्यापित लोके तत्किमित्यधुनाऽय भव्यपुरुषोऽनयो पुत्रतया महोत्सवकलकलेन प्रकाशित इति । प्रज्ञाविशालाऽऽ→समाकर्णय, अस्य प्रकाशने यत्कारणम् 'अस्त्यस्यामेव नगर्यां शुद्धसत्यवादी समस्तसत्त्वसङ्घातहितकारी सर्वभावस्वभाववेदी अनयोश्च कालपरिणतिकर्म्मपरिणामयोर्देवीनृपयो समस्तरहस्यस्थानेष्वत्यन्तभेदज्ञ *सदागमो* नाम परमपुरुष । अस्ति च तेन सार्द्धं मम घटना, स चान्यदा दृष्टो मया सहर्ष, पृष्टो निर्बन्धेन हर्षकारणम् ।

## भव्यपुरुषजन्मत सदागमस्य हर्ष

तेनोक्तम्→'आकर्णय भद्रे। यदि ते कुतूहल, येय कालपरिणतिर्महादेवी, अनया रहसि विज्ञापितो राजा, यदुत →'निर्विण्णाऽहमेतेन[मनेन मु]आत्मनोऽलीकवन्ध्याप्रवादेन, यतोऽहमनन्तापत्यापि दुर्जनचक्षुर्दोषभयादविवेकादिभिर्मन्त्रिभिर्वन्ध्येति प्रख्यापिता लोके, ममैवापत्यान्यन्यजनापत्यतया गीयन्ते, सोऽय *स्वेदजनिमित्तेन शाटकत्यागन्याय* । तदिद वन्ध्याभावलक्षण ममायश कलङ्क क्षालयितुमर्हति देव । ततो नृपेणोक्त→देवि। ममापि निर्बीजतया समानमेतत्, केवल धीरा भव, लब्धो मया अयश[पङ्क मु]क्षालनोपाय । देव्याह–कतमोऽसौ? प्रभुराह–देवि। अस्यामेव मनुजगतौ महाराजधान्या वर्तमानया भवत्या मन्त्रिमण्डलवचनमनपेक्ष्य प्रकाश्यते प्रधानपुत्रस्य जन्म, क्रियते महानन्दकलकल, ततश्चिरकालरूढमप्यावयोर्निर्बीजत्ववन्ध्या–भावलक्षणमयश कलङ्क क्षालित भविष्यतीति। तत सतोषया प्रतिपन्न महाराजवचन देव्या, कृत च यथाऽऽलोचित ताभ्याम् । तत प्रज्ञाविशाले। योऽय भव्यपुरुषो जात स ममात्यन्तवल्लभ , अस्य जन्मनाऽहमात्मान सफलमवगच्छामि' इत्यतो हर्षमुपागत इति । ततो मयोक्त→शोभन ते हर्षकारण, तदय [ततोऽय मु] अनेन कारणेन भव्यपुरुषो देवीनृपपुत्रतया प्रकाशित इति । अगृहीतसङ्केतयोक्त→ साधु वयस्ये। साधु सुन्दरमाख्यात भवत्या, नाशितो मे सन्देह , यथा [तथा मु] च त्वत्समीपमुपगच्छन्त्या मयाऽद्य हट्टमार्गे समाकर्णितो लोकप्रवादस्तथा देवीनृपयो क्षालितमेवायश कलङ्कमवगच्छामि ।

## सदागमकथितभव्यपुरुषगुणा

प्रज्ञाविशालयोक्त→किमाकर्णित प्रियसख्या? तयोक्त→दृष्टो मया तत्र बहुलोकमध्ये सुन्दराकार पुरुष , स च सविनय पृष्ट पौरमहत्तमै भगवन्। य एष राजदारको जात स कीदृग्गुणो भविष्यति? इति । तेनोक्त→भद्रा । शृणुत समस्तगुणसभारभाजनमेष वर्द्धमान कालक्रमेण भविष्यतीत्यतो न शक्यन्तेऽस्य सर्वे गुणा कथयितु, कथिता अपि न पार्यन्तेऽवधारयितु, तथापि लेशोद्देशत कथयामि→भविष्यत्येष निदर्शन रूपस्य, निलयो यौवनस्य, मन्दिर लावण्यस्य, दृष्टान्त प्रश्रयस्य, निकेतनमौदार्यस्य, निधिर्विनयस्य, सदन गाम्भीर्यस्य, आलयो विज्ञानस्य, आकरो दाक्षिण्यस्य, उत्पत्तिभूमिर्दाक्ष्यस्य, इयत्तापरिच्छेद स्थैर्यस्य, प्रत्यादेशो धैर्यस्य, गोचरो लज्जाया , उदाहरण विषयप्रागल्भ्यस्य, सद्भर्त्ता धृतिस्मृतिश्रद्धाविविदिषादिसुन्दरीणामिति । अन्यच्च–अनेकभवाभ्यस्तकुशलकर्म्मतया बालकालेऽपि प्रवर्त्तमानोऽय न भविष्यति केलिप्रिय , दर्शयिष्यति जने वत्सलता, समाचरिष्यति गुरुविनय, प्रकटयिष्यति धर्मानुराग, न करिष्यति लोलता विषयेषु, विजेष्यते कामक्रोधादिकमान्तरमरिषड्वर्ग, नन्दयिष्यति भवता चित्तानीति । ततस्तदाकर्ण्य सभय सहर्षं च दिशो निरीक्षमाणैस्तैरभिहितम्→ अहो विषमशीलतया समस्तजनविडम्बनाहेतुभूतयापि कालपरिणत्या कर्म्मपरिणामेन चेदमेक सुन्दरमाचरित यदाभ्यामस्या सकलदेशविख्याताया मनुजगतौ नगर्यामेष भव्यपुरुष सुमतिर्जनित , क्षालितान्येतज्जननेनाभ्यामात्मन समस्तदुश्चरितान्यपुत्रत्वादयशश्चेति।

## सदागमस्य त्रिकालभावप्रतिपादनपटुता

तदिद समस्तमवहितचित्तया मयाऽऽकर्णित, तत एव सजातो मे मनसि वितर्क –कथ पुनरनपत्यतया प्रसिद्ध

पुत्रोत्पत्ति ? को वेष पुरुष सर्वज्ञ इव भविष्यत्कालभाविनी राजदारकवक्तव्यता समस्ता कथयतीति ? ततश्चिन्तित मया—प्रियसखीमेतद्द्वयमपि प्रश्नयिष्यामि, कुशला हि सा सर्ववृत्तान्ताना, तत्रापनीतो भवत्या प्रथम सन्देह, साम्प्रत मे द्वितीयमपनयतु भवती, प्रज्ञाविशालयोक्तम् →वयस्ये । कार्यद्वारेणाहमवगच्छामि, स एव मम परिचित परमपुरुष सदागमनामा तदाचक्षाणोऽवलोकितो भवत्या, यत स एवातीतानागतवर्त्तमानकालभाविनो भावान् करतलगतामलकमिव प्रतिपादयितु पटिष्ठो, नापर, यतो विद्यन्तेऽस्या मनुजगतो नगर्यामन्येऽपि तादृशा अभिनिवोधावधिमनपर्यायकेवलनामानश्चत्वार परमपुरुषा, केवल न तेषा परप्रतिपादनशक्तिरस्ति । मूका हि ते चत्वारोऽपि स्वरूपेण, तेषामपि स्वरूप मत्पुरुषचेष्टितमवलम्ब्यमान परगुणप्रकाशनव्यसनितया लोकसमक्षमेष एव सदागमो भगवानुत्कीर्त्तयति ।

## राजदारकस्य सदागमात्यन्तवल्लभताया हेतु

अगृहीतसङ्केतयोक्तम्→वयस्ये । कि पुन कारणमेष राजदारकोऽस्य सदागमस्यात्यन्तवल्लभ ? कि चेतज्जन्मनाऽऽत्मानमय सफलमवगच्छति ? इति श्रोतुमिच्छमि । प्रज्ञाविशालयोक्तम्→एष हि महापुरुषतया सतत परोपकारकरणपरायण समस्तजन्तुभ्यो हितमाचरत्येव, केवलमेते पापिष्ठा प्राणिनो नास्य वचने वर्त्तन्ते, ते हि न लक्षयन्ति वराका यदस्य भगवतो माहात्म्य ततस्तेभ्यो हितमुपदिशन्तमप्येन सदागम केचिद् दूषयन्ति, केचिदपकर्णयन्ति, केचिदुपहसन्ति, केचिदुपदिष्टाकरणशक्तिमात्मनो दीपयन्ति, केचित्तद्वचनाद् दूरत एव त्रस्यन्ति, केचित्त प्रतारकधिया शङ्कन्ते, केचित्तद्वचनमादित एव नाववुध्यन्ते, केचित्तद्वचन श्रुतमपि न रोचयन्ति, केचित्तद्रोचितमपि नानुतिष्ठन्ति, केचिदनुष्ठातुमधिकृतमपि पुन शिथिलयन्ति । ततश्चैव स्थिते नास्य सम्यक् सपद्यते परोपकारकरणलक्षणा समीहितसिद्धि । ततोऽयमनया सतत प्राणिनामपात्रतया गाढमुद्वेजित । *भवत्येव हि गुरूणामपि निष्फलतया कुपात्रगोचरो महाप्रयास चित्तखेदहेतु* । अय तु राजदारको भव्यपुरुष इति पात्रभूतोऽस्य प्रतिभासते । भव्यपुरुष सन्नपि यदि दुर्म्मति स्यात् ततो न पात्रता लभेत । अय तु राजदारको यत सुमतिरत पात्रभूत एवेतिकृत्वाऽमुष्य सदागमस्यात्यन्तवल्लभ ।

## भव्यपुरुषजन्मना सदागमस्य स्वात्मसाफल्यावगम

अन्यच्च—अय सदागमो मन्यते—'यतोऽस्य दारकस्यैवरूपतया जनकत्वादेव सुन्दरतर कर्म्मपरिणाम, जननीत्वादेव चानुकूला कालपरिणति । ततोऽय विमुक्तवालभाव सुन्दरतया निजस्वभावस्य, प्रत्यासन्नतया कल्याणपारम्पर्यस्य, प्रमोदहेतुतयैवविधपुरुषाणा मद्दर्शनमस्यामुपलभ्य नियमेनास्य भविष्यति मनस्येवविधो वितर्क→यथा सुन्दरेय मनुजगतिर्नगरी, यस्यामेष सदागम परमपुरुष प्रतिवसति, ममाप्यस्ति प्रायेण योग्यता काचित्तथाविधा, ययाऽनेन [तेन मु] सह मीलक सपन्न, ततोऽमु परमपुरुष विनयेनाऽऽराध्यास्य सम्बन्धि ज्ञानमभ्यस्यामि, ततोऽनुकूलत्वाज्जननीजनकयोरस्ताभ्या समर्पितो भविष्यति ममैष शिष्य, ततोऽहमस्य सक्रामितनिजज्ञान कृतकृत्यो भविष्यामि' इति वुद्ध्याऽय सदागमोऽस्य सुमतेर्भव्यपुरुषस्य जन्मना सफलमात्मानमवगच्छतीति । अत एव सजातपरितोषतया जनसमक्ष राजदारकगुणानेष वर्णयति ।

## सदागमस्य माहात्म्यम्

अगृहीतसङ्केतयोक्तम्→प्रियसखि । कि पुनरस्य भगवत सदागमस्य माहात्म्यम् ? यदेते पापिष्ठसत्त्वा नाववुध्यन्ते, अनववुध्यमानाश्च नास्य वचने वर्त्तन्ते इति । प्रज्ञाविशालयोक्तम्→वयस्ये। समाकर्णय—य एव सर्वत्रानिवारितशक्तिप्रसर कर्म्मपरिणामो महाराजो यथेष्टचेष्टया ससारनाटकमावर्त्तयमान सततमीश्वरान् दरिद्रयति, सुभगान् दुर्भगयति, सुरूपान् कुरूपयति, पण्डितान्मूर्खयति, शूरान् क्लीवयति, मानिनो दीनयति, तिरश्चो नारकायति, नारकान्मनुष्ययति, मनुष्यान्देवयति, देवान् पशुभावमानयति, नरेन्द्रमपि कीटयति, चक्रवर्त्तिनमपि द्रमकयति, दरिद्रान्वेश्वरादिभावान् प्रापयति, किम्वहुना ? यथेष्ट भावपरावर्त्तन विदधानो न क्वचित्प्रतिहन्यते । *अयमप्यस्य भगवत सदागमस्य सवन्धिनोऽभिधानादपि विभेति*, गन्धादपि पलायते, तथाहि→तावदेष कर्म्मपरिणाम एतान्समस्तलोकान्ससारनाटकविडम्वनया विडम्वयति यावदय सदागमो भगवान्न हुकारयति, यदि पुनरेष हुङ्कारयेत्ततो भयातिरेकत्रस्तसमस्तगात्रो महासमरसघट्टे कातरनर इव प्राणान् स्वयमेव समस्तानपि मुञ्चेत्, मोचिताश्चानेनामुष्मादनन्ता प्राणिन । अगृहीतसङ्केतयोक्तम्→ते किम्मिति न दृश्यन्ते ? प्रज्ञाविशालाऽऽह—अस्ति कर्म्मपरिणाममहाराजभुक्तेरतिक्रान्ता निर्वृत्तिर्नाम महानगरी, ततस्ते सदागमहुङ्कारेण कर्म्मपरिणाममप्रभवन्तमात्मन्युपलभ्य मोचिता वय सदागमेनेति मत्वा कर्म्मपरिणामशिरसि पाददानद्वारेणोड्डीय तस्या गच्छन्ति, गताश्च तस्या सकलकाल समस्तोपद्रवत्रासरहिता

परमसुखिनस्तिष्ठन्ति, तेन कारणेन ते नेह दृश्यन्ते ।

## सदागमवचनाराधनविराधनफलनिर्देश

अगृहीतसङ्केतयोक्तम्—यद्येव किमित्येष सर्वलोकान्न मोचयति? कदर्थिता ह्येते वराका सर्वेऽप्यनेनातिविषमशीलतया कर्म्मपरिणाममहाराजेन, तन्न युक्तमस्य महापुरुषशेखरस्य सत्यामेवविधशक्तौ तत्कदर्थनस्योपेक्षणमिति । प्रज्ञाविशालाऽऽह → सत्यमेतत्, केवल प्रकृतिरियमस्य भगवत सदागमस्य यया वचनविपरीतकारिषु कुपात्रेष्ववधीरणा विधत्ते, ततस्तेनावधीरिता सन्तो नाथरहिता इति मत्वा गाढतर कर्म्मपरिणामराजेन कदर्थ्यन्ते । ये तु पात्रभूततयाऽस्य निर्देशकारिणो भवन्ति तानेव स्वा प्रकृतिमनुवर्त्तमान कर्म्मपरिणामकदर्थनाया सर्वथाऽयं मोचयतीति। येऽपि लाका भगवतोऽस्य सदागमस्योपरि भक्तिमन्तोऽप्यस्य सम्बन्धि वचन तथाविधशक्तिविकलतया सपूर्णमनुष्ठातु न शक्नुवन्ति, कि तर्हि? तन्मध्याद् बहुतम, बहुतर, बहुस्तोक स्तोकतर, स्तोकतम वा कुर्वन्ति, भक्तिमात्रक वाऽस्योपरि विदधति, नाममात्र वाऽस्य गृह्णन्ति । यदि वा येऽस्य भगवत सम्बन्धिनि वचने वर्त्तन्ते महात्मानस्तेषामुपरि 'धन्या कृतार्था पुण्यभाज सुलब्धजन्मान एते' इत्यादिवचनलिङ्गगम्य पक्षपात कुर्वन्ति। यद्वाऽस्य भगवतोऽभिधानमात्रमप्यजानाना प्रकृत्यैव ये भद्रका भवन्ति ततश्च मार्गानुसारिसदन्धन्यायेनानाभोगतोऽप्यस्य वचनानुसारेण वर्त्तन्ते तानप्येवविधाननल्पविकल्पान् लोकानेष कर्म्मपरिणामो महानरेन्द्रो यद्यपि ससारनाटके कियन्तमपि काल नाटयति, तथाऽपि सदागमस्याभिप्रेता एत इति मत्वा नाधमपात्रभाव नारकतिर्यक्कुमानुषकदमररूप तेषा विधत्ते । कि तर्हि? केषाञ्चिदनुत्तरसुररूप दर्शयति, केषाञ्चिद् ग्रैवेयकामराकार प्रकटयति, केषाञ्चिदुपरितनकल्पोपपन्न देवरूपता जनयति, केषाञ्चिदधस्तनकल्पोपपन्न[तपन्न मु]महर्द्धिलेखकरणि कारयति, केषाञ्चिद् भुवि सुरूपता लक्षयति, केषाञ्चिच्चक्रव–र्त्तिमहामण्डलिकादिप्रधानपुरुषभाव भावयति, सर्वथा प्रधानपात्ररूपतां विहाय न कदाचिद्रूपान्तरेण तान्नर्त्तयति । तत्पर्याप्तमेतावताऽस्य भगवत सदागमस्य माहात्म्येन, यदेवविधसामर्थ्ययुक्तोऽप्येष कर्मपरिणामो महानृपतिरेतद्भयाक्रान्तहृदय खल्वेव वर्त्तते–

## सदागमस्य सुबान्धवादिरूपता

अन्यच्च कथ्यते तुभ्य, कौतुक यदि विद्यते । रूप सदागमस्यास्य, तद बुध्यस्व मृगेक्षणे। ॥१॥
एष एव जगन्नाथो, वत्सल. परमार्थत । एष एव जगत्त्राणमेष एव सुबान्धव ॥२॥
एष एव विपद्गर्त्ते, पततामवलम्बनम् । एष एव भवाटव्यामटता मार्गदेशक ॥३॥
एष एव महावैद्य सर्वव्याधिनिवर्हण । एष एव गदोच्छेदकारण परमौषधम् ॥४॥
एष एव जगद्दीप, सर्ववस्तुप्रकाशक । प्रमादराक्षसातूर्णमेप एव विमोचक ॥५॥
एषोऽविरतिजम्बालकल्मषक्षालनक्षम । एष एव च योगाना, दुष्टाना वारणोद्यत ॥६॥
शब्दादिचरटाक्रान्ते, हृतधर्म्मधने जने । समर्थो भगवानेष, नान्यस्तस्य विमोचने ॥७॥
एष एव महाघोरनरकोद्धरणक्षम । पशुत्वदु खसघातात् [न् मु] त्रायकोऽप्येष देहिनाम् ॥८॥
एष एव कुमानुष्यदु खविच्छेदकारणम् । एष एव कुदेवत्वमन सन्तापनाशक ॥९॥
अज्ञानतरुविच्छेदे, एष एव कुठारक । एष एव महानिद्राद्रावण प्रतिबोधक ॥10॥
एष स्वाभाविकानन्दकारणत्वेन गीयते । सातासातोदयोत्पाद्यमिथ्याबुद्धिविधूनक ॥११॥
एष एव गुरुक्रोधवह्निविध्यापने जलम् । एष एव महामानपर्वतोद्दलने पवि ॥१२॥
एष मायामहाव्याघ्रीघातने शरभायते । एष एव महालोभनीरधे [दे मु] शोषणानल [निल मु] ॥१३॥
एष हास्यविकारस्य, गाढ प्रशमनक्षम । एष मोहोदयोत्पाद्या, रति निर्नाशयत्यलम् ॥१४॥
एष एवाऽरतिग्रस्ते [ऽर्त्तिग्रस्ते मु], जनेऽस्मिन्नमृतायते । एष एव भयोद्भ्रान्तसत्त्वसरक्षणक्षम ॥१५॥
एष शोकभराक्रान्त, सधीरयति देहिनम् । एष एव जुगुप्सादिविकार शमयत्यलम् ॥१६॥
एष कामपिशाचस्य, दृढमुच्चाटने पटु । एष एव च मार्तण्डो, मिथ्यात्वध्वान्तसूदन ॥१७॥
एष एव चतुर्भेदजीवितोच्छेदकारणम् । यतो जीव [1]ततोऽतीते, नयत्येष शिवालये ॥१८॥
शुभेतरेण या नाम्ना, कृता लोकविडम्बना । छिन्ते [कृन्ते मु] तामेष लोकानामन[2]ङ्गस्थानदानत ॥१९॥

1 ततो=कर्मपरिणामाद् अतीत=रहिते । 2 न विद्यतेऽङ्ग शरीर यत्र–तत् अनङ्ग=शिवास्पदमेव ।

सर्वोत्तमत्व भक्तानां, विधायाक्षय[1]मव्ययम् । एष एव छिनत्त्युच्चैर्नीचैर्गोत्रविडम्बनाम् ॥20॥
एष एव च दानादिशक्तिसन्दोहकारणम् । एष एव महावीर्ययोगहेतुरुदाहृत ॥२१॥
अन्यच्च ये महापापा, निर्भाग्या पुरुषाधमा । न ते सदागमस्यास्य, नामापि वहु मन्यते ॥२२॥
[2]ततस्तेन नरेन्द्रेण, ते पूर्वोक्तविधानत । संसारनाटकेनोच्चे, कदर्थ्यन्ते निरन्तरम् ॥२३॥
*य एव भाविकल्याणा, पुण्यभाजो नरोत्तमा । ते सदागमनिर्देश, कुर्वन्ति महदाद*[3]*रात्* ॥२४॥
ततोऽपकर्ण्य राजान, ते विडम्बनकारिणम् । ससारनाटकान्मुक्ता, मोदन्ते निर्वृतो गता ॥२५॥
राजभुक्तो वसन्तोऽपि, राजान तृणतुल्यकम् । सदागमप्रसादेन, मन्यन्ते ते निराकुला ॥२६॥
किञ्चाऽत्र वहुनोक्तेन? नास्ति तद्वस्तु किञ्चन । सदागमेऽस्मिन् भक्ताना, सुन्दर यन्न जायते ॥२७॥
तदेतदस्य माहात्म्य, किञ्चिल्लेशेन वर्णितम् । विशेपत पुन कोऽस्य, गुणाना वर्णनक्षम ? ॥२८॥
तत प्रज्ञाविशालाया, वाक्यमाकर्ण्य विस्मिता । हृदये चिन्तयत्येव, सा सन्देहमुपागता ॥२९॥
यदिद प्रियसख्या मे, विहित गुणवर्णनम् । यदि सत्यमिद तेन, नास्ति तुल्यस्ततोऽपर ॥30॥
अत पश्यामि त तावत्करोमि स्व विनिश्चयम् । *परप्रत्ययतो ज्ञाते, न सन्देहो निवर्तते* ॥३१॥

## सदागमदर्शनाऽगृहीतसङ्केताविकल्पनाश

ततश्चैव विचिन्त्य तया अगृहीतसङ्केतयाऽभिहिता प्रज्ञाविशाला→प्रियसखि । सुनिश्चित सत्यवादिनीमपि भवतीमधुनाऽ– हमनेन सदागमस्यासम्भावनीयगुणवर्णनेनानर्गलभाषिणीमिव परिकल्पयामि । भवति च मे मनसि विकल्प – किल परिचितमितिकृत्वा तमेषा वर्णयति, अन्यथा कथ कर्म्मपरिणामो महानरेन्द्र कुतश्चिद्बिभियात् ? कथ वैकत्र पुरुषे एतावान् गुणसघात सभाव्येत? न च प्रियसखी कदाचन मा विप्रलम्भयति, तत सन्देहापन्न दोलायते मे मन, अतस्तमात्मपरिचित परमपुरुष विशेषतो दर्शयितुमर्हति मे भवती । प्रज्ञाविशालाऽऽह→सुन्दरमेतद् अभिप्रेतमेव मे हृदयस्य, अभिगमनीयो द्रष्टव्य एव चासौ भगवान् । ततो गते द्वे अपि तन्मूल, दृष्टश्च ताभ्या तस्य महाविजयस्यापणपङ्क्तिभिर्विराजितस्यानेकमहापुरुषाकीर्णस्य महाविदेहरूपस्य विपणिमार्गस्य मध्ये वर्त्तमान प्रधानजनपरिकरितो भूतभवद्भविष्यद्भावस्वभावाविर्भावन कुर्वाणो भगवान् सदागम । तत प्रत्यासन्नीभूय प्रणम्य तच्चरणयुगलमुपविष्टे ते तन्निकटे । तदाकृतिदर्शनादेव सवहुमान मुहुर्मुहुर्विलोकनादगृहीतसङ्केताया प्रनष्ट इव सन्देहो, वर्द्धितश्चित्तानन्द, समुत्पन्नो विश्रम्भो, मताऽऽत्मन कृतार्थता तद्दर्शनेनेति । तत प्रज्ञाविशाला प्रत्यभिहितमनया ।

## अगृहीतसङ्केताकृतसदागमपर्युपासनासकल्प

अपि च→धन्याऽसि त्व महाभागे! सुन्दर तव जीवितम् । यस्या परिचयोऽनेन, पुरुषेण महात्मना ॥१॥
अह तु मन्दभाग्याऽऽस, वञ्चिताऽऽस पुरा यया । न दृष्टोऽय महाभाग, पुरुष पूतकल्मष ॥२॥
नाधन्या प्राप्नुवन्तीम, भगवन्त सदागमम् । *निर्लक्षणनरो नैव, चिन्तामणिमवाप्नुते* ॥३॥
सजाता पूतपापाऽहमधुना मृगलोचने! । तव प्रसादाद् दृष्ट्वेम, महाभाग सदागमम् ॥४॥
त्वया कमलपत्राक्षि! येऽस्य सवर्णिता गुणा । ते तथैव मया सर्वे, दर्शनादेव निश्चिता ॥५॥
नाह विशेपतोऽद्यापि, वेद्म्यस्य गुणगोरवम् । नास्त्यन्य पुरुषोऽनेन, तुल्य एतत्तु लक्षये ॥६॥
आसीन्मे मन्दभाग्याया, पुरेम प्रति सशय । गुणेषु दर्शनादेव, साम्प्रत प्रलय गत ॥७॥
निगूढचरिताऽसि त्व, सत्य सद्भाववर्जिता । यया न दर्शित पूर्वं, ममैष पुरुषोत्तम ॥८॥
तत्साम्प्रत मयाऽप्यस्य, भवत्या सह सुन्दरि! । दिने दिने समागत्य, कर्त्तव्या पर्युपासना ॥९॥
गुणा स्वरूपमाचारश्चित्ताराधनमुच्चकै । त्वयाऽस्य सर्वं चार्वङ्गि! ज्ञात कालेन भूयसा ॥10॥
अतो ममापि तत्सर्वं, निवेद्य [4]वल्गुभाषिणि! । येनाहमेनमाराध्य, भवामि तव सन्निभा ॥११॥
तत प्रज्ञाविशालाऽऽह, चारु चारुदित प्रिये! । यद्येव कुरुषे हन्त, सफलो मे परिश्रम ॥१२॥
अहो विशेपविज्ञानमहो वचनकौशलम् । अहो कृतज्ञता गुर्वी, तवेय चारुलोचने । ॥१३॥

---

1 यपद प्र । 2 ततोऽनन प्र । 3 विहितादरा प्र । 4 वल्गु=सुन्दरम् (वल्गुभाषिणि! प्र) ।

सङ्केताभावतो भद्रे! न जानीषे सदागमम् । तथापि परमार्थेन, योग्यता तव विद्यते ॥१४॥
एव च कुर्वती नित्य, मया सार्द्धं विचारणम् । अज्ञातपरमार्थाऽपि, ज्ञाततत्त्वा भविष्यसि ॥१५॥
तत सजाततोषे ते, नमस्कृत्य सदागमम् । प्रियसख्यौ गते तावत्स्वस्थान तत्र वासरे ॥१६॥
एव दिने दिने सख्यो, कुर्वत्त्यो सेवना तयो । सदागमस्य गच्छन्ति, दिनानि किल लीलया ॥१७॥

## धात्रीभूतप्रज्ञाविशालाप्रयत्नेन भव्यपुरुषस्य सदागमशिष्यीभावस्वीकरणम्

अथान्यदा विशालाक्षी, प्रोक्ता सा तेन धीमता । प्रज्ञाविशाला सानन्द, पुरुषेण महात्मना ॥१८॥
एष सर्वगुणाधारो, भवत्या स्नेहनिर्भर । बालकालात्समारभ्य, कर्त्तव्यो राजदारक ॥१९॥
गत्वा राजकुल भद्रे! विधाय [1]दृढसङ्गतम् । आवर्ज्य जननीचित्त, धात्री भव कथञ्चन ॥20॥
त्वयि सजातविश्रम्भो, येनाय राजदारक । सुख विवर्द्धमानोऽपि, प्रयाति मम वश्यताम् ॥२१॥
ततो निक्षिप्य नि शेषमात्मीय ज्ञानकौशलम् । सुपात्रेऽत्र भविष्यामि, कृतकृत्योऽहमञ्जसा ॥२२॥
ततो यदादिशत्यार्य । इत्युक्त्वा नतमस्तका । प्रज्ञाविशाला तद्वाक्यमनुतस्थौ कृतादरा ॥२३॥
अथासौ भव्यपुरुषस्ता, धात्री प्राप्य सुन्दराम् । ललमान सुखेनाऽऽस्ते, देववद्दिवि लीलया ॥२४॥
क्रमात्सवर्द्धमानोऽसौ, कल्पपादपसनिभ । सजात सर्वलोकाना, लोचनानन्ददायक ॥२५॥
ये ते सदागमेनोच्चैर्भाविनो वर्णिता गुणा । आविर्भूता समस्तास्ते, कौमारे तस्य तिष्ठत ॥२६॥
तत परिचय कर्तुं, तया प्रज्ञाविशालया । नीत सदागमाभ्यर्णे, सोऽन्यदा राजदारक ॥२७॥
स च त वीक्ष्य पुण्यात्मा, महाभाग सदागमम् । भाविभद्रतया धन्य, पर हर्षमुपागत ॥२८॥
तत प्रणम्य सद्भक्त्या, निषण्णोऽसौ तदन्तिके । आकर्णित मनोहारि, तद्वाक्यममृतोपमम् ॥२९॥
आवर्जितो गुणैस्तस्य, शशाङ्ककरनिर्मलै । स भव्यपुरुषश्चित्ते, ततश्चेदमचिन्तयत् ॥30॥
अस्याहो वाक्यमाधुर्यमहो रूपमहो गुणा । अहो मे धन्यता येन, नरोऽयमवलोकित ॥३१॥
धन्येय नगरी यस्या, वसत्येष सदागम । सजात पूतपापोऽह, दर्शनादस्य धीमत ॥३२॥
नूनमेष भवद्भूतभाविभावविभावनम् । भावतो भगवानुच्चै, करोत्येष सदागम ॥३३॥
तदेष सदुपाध्यायो, यदि सपद्यते मम । ततोऽहमस्य नेदिष्ठो, गृह्णामि सकला कला ॥३४॥
तत प्रज्ञाविशालायास्तेनाकूत निवेदितम् । जननीजनकयोर्गत्वा, तयाऽपि कथित वच ॥३५॥
प्रादुर्भूतस्तयोस्तोष, प्रविधाय महोत्सवम् । तत समर्पितस्ताभ्या, सोऽन्यदा शुभवासरे ॥३६॥
कथम्?—कृतकौतुकसत्कार, परिपूज्य सदागमम् । स भव्यपुरुषस्तस्य, शिष्यत्वेन निवेदित ॥३७॥
सिताम्बरधरो धीर, सितभूषणभूषित । सितपुष्पभरापूर्ण, सितचन्दनचर्चित युग्मम् ॥३८॥
ततो महाप्रमोदेन, विनयेन विनेयताम् । प्रपन्नस्तस्य पुण्यात्मा, कलाग्रहणकाम्यया ॥३९॥
ततो दिने दिने याति, स पार्श्वे तस्य धीमत । सदागमस्य जिज्ञासु, सार्द्धं प्रज्ञाविशालया ॥40॥
अन्यदा हट्टमार्गेऽसौ, लीलयाऽऽस्ते सदागम । स भव्यपुरुषोऽभ्यर्णे, युक्त प्रज्ञाविशालया ॥४१॥
स भूरिनरसङ्घातपरिवारितविग्रह । अशेषभावसद्भाव, वदन्नास्ते सदागम ॥४२॥
अथागृहीतसङ्केता, सख्या पार्श्वे समागता । नत्वा सदागम साऽपि, निषण्णा शुद्धभूतले ॥४३॥
पृष्ट्वा प्रियसखीवार्त्ता, मानितो राजदारक । स्थिता सदागममुख, पश्यन्ती स्तिमितेक्षणा ॥४४॥

## ससारिजीवनामतस्करस्य सदागमशरणस्वीकार

इतश्चैककालमेवैकस्यां दिशि समुल्लसितो वाक्कलकल, श्रूयते विरसविषमडिण्डिमध्वनि, समाकर्ण्यते दुर्दान्तलोककृतोऽट्टहास, तत पातिता तदभिमुखा समस्तपर्षदा दृष्टि, यावत् विलिप्तसमस्तगात्रो भस्मना, चर्चितो गैरिकहस्तकै, खचितस्तृणमषीपुण्ड्रकै, विनाटितो ललमानया कणवीरमुण्डमालया, विडम्बितो वक्षस्थले घूर्णमानया शरावमालया, धारितातपत्रो जरत्पिटकखण्डेन, बद्धलोप्त्रो [ध्रो मु] गलैकदेशे आरोपितो रासभे, वेष्टित समन्ताद्राजपुरुषै, निन्द्यमानो लोकेन, प्रकम्पमानशरीर

1 सवृतम् प्र ।

तरलतरमितश्चेतश्चातिकातरतया भयोद्भ्रान्तहृदयो दशापि दिशो निरीक्षमाणो, नातिदूरादेव दृष्ट ससारिजीवनामा तस्कर। त च दृष्ट्वा सजाता प्रज्ञाविशालाया करुणा, चिन्तितमनया–'यदि परमस्य वराकस्यामुष्मात् सदागमात्सकाशात् शरण, नान्यस्मात्, कुतश्चित् । ततो गता तदभिमुख, दर्शिताऽस्मै यत्नेन सदागम, अभिहित च→भद्र। अमु भगवन्त शरण प्रतिपद्यस्वेति। स च सदागममुपलभ्य सहसा सजाताश्वास इव किञ्चिच्चिन्तयन्ननाख्येयमवस्थान्तरं वेदयमान पश्यतामेव लोकाना निमीलिताक्ष पतितो धरणीतले, स्थित कियन्तमपि काल निश्चल, किमेतदिति विस्मिता नागरिका, लब्धा कथञ्चिच्चेतना, तत समुत्थाय सदागममुद्दिश्यासो त्रायध्व नाथास्त्रायध्वमिति महता शब्देन पूत्कृतवान्, ततो मा भैषीरभयमभय तवेत्याश्वासितोऽसो सदागमेन। ततस्तदाकर्ण्य प्रपन्नोऽय सदागमस्य शरण, अङ्गीकृतश्चानेन, अतो न गोचरोऽधुना राजशासनस्येति विचिन्त्य विदितसदागम–माहात्म्या सभया प्रत्यक्पादै [पदे मु] रपसृता कम्पमानास्ते राजपुरुषा, स्थिता दूरदेशे, ततो विश्रब्धीभूतो मनाक् ससारिजीव । पृष्टोऽगृहीतसङ्केतया→भद्र। कतमेन व्यतिकरेण गृहीतस्त्वमेभि कृतान्तसदृशे राजपुरुषैरिति? सोऽवोचद्→अलमनेन व्यतिकरेण, अनाख्येय खल्वेष व्यतिकर, यदि वा जानन्त्येवामु व्यतिकर भगवन्त सदागमनाथा, किमाख्यातेन? सदागमेनोक्तम्→भद्र। महत्कुतूहलमस्या, अतस्तदपनोदार्थं कथयतु भवान्, को दोष ? ससारिजीवेनोक्त→यदाज्ञापयन्ति नाथा। केवल जनसमक्षमात्मविडम्बना कथयितु न पारयामि, ततो विविक्तमादिशन्तु नाथा इति ।

## ससारिजीववृत्तान्तेऽनादिनिगोदवर्णनम्

तत सदागमेन विलोकिता परिषत्, स्थिता गत्वा दूरदेशे, प्रज्ञाविशालाऽप्युत्तिष्ठन्ती त्वमप्याकर्णयस्वेति भणित्वा धारिता सदागमेन, तस्याश्च निकटवर्त्ती सदागमवचनेनैव भव्यपुरुषोऽपि स्थित एव । ततस्तेषां चतुर्णामपि पुरत केवलमगृहीतसङ्केतामुद्दिश्य प्रजल्पितोऽसौ ससारिजीव→अस्तीह लोके आकालप्रतिष्ठमनन्तजनाकुलमसव्यवहार नाम नगर, तत्र सर्वस्मिन्नेव नगरे ऽनादिवनस्पतिनामान कुलपुत्रका प्रतिवसन्ति, तस्मिंश्चास्यैव कर्म्मपरिणामस्य महानरेन्द्रस्य सबन्धिनावत्यन्ताऽबोधतीव्रमोहोदयनामानो सकलकालस्थायिनौ बलाधिकृतमहत्तमो प्रतिवसत । ताभ्या चात्यन्ताऽबोधतीव्रमोहोदयाभ्या तत्र नगरे यावन्तो लोकास्ते सर्वेऽपि कर्म्मपरिणाममहाराजादेशेनेव सुप्ता इव अस्पष्टचेतन्यतया, मत्ता इव कार्याकार्यविचारशून्यतया, मूर्च्छिता इव परस्पर लोलीभूततया, मृता इव लक्ष्यमाणविशिष्टचेष्टाविकलतया, निगोदाभिधानेष्वपवरकेषु निक्षिप्य सपिण्डिता सकलकाल धार्यन्ते । अत एव च ते लोका गाढसम्मूढतया न किञ्चिच्चेतयन्ति, न भाषन्ते, न विशिष्ट चेष्टन्ते, नापि ते छिद्यन्ते, न भिद्यन्ते, न दह्यन्ते, न प्लाव्यन्ते, न कुट्टयन्ते, न प्रतिघातमापद्यन्ते, न व्यक्ता वेदनामनुभवन्ति, नाप्यन्य कञ्चन लोकव्यवहार कुर्वन्ति, इदमेव च कारणमुररीकृत्य तन्नगरमसव्यवहारमिति नाम्ना गीयते । तत्र नगरे ससारिजीवनामाह वास्तव्य कुटुम्बिकोऽभूवम् । गतश्च तत्र वसतो ममानन्त काल ।

## तन्नियोगागमनम्

अन्यदा दत्ताऽऽस्थाने तीव्रमोहोदयमहत्तमे तन्निकटवर्त्तिनि चात्यन्ताऽबोधबलाधिकृते प्रविष्टा समुद्रवीचिरिव मोक्तिकनिकरवाहिनी, प्रावृट्काललक्ष्मीरिव समुन्नतपयोधरा, मलयमेखलेव चन्दनगन्धधारिणी, वसन्तश्रीरिव रुचिरपत्रतिलकाभरणा तत्परिणतिर्नाम प्रतीहारी । तया चावनितलन्यस्तजानुहस्तमस्तकया विधाय प्रणाम विरचितकरपुटमुकुलया विज्ञापित→देव। एष सुगृहीतनामधेयस्य देवस्य कर्म्मपरिणामस्य सबन्धी तन्नियोगो नाम दूतो देवदर्शनमभिलषन् प्रतीहारभूमो तिष्ठति, तदेवमवस्थिते देव प्रमाणमिति । ततो निरीक्षित तीव्रमोहोदयेन ससभ्रममत्यन्ताऽबोधवदन, स प्राह→शीघ्र प्रवेशयतु त भवती, ततो 'यदाज्ञापयति देव' इत्यभिधाय प्रवेशित प्रतिहार्या तन्नियोग । तेनापि सविनयमुपसृत्य प्रणतो महत्तमो बलाधिकृतश्च, अभिनन्दितस्ताभ्या, दापितमासन, उपविष्टोऽसो कृतोचिता प्रतिपत्ति, ततो विमुच्यासन, बद्ध्वा करमुकुल, कृत्वा ललाटतटे तीव्रमोहोदयेनोक्तम्→अपि कुशल देवपादाना महादेव्या शेषपरिजनस्य च? तन्नियोगेनोक्तम्→सुष्ठु कुशल, तीव्रमोहोदयेनोक्तम्→अनुग्रहोऽयमस्माक यदत्र भवत प्रेषणेनानुस्मृता वय देवपादैरित्यत कथय ताव(य प्र)दागमन प्रयोजनमिति । तन्नियोगेनोक्तम्–कोऽन्यो भवन्त विहाय देवपादानामनुग्रहार्ह ?

## तन्नियोगोक्तलोकस्थितिस्वरूपम्

आगमनप्रयोजन पुनरिदम्→'अस्ति तावद्विदितैव भवता विशेषेण माननीया, प्रष्टव्या सर्वप्रयोजनेषु, अलङ्घनीयवाक्या, अचिन्त्यमाहात्म्या च भगवती लोकस्थितिर्नाम देवपादाना महत्तमभगिनी । तस्याश्च तुष्टैर्देवपादै सकलकालमेषोऽधिकारो

वितीर्ण→यथाऽस्ति तावदेषोऽस्माक सर्वदा परिपन्थी कथञ्चिदुन्मूलयितुमशक्य सदागम परमशत्रु । ततोऽयमस्मद्बलमभिभूय क्वचिदन्तराऽन्तरा लब्धप्रसरतयाऽस्मदीयभुक्तेर्निस्सारयति काश्चिल्लोकान्, स्थापयति चास्माकमगम्याया निर्वृत्तौ नगर्याम् । एव च स्थिते विरलीभविष्यत्येष कालेन लोक, तत प्रकटीकरिष्यत्यस्माकमयशस्तन्न सुन्दरमेतत्, अतो भगवति लोकस्थिते। त्वयेद विधेयम्–अस्ति ममाविचलितरूपमेतदेव प्रयोजनमपेक्ष्य सरक्षणीयमसव्यवहार नाम नगरम् । ततो यावन्त सदागमेन मोचिता सन्तो मदीयभुक्तेनिर्गत्य निर्वृतिनगर्यां गच्छन्ति लोका तावन्त एव भगवत्या तस्मादसव्यवहारनगरादानीय मदीयशेषस्थानेषु प्रचारणीया । तत प्रचुरलोकतया समस्तस्थानाना सदागममोचिताना न कश्चिद्वार्त्तामपि प्रश्नयिष्यति । ततो न भविष्यत्य[यतो न भवत्य मु]स्माक छायाम्लानिरिति । ततो महाप्रसाद इति कृत्वा प्रतिपन्न सोऽधिकारो लोकस्थित्या, अह च यद्यपि देवपादोपजीवी तथापि विशेषतो लोकस्थिते प्रतिबद्ध, अत एव तद्द्वारेण तन्नियोग इति प्रसिद्धोऽह लोके, मोचिताश्च कियन्तोऽपि साम्प्रत सदागमेन लोका, ततोऽह भगवत्या लोकस्थित्या युष्मन्मूल तावता लोकानामानयनायेह प्रहित' इति । एतदाकर्ण्य भवन्त प्रमाण, ततो यदाज्ञापयति भगवतीति प्रतिपन्न तच्छसन महत्तमेन बलाधिकृतेन च ।

### अनादिनिगोदस्थितलोकसख्या

ततोऽपि महत्तमेनोक्तम्→भद्र। तन्नियोग। तावदुत्तिष्ठ–दर्शयामो भद्रस्यासव्यवहारनगरलोकप्रमाण येन गत सन् निवेदयसि त्व तद्देवपादेभ्य कालान्तरेऽपि येन न भवति तेषा लोकविरलीभवनचिन्ता, तन्नियोगेनोक्तम्→यदाज्ञापयत्यार्य । तत समुत्थितास्त्रयोऽपि नगर निरीक्षितु, दर्शिता समुच्छ्रितकरेण पर्यटता तीव्रमोहोदयेनाऽसख्येया गोलकनामान प्रासादास्तन्नियोगस्य, तन्मध्यवर्त्तिनश्चासख्येया एव दर्शिता निगोदनामानोऽपवरका, ते च विद्वद्भि साधारणशरीराणीत्यभिधीयन्ते, तदन्तर्भूताश्च दर्शिता अनन्ता लोका । ततो विस्मितस्तन्नियोग, उक्तो महत्तमेन→भद्र। दृष्ट नगरप्रमाणम्? स प्राह→सुष्ठु दृष्ट, तत सहस्ततालमट्टहासेन विहस्य तीव्रमोहोदयेनोक्तम्→पश्यत विमूढता सदागमस्य, स हि किल सुगृहीतनामधेयस्य देवस्य कर्म्मपरिणामस्य सबन्धिन लोक निर्वाहयितुमभिलषति, न जानीते वराकस्तत्प्रमाण, तथाहि–अत्र नगरे तावदसख्येया प्रासादा, तेषु प्रत्येकमसख्येया एवापवरका, तेषु चैकैकस्मिन्ननन्तलोका प्रतिवसन्ति, अनादिरूढश्चास्य सदागमस्याय लोकनिर्वाहणाग्रहरूपो ग्रह, तथापि तेनेयता कालेन निर्वाहयता यावन्तोऽत्रैकस्मिन्नपवरके लोकास्तेषामनन्तभागमात्र निर्वाहित, तत केय देवपादाना लोकविरलीभवनचिन्ता? तन्नियोगेनोक्तम्→सत्यमेतद्, अस्त्येव चाय देवस्याप्यवष्टम्भ, विशेषत पुनर्युष्मद्वचनमेतदह कथयिष्यामि । अन्यच्चोक्त भगवत्या लोकस्थित्या यथा→न भवता कालक्षेप कार्य, तत्सपाद्यता शीघ्र तदादेश इति, तत स्थितावुत्सारके महत्तमबलाधिकृतौ, महत्तमेनोक्तम्–केऽत्र प्रस्थापनायोग्या ? इति ।

### निगोदात्मकापवरकस्थितजीवाना परस्परस्नेह

अत्यन्तावोध प्राह→आर्य । किमत्र बहुनाऽऽलोचितेन? ज्ञाप्यतामेष व्यतिकरो नागरलोकाना, दीयता पटहक, क्रियता घोषणा, यथा→देवकर्म्मपरिणामादेशेन कियद्भिरपि लोकैरित स्थानात्तदीयशेषस्थानेषु गन्तव्यमतो येषामस्ति भवता तत्र गमनोत्साह ते स्वयमेव प्रवर्तन्तामिति, ततोऽनुकूलतया शेषस्थानानामुत्सङ्कलिता वयमिति च मत्वा भूयासो लोका स्वयमेव प्रवर्त्तिष्यन्ते, ततो विशेषतो नेयलोकसख्या दृष्ट्वा पृष्ट्वा च तन्नियोग तेषा मध्याद्येऽस्मभ्य रोचिष्यन्ते तानेव तावत्सख्यान् प्रहिष्याम इति । महत्तमेनोक्त→भद्र। स्वयमपि परिहितस्य भक्ति न जानीषे त्व, यतोऽमीभिर्लोकैर्न कदाचिद्दृष्ट स्थानान्तरमतो न जानन्ति तत्स्वरूपमपि, किम्पुनस्तस्यानुकूलताम्? अनादिप्रवाहेण चात्रैव वसन्तो रतिमुपगता खल्वेते, तथाऽनादिसम्बन्धेनैव रूढस्नेहा परस्पर नेच्छन्ति वियोग, तथाहि→पश्यतु भद्रो, येऽत्र लोका एकैकस्मिन्नपवरके वर्त्तन्ते तेऽतिस्निग्धतयाऽऽत्मनो गाढ सम्बन्धमुपदर्शयन्त समकमुच्छ्वसन्ति, समक निश्वसन्ति, समकमाहारयन्ति, समक निर्हारयन्ति, एकस्मिन्म्रियमाणे सर्वे म्रियन्ते, एकस्मिन् जीवति सर्वेऽपि जीवन्ति, तत्कथमेते स्थानान्तरगुणज्ञानरहिता एवविधप्रेमबद्धात्मानश्च स्वयमेव प्रवर्त्तिष्यन्ते ? तस्मादपर कश्चित्प्रस्थानोचितलोकपरिज्ञानोपायश्चिन्त्यता भवतेति । तत पर्याकुलीभूतो बलाधिकृत किमत्र विधेयमिति ।

### ससारिजीवभार्याभवितव्यताया महिमा

इतश्चास्ति भवितव्यता नाम मम भार्या । सा च शाटिकाबद्ध सुभटो वर्त्तते, यतोऽह नाममात्रेणैव तस्या भर्त्तेति प्रसिद्ध, परमार्थत पुन सैव भगवती मदीयगृहस्य शेषलोकगृहाणा च सम्बन्धिनी समस्तामपि कर्त्तव्यता तन्त्रयति । यत

सा अचिन्त्यमाहात्म्यतया स्वयमभिलषितमर्थं घटयन्ती नापेक्षतेऽन्यसम्बन्धिन पुरुषकार सहायतया, न विचारयति पुरुषानुकूलप्रतिकूलभाव, न गणयत्यवसर, न निरूपयत्यापद्गत, न निवार्यते सुरगुरुणाऽपि बुद्धिविभवेन, न प्रतिस्खल्यते विबुधपतिनाऽपि पराक्रमेण, नोपलभ्यते योगिभिरपि तस्या प्रतिविधानोपाय । अत्यन्तमसम्भावनीयमप्यर्थं सा भगवती स्वकरतलवर्तिनमिव लीलया सपादयति, लक्षयति च प्रत्येक समस्तलोकाना यस्य यदा यत्र यथा यावद्यच्च प्रयोजन कर्त्तव्य ततस्तस्य तदा तत्र तथैव तावत्तदेव प्रयोजन रचयन्ती न त्रिभुवनेनापि निवारयितु पार्यते । किञ्च—यदि शक्रचक्रवर्त्यादीनामपि कथ्यते, यथा—भद्रिका भवतामुपरि भवितव्यतेति ततस्तेऽपि तुष्यन्ति हृदये, दर्शयन्ति मुखप्रसाद, विस्फारयन्ति विलोचने, ददति कथकाय पारितोषिक, कुर्वन्त्यात्मनि बहुमान, कारयन्ति महोत्सव, वादयन्त्यानन्ददुन्दुभि चिन्तयन्त्यात्मन कृतकृत्यता, मन्यन्ते सफल जन्मेति, किम्पुन शेषलोक ? इति, अथ तेषामपि शक्रचक्रवर्त्यादीना कथ्यते यथा→न भद्रिका भवतामुपरि भवितव्यतेति, ततस्ते कम्पन्ते भयातिरेकेण, प्रतिपद्यन्ते दीनता, कुर्वन्ति क्षणेन कृष्ण मुख, निमीलयन्ति वीक्षणे, रुष्यन्ति कथकाय, समध्यास्यन्ते चिन्तया, गृह्यन्ते रणरणकेन, परित्यजन्ति शोकातिरेकेणेतिकर्तव्यता, आलोचयन्ति तत्प्रसादनार्थमनेकोपायान्, किम्बहुना ? न लभन्ते तस्यामतुष्टाया मनागपि चित्तनिर्वृति, कथमेषाऽपि पुन प्रगुणीभविष्यतीत्युद्वेगेन, किम्पुन सामान्यजना इति ? सा पुनर्भगवती यदात्मने रोचते तदेव विधत्ते, न पर विज्ञापयन्त, विलपन्त, पूत् [प्रति मु]कुर्वन्त, वाऽपेक्षते। अहमपि तद्भयोद्भ्रान्तचित्तो यदेव सा किञ्चित्कुरुते यथेष्टचेष्टया तदेव बहु मन्यमानस्तस्या पतिरपि कर्म्मकर इव जय देवि। जय देवि इति ब्रुवाणस्तिष्ठामि।

अपि च—सा सर्वत्र कृतोद्योगा, सा ज्ञातभुवनोचिता । सा जागर्त्ति प्रसुप्तेषु, सा सर्वस्य निरूपिका ॥१॥
सा केवल जगत्यत्र, विचरन्ती निराकुला । न कुतश्चिद्बिभेत्युच्चैर्मत्तेव [त्तावद् मु] गन्धहस्तिनी ॥२॥
सा कर्म्मपरिणामेन, महाराजेन पूजिता । यतोऽनुवर्त्तयत्येव, तामेषोऽपि प्रयोजने ॥३॥
तथाऽन्येऽपि महात्मान, कुर्वन्ति स्व प्रयोजनम् । यान्तोऽनुकूलता तस्या, यत एतदुदाहृतम् ॥४॥
*बुद्धिरुत्पद्यते तादृग् व्यवसायश्च [याश्च मु] तादृश [शा मु] । सहायास्तादृशाश्चैव, यादृशी भवितव्‌ता* ॥५॥

## तीव्रमोहोदयात्यन्तावोधभवितव्यताभि सह ससारिजीवस्याव्यवहारान्निर्गम

तस्याश्च मदीयगृहिण्या भवितव्यताया सम्बन्धिनमेन गुणसन्दोह जानात्येव सोऽत्यन्ताऽवोधो बलाधिकृत. । ततस्तस्य तदा पर्यालोचयतश्चेतसि परिस्फुरितम्→अये । किमहमेव सत्यप्युपाये चिन्तयाऽऽत्मानमाकुलयामि? यतो जानात्येव सा ससारिजीवपत्नी भवितव्यता येऽत्र प्रस्थापनोचिता लोकास्तेषा स्वरूपमिति, अतस्तामेवाहूय पृच्छामि, तत कथितस्तीव्रमोहोदयाय तेन स्वाभिप्राय। सुन्दरमेतदिति बहुमत तस्याऽपि तस्या आकारणम् । तत प्रहित पुरुष, समाहूता भवितव्यता, समागता वेगेन, प्रवेशिता प्रतिहार्या, महाप्रभावेय सर्वापि स्त्री किल देवतेति विचिन्त्य कृत तस्या पादपतनं वाचिक महत्तमबलाधिकृताभ्या, अभिनन्दितौ तौ तयाऽऽशीर्वादेन, दापितमासन, उपविष्टा भवितव्यता । ततो बलाधिकृताभिमुख महत्तमेन चालिता भ्रूलता, ततस्तेन कथयितुमारब्धस्तस्यै तन्नियोगव्यतिकर, ततो हसित तया, स प्राह→भद्रे। किमेतद्? भवितव्यताऽऽह→न किञ्चित्, बलाधिकृतेनोक्तम्—तत्किमकाण्डे हसितम्? भवितव्यताऽऽह—अत एव, यतो न किञ्चिदिदम् । बलाधिकृतेनोक्तम्—कथम्? भवितव्यताऽऽह—सत्यमत्यन्तावोधोऽसि, यस्त्वमेनमपि व्यतिकर मह्य कथयसि, कृतोद्योगाऽहमेवविधेषु व्यतिकरेषु, लक्षयामि अनन्तकालभाविनोऽपि सर्वव्यतिकरानह, किं पुन साम्प्रतिकान्? अतो निष्प्रयोजनत्वान्न किञ्चिदेतत्त्वदीयकथन ममेति। अत्यन्तावोध प्राह→सत्यमिदम्, विस्मृत मे तावक माहात्म्य, सोढव्योऽयमेको ममापराधो भवत्या, अन्यच्च—प्रस्थापय त्वमेव येऽत्र प्रस्थापनोचिता लोका, किं नो व्यापारेण? भवितव्यतयोक्तम्→एकस्तावदेष एव मदीयो भर्त्ता प्रस्थापनयोग्य, तथाऽन्ये च ये तज्जातीया । बलाधिकृतेनोक्तम्→त्वमेव जानीषे, तत्किमत्रोक्तेन? ततो निर्गता भवितव्यता, आगता मम समीपे, कथितो व्यतिकर । मयोक्तम्→यद्देवी जानीते, तत समुच्चलितोऽहमन्ये च मज्जातीयास्तन्नियोगाभिप्रेतसङ्ख्यानुसारेण, उक्तौ च भवितव्यतया महत्तमबलाधिकृतौ, यदुत मया युवाभ्या चामीभि सह यातव्य, यतो भर्तृदेवता नारीति न मोक्तव्यो मया ससारिजीवो, यतश्चास्ति युवयोरपि प्रतिजागरणीयमेकाक्षनिवास नाम नगर, तत्रामीभिर्लोके प्रथम गन्तव्य, अतो युज्यते युवाभ्या सहैवामीषां तत्राऽऽसितु, नान्यथा ।

## साव्यवहारिकसाधारणे स्थापनम्

ततो 'यद् भवती जानीत' इत्यभिधाय प्रतिपन्न तद्वचन महत्तमवलाधिकृताभ्या, प्रवृत्ता सर्वेऽपि, समागतास्तदेकाक्षनिवास नगरम् । तत्र च नगरे महान्त• पञ्च पाटका विद्यन्ते, ततोऽहमेक पाटक कराग्रेण दर्शयता तीव्रमोहोदयेनाभिहित→भद्र ससारिजीव! तिष्ठ त्वमत्र पाटके, यतोऽय पाटकोऽसव्यवहारनगरेण बहुतर तुल्यो वर्त्तते, ततो भविष्यत्यत्र तिष्ठतो धृतिरिति, तथाहि→यथा तत्रासव्यवहारनगरे गोलकाभिधानाना प्रासादाना मध्यवर्त्तिनोऽसख्या ये निगोदाभिधाना अपवरकास्तेषु यथा लोका प्रत्येकमनन्ता सपिण्डिता स्नेहानुबन्धेन प्रतिवसन्ति, अत्रापि पाटके बहुतमा लोकास्तथैव प्रतिवसन्ति, केवलम–सव्यवहारनगरसम्बन्धिनो न क्वचिल्लोकव्यवहारेऽवतरन्तीति असाव्यवहारिका उच्यन्ते । ते हि यदि पर यूयमिव भगवत्या लोकस्थितेरादेशेन सकृदेवान्यस्थानेषु गच्छन्ति, नान्यथा, एते पुनरस्य पाटकस्य सबन्धिनो लोका कुर्वन्ति लोकव्यवहार, समाचरन्ति शेषस्थानेषु गमागम, तेन साव्यवहारिका इत्यभिधीयन्ते । तथा तेषामसव्यवहारनगरसबन्धिनामनादिवनस्पतय इति सर्वेषामपि सामान्याभिधान, एतत्पाटकसम्बन्धिना तु वनस्पतय इत्येतावान् विशेष । तथा प्रत्येकचारिणोऽपि प्रासादापवरकन्यायरहिता मुत्कलचारेणात्र विद्यन्ते तेऽसख्येया लोका, ततस्तिष्ठ त्वमत्र, पूर्वपरिचितनगरसमान एवाय पाटकस्तवेति । ततो मयोक्त→यदाज्ञापयति देव, तत स्थापितोऽहमेकस्मिन्नपवरके, शेषलोकास्तु केनचिन्मदीयविधानेनैव स्थापितास्तत्रैव पाटके, केचिन्मुत्कलचारेण, केचित्पुनर्नीता पाटकान्तरेष्विति । ततोऽह तत्र साधारणशरीरनाम्नि भद्रे । अपवरके पूर्वोक्तस्थित्यैव सुप्त इव, मत्त इव, मूर्च्छित इव, मृत इवानन्तलोकै सपिण्डितैस्तै समकमुच्छ्वसन्, समक निश्वसन्, समकमाहारयन्, समक नीहार[निर्हार मु]यन् स्थितोऽनन्तकालमिति ।

## प्रत्येकताऽवाप्ति

अन्यदा कर्म्मपरिणाममहाराजादेशेनैवानुमतो महत्तमवलाधिकृताभ्या नि सारितस्ततोऽपवरकन्यायाद् भवितव्यतया, धारितस्तत्रैव पाटके पुनरसख्यकाल प्रत्येकचारितयेति । इतश्च पूर्वमेव कर्म्मपरिणाममहाराजेन परिपृच्छ्य लोकस्थिति समालोच्य सह कालपरिणत्या, ज्ञापयित्वा नियतियदृच्छादीना, अनुमते भवितव्यताया, अपेक्ष्य विचित्राकार लोकस्वभाव, आत्मीयसामर्थ्यप्रभवै परमाणुभिर्निष्पादिता सर्वार्थकारिण्य एकभववेद्यसज्ञा प्रधानगुटिका समर्पिता भवितव्यताया । सा चाभिहिता तेन यथा →भद्रे । समस्तलोकव्यापारकरणोद्यता त्व श्रान्ताऽसि समस्तलोकाना क्षणे क्षणे नानाविधसुखदु खादिकार्याणि सपादयन्ती ततो गृहाणामूर्गुटिका, ततस्त्वया तासामेकैकस्य सत्त्वस्य जीर्णाया जीर्णायामेकैकस्या गुटिकायामन्या दातव्या, तत सपादयन्त्येता स्वयमेव विविधमप्येकत्र जन्मवासके वसत्सु प्रत्येक सत्त्वेषु तवेष्ट सर्व प्रयोजनमिति भविष्यति ते निराकुलता। तत प्रतिपन्न भवितव्यतया तद्राजशासन, विधत्ते च सकलकाल समस्तसत्त्वाना तथैव सा त गुटिकाप्रयोग[ ।

## गुटिकाप्रयोगेण वनस्पत्या विविधरूपे कदर्थना

ततोऽह यदा तत्राऽसव्यवहारनगरेऽभूव तदा मम जीर्णाया जीर्णायामपरापरा सा गुटिका दत्तवती । केवल सूक्ष्ममेव मे रूपमेकाकार सर्वदा तत्प्रयोगेण विहितवती । तत्र पुनरेकाक्षनिवासनगरे समागता तीव्रमोहोदयात्यन्ताऽबोधयो कुतूहलमिव दर्शयन्ती तेन गुटिकाप्रयोगेण ममानेकाकार स्वरूप प्रकटयति स्म । यत कृतोऽह तत्र पाटके वर्त्तमान क्वचिदवसरे सूक्ष्मरूप तत्रापि क्वचित्पर्याप्तकरूप तथा क्वचिदवसरे विहितोऽह बादराकार, तत्रापि क्वचित्पर्याप्तकरूप क्वचिदपर्याप्तकरूप, तथा बादर सन् क्वचिदपवरकवर्त्ती, क्वचित्प्रत्येकचारी, अत्रापि क्वचिदङ्कुराकारधारक, क्वचित्कन्दरूप क्वचिन्मूलभाजी, क्वचित् त्वक्चारी, क्वचित् स्कन्धवर्त्ती, क्वचिच्छाखाचर, क्वचित्प्रशाखागत, क्वचित्प्रवालसचरिष्णु, क्वचित्पत्राकार, क्वचित्पुष्पसस्थ, क्वचित्फलात्मक, क्वचिद्बीजस्वभाव । तथा क्वचिन्मूलबीज, क्वचिदग्रबीज, क्वचित् पर्वबीज., क्वचित् स्कन्धबीज, क्वचिद् बीजरुह, क्वचित्सम्मूर्च्छनज, । तथा क्वचिद् वृक्षाकार, क्वचिद् गुल्मरूप, क्वचिल्लतात्मक, क्वचिद्वल्लीस्वभाव, क्वचिद्धरितात्मक इति । तथारूपेण च वर्त्तमान मामुपलभ्यान्यग्रामनगरसम्बन्धिनो लोका कम्पमान भवितव्यताया समक्षमेव छिन्दन्ति, भिन्दन्ति, दलन्ति, पिषन्ति, मोटयन्ति, लुञ्चयन्ति, तक्ष्णुवन्ति, दहन्ति, नानाकदर्थनाभि कदर्थयन्ति । तथापि भवितव्यता तत्रोपेक्षा कुरुते ।

## पृथ्वीत्वाऽवाप्ति

ततोऽतिवाहिते तथाविधदु खैरनन्तकाले जीर्णाया पर्यवसानकालदत्ताया गुटिकाया दत्ता भवितव्यतया ममान्या गुटिका,

तत्प्रभावाद् गतोऽह द्वितीयपाटके । तत्र पार्थिवसज्ञया लोका प्रतिवसन्ति । ततोऽहमपि तेषा मध्ये सपन्न पार्थिव, विडम्बितस्तत्र भवितव्यतयाऽपरापरगुटिकादानद्वारेण सूक्ष्मवादरपर्याप्तकाऽपर्याप्तकरूपतया कृष्णनीलश्वेतपीतलोहितवर्णादिरूपतया सिकतोपललवणहरितालमन शिलाऽञ्जनशुद्धपृथिव्याद्याकार(रूप प्र)तया चासख्येय कालम् । तितिक्षितानि च तत्र पाटके वसता मया भेदनदलनचूर्णनखण्डनदहनादीनि दु खानि ।

## अप्काये गमनम्

तत पर्यन्तगुटिकाजरणावसाने दत्ता भवितव्यतया ममान्या गुटिका । गतोऽह तन्माहात्म्येन तृतीये पाटके । तत्र चाप्याभिधाना कुटुम्बिन प्रतिवसन्ति, ततो ममापि तत्र गतस्य सपन्नमाप्यस्य, विगोपितस्तत्राप्यह जीर्णाया जीर्णायामपरापरा गुटिका दत्त्वा रूपान्तर सपादयन्त्या भवितव्यतया असख्येयमेव काल, तथाहि—कृतोऽहमवश्यायहिममहिकाहरतनुशुद्धो—दकाद्यनेकभेदरूपो रूपरसगन्धस्पर्शभेदेन विचित्राकार, तथा सोढानि च तत्र पाटके वर्त्तमानेन मया शीतोष्णक्षार—क्षत्राद्यनेकशस्त्रसपाद्यानि नानादु खानि ।

## तेजसि गमनम्

ततस्तत्कालपर्यन्ते जीर्णायामन्त्यगुटिकाया दत्ता ममापरा गुटिका भवितव्यतया, गतोऽह तत्तेजसा चतुर्थे पाटके । तत्राप्यसख्येयास्तेजस्कायनामानो ब्राह्मणा प्रतिवसन्ति । ततोऽहमपि तेषां मध्ये भास्वरो वर्णेन, उष्ण स्पर्शेन, दाहात्मक कायेन, शुचिरुप स्थानेन सपन्नस्तेजस्कायो ब्राह्मण, प्रवृत्तश्च मम तत्र वसतो ज्वालाऽङ्गारमुर्मुराऽर्चिरलातशुद्धाग्निविद्युदुल्काश—निप्रभृतयो व्यपदेशा । जातानि विध्यापनादितो नानादु खानि । स्थित सूक्ष्मवादरपर्याप्तकाऽपर्याप्तकरूपतया विवर्त्तमानोऽसख्येय कालम्।

## वायौ गमनम्

दत्ता च तदन्ते ममापरा गुटिका पर्यन्तगुटिकाजरणावसाने भवितव्यतया । गतोऽह तदुपयोगेन पञ्चमपाटके । तत्राप्यसख्येया वायवीयाभिधाना क्षत्रिया प्रतिवसन्ति । ततोऽहमपि तत्र गतो ज्ञात उष्णशीत स्पर्शेन, अलक्ष्यश्चक्षुष्मता रूपेण, पताकाकार सस्थानेन, सजातो वायवीय क्षत्रिय । आहूतश्च तत्र वर्त्तमानोऽहमुत्कलिकावातो, मण्डलिका—वातो, गुञ्जावातो, झञ्झावात, सवर्त्तकवातो, घनवातस्तनुवात, शुद्धवात इत्यादिभिरभिधानै । समुद्भूतानि तत्र मे शस्त्राभिघातनिरोधादीनि नानादु खानि, विनाटितस्तत्रापि सूक्ष्मवादरपर्याप्तकाऽपर्याप्तकाकाररूपतया घूर्णमानोऽसख्येय काल भवितव्यतया ।

## पुनर्वनस्पत्यादौ गमनम्

ततस्तदवसाने जाते पर्यन्तगुटिकाजरणे दत्त्वाऽपरा गुटिका पुनर्नीतोऽह प्रथमपाटके भवितव्यतया । स्थितस्तत्र पुनरनन्त काल, तत पुनरपरापरगुटिकाप्रयोगेणैव प्रापितो द्वितीयादिपाटकेषु, स्थितश्चैकैकस्मिन्नसख्येय कालम् । ततश्चानेन प्रकारेण तस्मिन्नेकाक्षनिवासे नगरे कारितोऽहमनन्तवारा समस्तपाटकपर्यटनविडम्बन तीव्रमोहोदयात्यन्ताऽवोधयो समक्ष भवितव्यतया।

## विकलाक्षपाटके वास

अन्यदा मनाक् प्रसन्नचित्तयाऽभिहित यथा—›आर्यपुत्र । स्थितो भूयास काल त्वमत्र नगरे, ततोऽपनयामि भवत स्थानाजीर्णम्, नयामि भवन्त नगरान्तरे । मयोक्तम्—›यदाज्ञापयति देवी । तदा प्रयुक्ता गुटिका भवितव्यतया । इतश्चास्ति विकलाक्षनिवास नाम नगर, तत्र च त्रय प्रधानपाटका विद्यन्ते, तस्य नगरस्य परिपालक कर्म्मपरिणाममहाराजनियुक्त एवोन्मार्गोपदेशो नाम महत्तम, तस्यच माया नाम गृहिणी ।

## द्वीन्द्रियत्वाऽवाप्ति

ततोऽह गुटिकामाहात्म्येन प्राप्तस्तत्र प्रथमे पाटके । तस्मिश्च सप्तकुलकोटिलक्षवर्त्तिनोऽसख्येया द्विहृषीकाभिधाना कुलपुत्रका प्रतिवसन्ति । ततोऽहमपि सपन्नस्तेषा मध्ये द्विहृषीक, ततोऽपगता मे सा सुप्तमत्तमूर्च्छितमृतरूपता, जातो मनागभिव्यक्तचेतन्य ।

ततश्च—कृतोऽह गुटिकादानद्वारेणैव ततस्तया । कृमिरूपोऽशुचिस्थाने, महापाप स्वभार्यया ॥१॥

मूत्रान्त्रक्लेदजम्बालपूरिते जठरे स्थितम् । मा पश्यन्ती विशालाक्षी, तत सा परितुष्यति ॥२॥
कदाचित्सारमेयादिदुर्गन्धिव्रणकोटरे । मामन्यकृमिजालेन, सयुत वीक्ष्य मोदते ॥३॥
वर्चोऽपघसराद्येषु, लोलमान सुदु खितम् । मा दृष्ट्वा कृमिभावेन, तुष्यऽभूद्भवितव्यता ॥४॥
जलूकाभावमापाद्य, गुटिकादानतस्तथा । ममेत्थ चाकरोद् दु ख, हसन्ती सह मायया ॥५॥
माये । पश्य मदीयस्य, भर्त्तु सामर्थ्यमीदृशम् । त्वमुन्मार्गोपदेशेन, भर्त्रात्मीयेन गर्विता ॥६॥
क्षुधार्त्तो [1]वारके क्षिप्तस्ततो निर्गत्य मत्पति । नि शेष कर्षयत्येष, [2]व्रणारि वीर्ययोगत ॥७॥
अन्यच्च त्यागसामर्थ्यं, पश्य भर्त्तुर्ममेदृशम् । यदेष रक्तसर्वस्व, ददते हस्तधारिणे ॥८॥
ततोऽगृहीतसङ्केते, भद्रे । भार्याविडम्बित । उपहासेन तेनाह, द्विगुण दु खमागत ॥९॥
पुनश्च गुटिका दत्त्वा, कृत्वा शड्ख महोदधौ । मामेषा शाङ्खिकैश्छिन्न, रटन्त वीक्ष्य तुष्यति ॥10॥
तदेव पाटके तत्र, वर्त्तमान स्वभार्यया । अपरापररूपेण, सख्यातीत विडम्बित ॥११॥

## त्रीन्द्रियत्वाऽवाप्ति

अन्यदा पुनर्यथेष्टचेष्टयैव प्रयुक्ता भवितव्यतया ममान्यगुटिका, नीतोऽह तत्सामर्थ्येन द्वितीये पाटके, तत्र चाष्टकुलकोटिलक्षस्थायिनोऽसख्येयास्त्रिकरणनामानो गृहपतयोऽधिवसन्ति । ततोऽहमपि तेषा मध्ये सपन्नस्त्रिकरणो गृहपति ।

ततश्च– यूकामत्कुणमत्कोटकुन्थुरूपविवर्त्तिनम् । पिपीलिकादिरूप च, कृत्वा मा भवितव्यता ॥१॥
पर्यटन्त बुभुक्षार्त्तं, पिष्यमाण च बालकै । दग्ध दृष्ट्वा तथा तोषादाऽऽनन्दमवगाहते ॥२॥
तदेव पाटके तत्र, गुटिकादानपूर्वकम् । असख्यवारा पापोऽह, कारितो नैकरूपताम् ॥३॥

## चतुरिन्द्रियत्वाऽवाप्ति

अथान्यदा पुनर्दत्ता, गुटिका मे महेलया [मम हेलया मु] । तृतीये पाटके नीतस्तयैवोचितहेलया ॥४॥
कोटिलक्षकुलाना च, वसन्ति नव तत्र ये । असख्यास्तेषु विद्यन्ते, चतुरक्षा कुटुम्बिन ॥५॥
ततोऽहमपि सजातश्चतुरक्ष कुटुम्बिक । पतङ्गमक्षिकादशवृश्चिकाकारधारक ॥६॥
सोढानि तत्र दु खानि, नानाकाराणि तिष्ठता । निर्विवेकजनादिभ्यो, मर्दनादिविधानत ॥७॥
जीर्णे जीर्णे पुनर्दत्त्वा, गुटिकामपरापराम् । असख्यरूपैस्तत्रापि, पाटके नाटितस्तथा ॥८॥
भूयो भूयश्च तेष्वेव, पाटकेषु विवर्त्तनम् । सख्यातीतानि वर्षाणा, सहस्राणि विधापित ॥९॥
एवं च स्थिते–क्वचित्पर्याप्तरूपेण, तथाऽपर्याप्तरूपक । तेषु त्रिष्वपि पत्न्याऽह, पाटकेषु विनाटित ॥10॥

## पञ्चाक्षपशुसस्थाने विविधकदर्थनाप्राप्ति

अथान्यदा प्रहृष्टेन, चेतसा भवितव्यता । ज्ञात्वा तदुचित काल, ततश्चेदमभाषत ॥११॥
आर्यपुत्र। भवन्त किं, नयामि नगरान्तरम् ? । विकलाक्षनिवासेऽत्र, नगरे नास्ति ते धृति ॥१२॥
मयोक्त देवि । यत्तुभ्य, रोचते तद्विधीयताम् । किमत्र बहुना? त्व मे, प्रमाण सर्वकर्म्मसु ॥१३॥
ततो जीर्णां मम ज्ञात्वा, गुटिकामन्तवर्त्तिनीम् । नगरान्तरयानाय, प्रयुक्ता गुटिका तया ॥१४॥
अथोन्मार्गोपदेशस्य, प्रतिजागरणे स्थितम् । पञ्चाक्षपशुसस्थान, नामास्ति नगर परम् ॥१५॥
तत्र सार्धत्रिपञ्चाशत्कोटीलक्षप्रमाणके । वसन्ति कुलसघाते, लोका पञ्चाक्षनामका ॥१६॥
जलस्थलनभश्चारा, स्पष्टचैतन्यसयुता । सज्ञिनस्तेऽभिधीयन्ते, गर्भजा इति वा बुधै ॥१७॥
ये पुनस्तत्र विद्यन्ते, स्पष्टचैतन्यवर्जिता । असज्ञिन इति ख्यातास्ते सम्मूर्च्छनजा जना ॥१८॥
ततोऽह तेषु सजात, स्पष्टचैतन्यवर्जित । पञ्चाक्षो नाम विख्यातो, गुटिकाया प्रभावत ॥१९॥
रटन्नुच्चैर्विना कार्यं, दर्दुराकारधारक । केलिप्रियतया तत्र, भार्ययाऽह विनाटित ॥20॥
तत्र च सम्मूर्च्छनजमध्ये–रूपैरेवमसख्येयैर्भ्रमयित्वा ततस्तया । विहितो गर्भजाकारधारकोऽह महेलया ॥२१॥
ततश्च जलचरेषु वर्तमान–गृहीतो धीवरैस्तत्र बिभ्राणो मत्स्यरूपताम् । छेदपाकादिभिर्दु ख, प्रापितोऽह सहस्रश ॥२२॥

---
1 =घटे । 2 =रूधिरम् ।

तथा चतुष्पदस्थलचरेषु वर्त्तमानस्य→शशसूकरसारङ्गरूपमाविभ्रतो मम। व्याधैर्भित्त्वा शरैर्गात्र, कृता नाना विकर्त्तना ॥२३॥
तथा भुजपरिसर्पोर परिसर्पेषु वर्त्तमानेन→
गोधाहिनकुलादीना, रूपं धारयता चिरम् । अन्योऽन्यभक्षणाद् दु ख, प्राप्तं क्रूरतया मया ॥२४॥
तथा–काकोलूकादिरूपाणा, पक्षिणा मध्यचारिणा [णाम् मु] । सख्यातीतानि दु खानि, सोढानि सुचिर मया ॥२५॥
असख्यजनसङ्कीर्णे, तदेव तत्र पत्तने । जलस्थलनभश्चारी, सजातोऽह कुले कुले ॥२६॥
अन्यच्च–तस्मिन् पञ्चाक्षपशुसस्थाने नगरे–
सप्ताष्टवारा रूपाणि, नैरन्तर्येण कारित । नीतस्ततोऽन्यस्थानेषु, तत्रानीत पुनस्तया ॥२७॥
एवं च स्थिते–शेषेषु सर्वस्थानेषु, गत्वा गत्वाऽन्तराऽन्तरा । मया तत्र पुरेऽनन्ता, कृता रूपविडम्वना ॥२८॥
कालतस्तु–स्थितश्च नैरन्तर्येण, पर पल्योपमत्रयम् । अह तत्र पुरे किञ्चित्साधिक पूर्वकोटिभि ॥२९॥
असज्ञिसज्ञिरूपेण, पर्याप्तेतरभेदत । तदेव नगरे तत्र, नानाकारैर्विडम्वित ॥30॥

अन्यदा कुरङ्गरूप सपादितोऽह भवितव्यतया, स्थितो यूथमध्ये तरलिततार भयेन निरीक्षमाणो दशापि दिश, उत्प्लवमानस्तरुशिखराणीतश्चेतश्च पर्यटामि, यावदेकेन लुब्धककुमारकेण कलध्वनिना प्रारब्ध गीत, ततस्तेनाक्षिप्त मृगयूथ, परित्यक्तमुत्प्लवन, निरूद्धा चेष्टा, निश्चलीकृतानि लोचनानि, निवृत्त शेषेन्द्रियव्यापार, सजात कर्णेन्द्रियमात्रनिमग्नोऽन्तरात्मा, ततो निष्पन्दमन्दीभूत तत्तादृश हरिणयूथमवलोक्याभ्यर्णीभूतो व्याध, प्रगुणीकृत कोदण्ड, सन्धितस्तत्र शिलीमुख, वद्धमालीढ स्थानक, ईषदाकुञ्चिता कन्धरा, समाकृष्टो वाण कर्णान्त यावत्, ततो मुक्तेन तेनाराद्भागे वर्त्तमानोऽह निर्भिद्य पातितो भूतले । अत्रान्तरे जीर्णा मे पूर्वदत्ता गुटिका, ततो जीर्णाया तस्या हरिणभवनिवन्धनभूतायामेकभववेद्याया गुटिकाया दत्ता ममान्या गुटिका भवितव्यतया ।

## करिभवे पीडा शुभभावश्च

सपन्नस्तन्माहात्म्येनाह करिवररूप, वर्द्धित कालक्रमेण, सजातो यूथाधिपति । तत स्वभावसुन्दरेषु नलवनेषु अभीष्टतमेषु सल्लकीकिसलयेषु अत्यन्तकमनीयेषु वनविभागेषु परिकरित करेणुकावृन्देन चित्तानन्दसन्दोहसागरमवगाहमानो यथेष्टचेष्टया विचरामि, यावदेकदाऽकाण्ड एव सत्रस्त तत्करियूथ, नश्यन्ति श्वापदानि, श्रूयते वेणुस्फोटरव, प्रसर्पित धूमवितान, तत किमेतदिति निरीक्षितो मया पश्चाद्भूभाग, यावन्निकटीभूतो ज्वालामालाकुलो दवानल, तत प्रादुर्भूत मे मरणभय, परित्यक्त पौरुष, अङ्गीकृत दैन्य, समाश्रिता आत्मम्भरिता, व्यपगतोऽहङ्कार, परित्यक्त यूथ, पलायितो गृहीत्वैका दिश, गत स्तोक भूभाग, तत्र चासीच्चिरन्तनग्रामपशुसवन्धी, विशाल शुष्कोऽन्धकूप, स च तटवर्त्तितृणव्यवहिततया भयाकुलतया च न लक्षितो मया धावता वेगेन, तत प्रविष्टौ मम तत्राग्रपादौ, तन्निरालम्वनतया पर्यस्त पश्चाद्भाग, तत पतितोऽहमुत्तानशरीरस्तत्रान्धकूपे, सचूर्णितो गात्रभारेण, मूर्च्छित क्षणमात्र, लब्धा कथञ्चिच्चेतना, यावन्न चालयितु शक्नोमि शरीरं, प्रादुर्भूता च सर्वाङ्गीणा तीव्रवेदना, तत सजातो मे पश्चात्ताप, चिन्तित च मया→यथेदृशमेव बुध्य (युज्य)ते मादृशाना, ये प्रतिपन्नभृत्यभाव चिरकालपरिचितमुपकारकमापन्निमग्नमनुरक्तमात्मवर्गं परित्यज्य कृतघ्नतया कुक्षिम्भरितामुररीकुर्वन्त पलायन्ते, अहो मे निर्लज्जता, मय्यपि किल यूथाधिपतिशब्दो रूढ, तत्किमनेन? अधुना स्वचेष्टितानुरूपमेवेद मम सपन्न, अतो न मया मनसि खेदो विधेय । ततोऽनया भावनया प्रतिपन्न मया मनाङ् माध्यस्थ्य, तितिक्षिता भवन्ती तीव्रापि वेदना, स्थितस्तदवस्थ सप्तरात्र यावत् ।

## पुण्योदयेन सह मानवभवप्राप्ति

अत्रान्तरे तुष्टा ममोपरि भवितव्यता, ततस्तयाऽभिहितम्→साधु। आर्यपुत्र। साधु। शोभनस्तेऽध्यवसाय, तितिक्षित भवता परम दु ख, तुष्टाऽहमिदानीं भवतोऽनेन चेष्टितेन, नयामि भवन्त नगरान्तरे । मयाऽभिहितम्→यदाज्ञापयति देवी, ततो दर्शितस्तया सुन्दराकार पुरुष, अभिहितश्चाह यथा→आर्यपुत्र। तुष्टया मयाऽयमधुना भवत सहायो निरूपित पुण्योदयो नाम पुरुष, तदनेन सह भवता गन्तव्य, मयाऽभिहितम्→यदाज्ञापयति देवी । अत्रान्तरे जीर्णा मे पूर्वदत्ता गुटिका, तत प्रयुक्ताऽन्या गुटिका भवितव्यतया, अभिहित च तया, यथा→आर्यपुत्र । तत्र गतस्याय पुण्योदयस्ते प्रच्छन्नरूप सहोदर सहचरश्च भविष्यतीति।

## सकेतोद्बोध

एव च वदति संसारिजीवे भव्यपुरुष प्रज्ञाविशालाया कर्णाभ्यर्णे स्थित्वेदमाह यथा→अम्ब। कोऽय पुरुष ? कि वाऽनेन कथयितुमारब्धम्? कानि चामूनि असव्यवहारादीनि नगराणि? का चेय गुटिका? यैकेकवासके प्रयुक्ता सती नानाविधरूपाणि कारयति, विविधसुखदु खादिकार्याणि दर्शयति, कथ वा पुरुषस्येयन्त कालमेकत्रा[स्या मु]वस्थिति ? कथं चासभावनीयानि मनुष्यस्य सत कृमिपिपीलिकादीनि रूपाणि जायेरन्? तदिद सकलमपूर्वाऽऽलजालकल्पमस्य तस्करस्य चरित मम प्रतिभासते, तत्कथय–अम्बिके । कोऽस्य भावार्थ इति ? प्रज्ञाविशालयोक्तम्→वत्स । यदस्येदानीन्तनं विशेषरूपमुपलभ्यते तन्नानेन कथितं, कि तर्हि ? सामान्यरूपेण ससारिजीवनामाय पुरुष, अतस्तदेवानेनात्माभिधानमाख्यातमनेन चात्मचरित सर्वमिद घटमानकमेव निवेदयितु प्रक्रान्त, तथाहि–असाव्यवहारिकजीवराशिरत्रासव्यवहारनगरम्, एकेन्द्रियजातय पञ्चापि पृथिव्यप्तेजोवायुवनस्पतिरूपास्तेषां स्थान एकाक्षनिवास, विकलेन्द्रियाणा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियलक्षणानां स्थान विकलाक्षनिवास, पञ्चेन्द्रियतिरश्चा निलय पञ्चाक्षपशुसस्थानम् । एकजन्मप्रायोग्य कर्म्मप्रकृतिजालमेकभववेद्या गुटिकेत्युच्यते, तदुदयेन भवन्त्येव नानाविधरूपाणि, सपद्यन्ते एव विविधसुखदु खानि कार्याणि, अजरामरश्चाय पुरुष, ततो युक्तमेवास्यानन्तमपि कालमवस्थान, ससारिजीवस्य चात्र भद्र। भवन्त्येव कृमिपिपीलिकादिरूपाणि, किमत्राश्चर्यम्? अथवा मुग्धबुद्धिरद्यापि वत्सो न जानीते यदस्य स्वरूपम् । वत्स। न संभवत्येव भुवनोदरे तत्सविधानक यदस्य ससारिजीवस्य सवन्धिनि चरिते नावतरति, तद्वत्स । निवेदयतु तावदेष सर्वं यथावृत्त, पश्चात्तवाहमस्य भावार्थं निराकुला कथयिष्यामि, भव्यपुरुषेणोक्त→यथाज्ञापयत्यम्वेति–

उत्पत्तिस्तावदस्या भवति नियमतो वर्यमानुष्यभूमौ, भव्यस्य प्राणभाज समयपरिणते कर्म्मणश्च प्रभावात् ।
एतच्चाख्यातमत्र प्रथममनु ततस्तस्य बोधार्थमित्थ, प्रक्रान्तोऽय समस्त कथयितुमतुलो जीवससारचार ॥१॥
स च सदागमवाक्यमपेक्ष्य भो। जडजनाय च तेन निवेद्यते। बुधजनेन विचारपरायणस्तदनुभव्यजन प्रतिवुध्यते ॥२॥
प्रस्तावेऽत्र निवेदित तदतुल ससारविस्फूर्जित, धन्यानामिदमाकलय्य विरति ससारतो जायते ।
येषा त्वेष भवो विमूढमनसा भो । सुन्दरो भासते, ते नून पशवो न सन्ति मनुजा कार्येण मन्यामहे ॥३॥

इत्युपमितिभवप्रपञ्चाया कथाया ससारिजीवचरिते तिर्यग्गतिवक्तव्यतावर्णनो नाम
द्वितीय प्रस्ताव समाप्त
॥२॥

### सदागम... एष एव...

परमार्थत वत्सल जगन्नाथ
जगत् त्राणम् सुबान्धव
विपद्गर्ते पततामवलम्बनम् भवाटव्या अटता मार्गदेशक
सर्वव्याधिनिबर्हण महावैद्य
गदोच्छेदकारणं परमौषधम्
सर्ववस्तुप्रकाशक जगद्दीप
प्रमादराक्षसात्तूर्णं विमोचक
अविरतिजम्बालकल्मपक्षालनक्षम
दुष्टाना योगाना वारणोद्यत
शब्दादिचरटाक्रान्ते हृतधर्म्मधने जने तस्य विमोचने समर्थो भगवान् नान्य
महाघोरनरकोद्धरणक्षम
पशुत्वदु खसघातात् त्रायक
किञ्चाऽत्र बहुनोक्तेन?
नास्ति तद्वस्तु किञ्चन सदागमेऽस्मिन्भक्ताना सुन्दर यन्न जायते

॥ श्री शङ्खेश्वरपार्श्वनाथाय नम ॥

॥ नमोत्थु ते महईमहावीरवद्धमाणसामिस्स ॥

## क्रोधहिंसास्पर्शनेन्द्रिय विपाकवर्णन



भवप्रपञ्चस्तिर्यक्षु, वर्त्तमानस्य देहिन । एष प्रोक्तो मनुष्यत्वे, यत्स्यात्तदधुनोच्यते– ॥१॥

### जन्ममहोत्सव

ससारिजीव उवाच→ततोऽह भद्रे। अगृहीतसङ्केते । समास्वादितैकभववेद्यगुटिक प्रवृत्तो गन्तुम् । इतश्चास्त्यस्यामेव मनुजगतौ नगर्यां भरताभिधान पाटक, तस्य च विशेषकभूतमस्ति जयस्थल नाम नगरम्। तत्र च महानृपतिगुणसपदालिङ्गितमूर्त्ति पद्मो नाम राजा, तस्य च रतिरिव मकरकेतनस्य नन्दा नाम प्रधानदेवी । ततोऽह तस्या कुक्षौ प्रवेशितो भवितव्यतया, स्थितस्तत्रोचितकाल, निर्गत सह पुण्योदयेन दृष्टो नन्दया, सपन्नस्तस्या पुत्रो मम जात इत्यभिमानो, निवेदित प्रमोदकुम्भाभिधानेन दासदारकेण नरपतये, प्रादुर्भूत सुतो मे इति समुत्पन्नस्तस्याप्यनुशय[1] हर्षविशेषादुल्लसितो गात्रेषु पुलकोद्भेद, दापित निवेदकदारकाय पारितोषिक, समादिष्टो मज्जन्ममहोत्सव । ततो दीयन्ते महादानानि, मुच्यन्ते बन्धनानि, पूज्यन्ते नगरदेवता, क्रियन्ते हट्टद्वार[2]शोभा, शोध्यन्ते राजमार्गा, आहन्यन्ते आनन्दभेर्य, आगच्छन्ति विशेषोज्ज्वलनेपथ्या राजकुले नागरकलोका, विधीयन्ते तदुपचारा, प्रयुज्यन्ते समाचारा, आस्फाल्यन्ते तूर्यसघाता, गीयन्ते धवलमङ्गलानि, नृत्यन्ति ललनालोका सह कञ्चुकिवामनकुब्जादिभिर्नरेन्द्रवृन्देनेति । ततश्चैव वृत्ते महानन्दे जन्ममहोत्सवे [जन्ममहानन्दे मु] अतिक्रान्ते मासे तिरोधाय ससारिजीव इत्यभिधान प्रतिष्ठित मे नन्दिवर्द्धन इति नाम । जातो ममाप्यहमनयो पुत्र इत्यभिमान, ततो जनयन्नानन्द जननीजनकयो पञ्चभिर्धात्रीभिर्लालित सपन्नोऽह त्रिवार्षिक ।

### अविवेकितापुत्रवैश्वानरस्य वर्णनम्

मम चासव्यवहारनगरादारभ्य सकल कालं द्विविध परिकरोऽनुवर्त्तते, तद्यथा–अन्तरङ्गो बहिरङ्गश्च । तत्रान्तरङ्ग–परिकरमध्येऽस्ति ममाऽविवेकिता नाम ब्राह्मणजातीया धात्री । साऽपि प्रसूता मज्जन्मदिने, जातो दारक, प्रतिष्ठित तस्य नाम वैश्वानर इति । स चादित एवारभ्यानभिव्यक्तरूपतयाऽऽसीदेव, केवलमधुनाऽभिव्यक्तरूप सपन्न । ततो मयाऽसौ सह धारयन् वैरकलहाभिधानौ विषमविस्तीर्णौ चरणौ, दधान परिस्थूलकठिनह्रस्वेर्ष्यासूया[3]भिधाने जङ्घे, समुद्वहन्ननुशयानुपशमनामानौ विषमप्रतिष्ठितावूरू विभ्राण पैशुन्यसज्ञकमेकपार्श्वोन्नत कटितट, दर्शयन् परमर्मोद्घट्टननामक वक्त्र विषम लम्बमुदर, कलितोऽन्तस्तापनामकेनातिसङ्कटेनोर स्थलेन, युक्त क्षारमत्सरसज्ञाभ्या विषमपरिह्रस्वाभ्या बाहुभ्या, विराजमान क्रूरतास्पया वक्रया सुदीर्घया च शिरोधरया, विडम्ब्यमानोऽसभ्यभाषणादिरूपैर्वर्जितदन्तच्छदैर्विरलविरलैर्महद्भिर्दशनै, विगोप्यमानश्चण्डत्वासहनत्व–नामकाभ्या शुषिरमात्रस्पाभ्या कर्णाभ्या, उपहास्यस्थान तामसभावसज्ञया स्थानमात्रोपलक्ष्यमाणया [मात्रेण लक्ष्य मु] ऽतिचिपिटया नासिकया, विभ्रद्धासुरता रौद्रत्वनृशसत्वसज्ञाभ्यामतिरक्ततया गुञ्जार्द्धसनिभाभ्या वर्तुलाभ्या लोचनाभ्या, विनाटचमानोऽनार्याचरणसज्ञकेन महता त्रिकोणेन शिरसा, यथार्थीकुर्वाणो वैश्वानरता परोपतापसज्ञकेनातिपिङ्गलतया ज्वालाकलापकल्पेन केशभारेण दृष्टो वैश्वानरो ब्राह्मणदारक इति ।

### वैश्वानरमैत्रीदर्शनेन पुण्योदयस्य चिन्ता

ततोऽनादिपरिचयादाविर्भूतो मम तस्योपरि स्नेह, गृहीतो मित्रबुद्ध्या, न लक्षिता परमार्थशत्रुरूपता अविवेकितापुत्रोऽयमिति सपन्नाऽस्योपरि गाढमन्तरङ्गपरिजनतया हितकारी ममायमिति बुद्धि । ततो लक्षितस्तेन मदीयो भाव –अये। करोत्येष ममोपरि राजपुत्र प्रीति, तदेनमुपसर्पामि । तत समागतो निकटे, समालिङ्गितोऽह, दर्शित स्नेहभाव, प्ररूढश्चावयो प्रणय, लग्ना मैत्री, ततो यत्र यत्र क्वचिदह सचरामि गृहे वहिश्च तत्र तत्र नासौ क्षणमपि मुञ्चतीति । ततो रुष्टो निजचित्तमध्ये ममोपरि पुण्योदयो वैश्वानरेण सह मैत्रीकरणेन, चिन्तित च तेन→अये । मम रिपुरेष वैश्वानर, तथाप्येवमविशेषज्ञोऽय नन्दिवर्द्धनो,

1 =प्रमाद । 2 मार्ग प्र । 3 अस्तेया प्र ।

येन मामनुरक्तमवधीर्यानेन समस्तदोषराशिरूपेणात्मनोऽपि परमार्थवैरिणा सह मैत्रीं करोति, अथवा किमत्राश्चर्यम्? न लक्षयन्त्येव मूढा पापमित्रस्वरूप, नावबुध्यन्ते तत्सङ्गतेर्दुरन्तता, न बहुमन्यन्ते तत्सङ्गनिवारक सदुपदेष्टार, परित्यजन्ति तत्कृते सन्मित्राणि, प्रतिपद्यन्ते तद्वशेन कुमार्गम् । ते हि यदि पर धावन्तोऽन्धा इव कुड्यादौ गाढ स्फोटलाभेन पापमित्रसङ्गान्निवर्त्तन्ते न परोपदेशेनेति । मूढश्चाय नन्दिवर्द्धनकुमारो, योऽनेनापि सह साङ्गत्य विधत्ते, तत्कि ममाऽनेन निवारितेन? निर्दिष्टश्चाहमस्य भवितव्यतया सहचरत्वेन, आवर्जितश्चाहमनेन करिरूपताया वर्त्तमानेन वेदनासमुद्घातेऽपि निश्चलतया माध्यस्थ्यभावनया, तस्मादेव नन्दिवर्द्धनकुमार पापमित्रसङ्गतिपरोऽपि नाकाण्ड एव मम तावन्मोक्तु युक्त इति पर्य्यालोच्यासौ पुण्योदयो रुष्टोऽपि मम पार्श्वे तदा प्रच्छन्नरूपतया सदा तिष्ठत्येव, जाताश्चान्येऽपि बहिरङ्गा मम बहवो वयस्या।

## पुण्योदयमाहात्म्येन वैश्वानरप्रभाव

ततस्तै सार्द्धमनेकक्रीडाभि क्रीडन्नह प्रवर्द्धितु प्रवृत्त, प्रस्तुते च क्रीडने मत्तो महत्तमा अपि डिभा प्रधानकुलजा अपि पराक्रमवन्तोऽपि मा वैश्वानराऽऽलिङ्गित[धिष्ठित मु]मवलोक्य भयेन कम्पन्ते, गच्छन्ति च मम प्रणति, कुर्वन्ति चाटुकर्माणि, प्रतिपद्यन्ते पदातिभाव, धावन्ति पुरतो, न प्रतिकूलयन्ति मद्वचनम्, किम्बहुना? लिखितादपि मत्तो बिभ्यतीति । तस्य च सर्वस्यापि व्यतिकरस्याचिन्त्यमाहात्म्यतया प्रच्छन्नरूपोऽपि पुण्योदय कारणम्, मम तु महामोहवशात्तदा चेतसि परिस्फुरितम् यदुत→यदेते बृहत्तमा अपि डिम्भा ममैव कुर्वाणा वर्त्तन्ते, सोऽयमस्य वरमित्रस्य वैश्वानरस्य गुण, यतोऽय सन्निहित सन्नात्मीयसामर्थ्येन वर्द्धयति मम तेजस्विता, करोत्युत्साह, प्रोज्ज्वलयति बल, सपादयत्योज, स्थिरीकरोति मन, जनयति धीरता, विधत्ते शौण्डीरता, किम्बहुना? समस्तपुरुषगुणैर्मामेष योजयति । ततोऽनया भावनया सजातो वल्लभतरो मे वैश्वानर ।

## कलाग्रहण कलाचार्य प्रत्यविनयश्च

तत सजातोऽहमष्टवार्षिक, समुत्पन्ना पद्मनृपतेश्चिन्ता, *'ग्राह्यतामधुना कुमार कला'* इति । ततो निरूपित प्रशस्तदिवस, समाहूत प्रधान कलाचार्य, पूजितोऽसौ विधिना, कृतमुचितकरणीय, समर्पितोऽह तस्य पित्रा महताऽऽदरेणेति, समर्पिताश्च मदीयभ्रातरोऽन्येऽपि बहवो राजदारका, प्रागेव तस्य कलाचार्यस्य । ततस्तै सार्द्धमह प्रवृत्त कलाग्रहण कर्तुं, तत सपूर्णतया सर्वोपकरणाना, गुरुतया तातोत्साहस्य, हिततया कलाचार्यस्य, निश्चिन्ततया कुमारभावस्य, सन्निहिततया पुण्योदयस्योत्कटतया क्षयोपशमस्यानुकूलतया तदा भवितव्यताया, अनन्यहृदयतया मया गृहीतप्राय स्वल्पकालेनैव सकलोऽपि कलाकलाप । केवलमतिवल्लभतया सदा सन्निहितोऽसौ वैश्वानर, सनिमित्तमनिमित्त वा करोति मम समालिङ्गन, ततस्तेन समालिङ्गितोऽह न स्मरामि गुरूपदेश, न गणयामि कुलकलङ्क, न बिभेमि तातमन खेदस्य, न लक्षयामि परमार्थं, न जानाम्यात्मनोऽन्तस्ताप, न वेद्मि कलाभ्यासनिरर्थकत्व, किन्तु तमेव वैश्वानरमेक प्रिय कृत्वा तदुपदेशेन गलत्स्वेदबिन्दू [दु म्] रक्तीकृतलोचनो भुग्नभृकुटि करोमि समस्तदारकै सह कलह, विदधामि सर्वेषा मर्म्मोद्घट्टन, उच्चारयाम्यसभ्यवचनानि, न क्षमे तेषा मध्यस्थमपि वचन, ताडयामि प्रत्येक यथासन्निहितेन फलकादिना, ततस्ते सर्वेऽपि वैश्वानरालिङ्गित मामवलोक्य भयेन त्रस्तमानसा सन्तो वदन्त्यनुकूल, कुर्वन्ति चाटूनि, आराधयन्ति मा पादपतनै, किम्बहुना? मदीयगन्धेनापि ते वीर्यवन्तोऽपि राजदारका *नागदमनीहतप्रतापा इव विषधरा* न स्वतन्त्र चेष्टन्ते । ततस्ते समुद्विग्ना कम्पमाना बन्धनागारगत इव महादु खेन जननीजनकानुरोधेन कलाग्रहण कुर्वन्त काल नयन्ति, न कथयन्ति त व्यतिकर कलाचार्याय, मा भूत्सर्वेषा प्रलय इति भावनया, तथापि नित्यसन्निहितत्वाल्लक्षयत्येव तन्मामक चेष्टित सकल कलाचार्य, केवल दारकेषु दृष्टविपाकतया भयेन त्रस्तहृदयोऽसावपि न मम समुखमपि शिक्षणार्थ निरीक्षते, यदि पुनरन्यव्यपदेशेनापि मा प्रत्येष किञ्चिद् ब्रूयात् ततोऽहमेनमपि कलाचार्यमाक्रोशामि ताडयामि च, ततोऽसावपि मयि[म मु]राजदारकवद्वर्त्तते ।

## वैश्वानरे स्थिरानुराग

ततो महामोहदोषेण मया चिन्तित→अहो मे वरमित्रस्य माहात्म्यातिशय, अहो हितकारिता, अहो कौशल, अहो वत्सलता, अहो स्थिरानुराग यदेष समालिङ्गनद्वारेण मम सवीर्यता सपाद्य मामेव सर्वत्राप्रतिहताज्ञ जनयति, न च मा क्षणमपि मुञ्चतीति । तदेष मे परमो बन्धुरेष मे परम शरीरमेष मे सर्वस्वमेष जीवितमेष एव मे पर तत्त्वमिति, अनेन रहित पुरुषोऽकिञ्चित्करतया तृणपुरुषान्न विशिष्यते, ततश्चैवविधभावनया सजातो मम वैश्वानरस्योपरि स्थिरतरानुराग

[स्थिरतानुराग मु] । अन्यदा रहसि प्रवृत्ते तेन सह विश्रम्भजल्पे मयाऽभिहित→वरमित्र। किमनेन (मत्र) वहुना जल्पितेन? युष्मदायत्ता मम प्राणा, तदेते भवता यथेष्ट नियोजनीया इति । ततश्चिन्तित वैश्वानरेण→अये । सफलो मे परिश्रमो यदेष मम वशवर्त्ती वर्त्तते, दर्शितोऽनेनैव वदता निर्भरोऽनुराग, अनुरक्ताश्च प्राणिन समाकर्णयन्ति वचन, गृह्णन्ति निर्विकल्प, प्रवर्त्तन्ते तत्र भावेन, सपादयन्ति क्रियया ।

### वैश्वानरदत्तक्रूरचित्ताभिधानवटकानि

तदिदमत्र प्राप्तकालमिति विचिन्त्य तेनाभिहित→कुमार । एवमेतत्, क खल्वत्र सन्देह ? यच्च गृहीतहृदयसद्भावानामपि मादृशा पुरत कुमारोऽप्येव मन्त्रयति महाप्रसादोऽत्र कारण, स हि हर्षोत्कर्षात् ज्ञातार्थमपि वाक्य बलाद्भाणयति, तत्किमनेन? करोमि कुमारस्याहमक्षयान् प्राणान्, एष एव मे तन्नियोग । मयाऽभिहित→कथम्? तेनोक्त→जानाम्यह किञ्चिद्रसायनम्, मयाऽभिहित→क तु वरवयस्य, तेनोक्त→यदाज्ञापयति कुमार । तत कृतानि तेन क्रूरचित्ताभिधानानि वटकानि, समुपनीतानि मे रहसि वर्त्तमानस्य, अभिहितश्चाह—कुमार। एतानि मदीयसामर्थ्यप्रभवानि वर्त्तन्ते वटकानि, कुर्वन्त्युपयुज्यमानानि वीर्योत्कर्षसपादनेन पुरुषस्य सर्वं यथेष्टं दीर्घतर चायुष्क, तस्माद् गृहाण त्वमेतानि, अत्रान्तरे लघुध्वनिना कक्षान्तरस्थितेन केनाप्यभिहितम्—भविष्यति तवाभिमते स्थाने, कोऽत्र सन्देह ? न श्रुत तन्मया, श्रुत वैश्वानरेण, तत सपत्स्यते मम समीहित, यास्यत्येष वटकोपयोगेन महानरके, भविष्यति तत्र गतस्यास्य दीर्घतरमायुष्क, कथमन्यथैवविध शब्द ? महानरक एव ममाभिहि(म ?)त स्थानमितिभावनया तुष्टोऽसौ चित्तेन । मयाऽभिहित→कि न सपद्यते मे भवादृशि वरमित्रेऽनुकूले ? तदाकर्ण्य द्विगुणतर परितुष्टोऽसो, समर्पितानि वटकानि, गृहीतानि मया, अभिहित च तेन→कुमार । अयमपरो मम प्रसादो विधेय कुमारेण, यदुत→मयाऽवसरे सज्ञितेन निर्विकल्पमेतेषा मध्यादेक वटक भक्षयितव्य कुमारेणेति, मयाऽभिहित—किमत्र प्रार्थनया? निवेदित एवायमात्मा वरमित्रस्य । वैश्वानरेणाभिहितम्—महाप्रसादोऽनुगृहीतोऽह कुमारेणेति ।

### पितुश्चिन्ता।

इतश्च तातेन सर्वत्र विश्वसनीयो नियुक्तो राजवल्लभो दारक, यदुत→अरे विदुर । समादिष्टो मया कुमार यथाऽनन्यमनस्केन भवता कलाग्रहण विधेयम्, अहमपि न द्रष्टव्य, अहमेव भवन्तमागत्य द्रक्ष्यामि । तदेव स्थिते मम राज्यकार्यव्याकुलतया कदाचित्तत्समीपे गमन न सपद्यते, ततो भवता प्रतिदिन कुमारशरीरवार्ता मम सपादनीया, विदुरेणोक्त—यदाज्ञापयति देव । तत सपादयता तेन तद्राजशासन लक्षित स सर्वोऽपि मदीयो राजदारककलाचार्यकदर्थनव्यतिकर तथापि मन क्षतिभयेन कियन्तमपि काल न कथितोऽसौ ताताय, अतिभरमवलोक्य निवेदितोऽन्यदा, ततश्चिन्तित तातेन, 'नैष विदुरस्तावदसत्य भाषते, न चापि कुमार प्रायेणैवविधमाचरति, तत्किमत्र तत्त्व भविष्यतीति न जानीमहे, यदि च कलाचार्यस्यापि कदर्थन विधत्ते कुमारो निष्पन्न तत कलाग्रहणप्रयोजनम्' इति चिन्तया समुद्विग्नोऽभूत्तातश्चित्तेन । पुनश्चिन्तितमनेनेदम्—अत्र प्राप्तकाल पृच्छामि तावत्कलाचार्यमेव यथावस्थितम् । ततो निश्चित्य वृत्तान्त तन्निवारणोपाये यत्न करिष्यामि ।

### कलाचार्यस्य निवेदनम्

तत प्रेषितस्तदाकारणाय सवहुमान विदुर, समागत कलाचार्य, अभ्युत्थितस्तातेन, दापितमासन, विहिता परिचर्या ततस्तदनुज्ञातविष्टरोपविष्टेन तातेनाभिहित→आर्य बुद्धिसमुद्र। अपि समुत्सर्पति कलाग्रहण कुमाराणाम्, तेनाभिहित→देव। [1]वाढमुत्सर्पति युष्मदनुभावेन, तातेनाभिहित→कि परिणता काश्चिन्नन्दिवर्द्धनकुमारस्य कला ? कलाचार्येणाभिहित→सुष्ठु परिणता, देव । निष्पन्न एव कलासु नन्दिवर्द्धनकुमार, तथाहि—स्वीकृतमनेन समस्तमपि लिपिज्ञान, स्वयपृष्टमिव गणित, उत्पादितमिवात्मना व्याकरण, क्षेत्रीभूतमस्य ज्योतिष, सात्मीभूतमष्टाङ्गमहानिमित्त, व्याख्यातमन्येभ्यश्छन्दोऽनेन, अभ्यस्त नृत्त, शिक्षित गेय, प्रणयिनीवास्य हस्तशिक्षा, वयस्य इव धनुर्वेद, मित्रमिव वैद्यक, निर्देशकारीव धातुवाद, अनुचराणीव नरलक्षणादीनि, आधेयविक्रेयाणि पत्रच्छेद्यादीनि, किम्वहुना ? नास्ति सा काचित् कला या कुमारमासाद्य न प्राप्ता परा काष्ठामिति ।

### कलाचार्यदर्शितवैश्वानरसगदोष

तत प्रादुर्भवदानन्दोदकपरिपूरितनयनयुगलेनाभिहित तातेन→आर्य। एवमेतत्, किमत्राश्चर्यम् ? कि वाऽऽर्ये कृतोद्योगे

1 गाढ प्र ।

न सपद्यते कुमारस्य ? धन्य कुमारो यस्य युष्मादृशा गुरव । बुद्धिसमुद्रेणोक्त→देव । मा मैवमादिश, केऽत्र वयम्? युष्मदनुभावोऽयम् । तातेनाभिहित→आर्य । किमनेनोपचारवचसा ? युष्मत्प्रसादेनैवास्मदानन्दसन्दर्भदायिका सप्राप्त कुमार सकलगुणभाजनताम् । बुद्धिसमुद्रेणोक्त→यद्येव ततो देव । *कर्त्तव्येषु नियुक्तैरनुचरैर्न वञ्चनीया स्वामिन* इति पर्यालोचनया किञ्चिद्देव विज्ञापयितुमिच्छामि तच्च युक्तमयुक्त (अतोऽर्हसि शक्तुमसाधु साधु) वा क्षन्तुमर्हति देवो, यतो *यथार्थं मनोहर* च *दुर्लभ वचनम्* । तातेनाभिहित→वदत्वार्य, यथावस्थितवचने कोऽवसरोऽक्षमाया ? बुद्धिसमुद्रेणोक्त→यद्येव ततो यदादिष्ट देवेन यथा सकलगुणभाजनता सप्राप्त कुमार इति तथैव स्वाभाविक कुमारस्य स्वरूप प्रतीत्य नास्त्यत्र सन्देह, किन्तु सकलमपि कुमारस्य गुणसन्दोह कलङ्केनेव शशधर, कण्टकेनेव तामरस, कार्पण्येनेव वित्तनिचय, नैर्लज्ज्येनेव स्त्रीजन, भीरुत्वेनेव पुरुषवर्गं, परोपतापेनेव धर्म्मं, वैश्वानरसपर्केण दूषितमहमवगच्छामि, यत **सकलस्यापि कल कलापकौशलस्य प्रशमोऽलङ्करणम्**, एष तु वैश्वानर पापमित्रतया सन्निहित सन्नात्मीयसामर्थ्येन त प्रशम कुमारस्य नाशयति । कुमारस्तु महामोहवशात्परमार्थवैरिणमप्येन वैश्वानर परमोपकारिणमाकलयति, तदनेनेदृशेन पापमित्रेण यस्य प्रतिहत ज्ञानसार प्रशमामृत कुमारस्य तस्य निष्फलो गुणप्राग्भार इति ।

## वैश्वानरमैत्रीत्यागोद्यम

ततस्तदाकर्ण्य तातो वज्राहत इव गृहीतो महादु खेन, ततस्तातेनाभिहित→भद्र । वेदक। परित्यजेद चन्दनरससेकशीतल तालवृन्तं, न मामेष बहिस्तापो बाधते । गच्छ, समाह्वय कुमार, येनापनयामि तस्य पापमित्रससर्गवारणेन दु सहमात्मनोऽन्तस्तापमिति। ततो विमुच्य तालवृन्त क्षितिनिहितजानुकरमस्तकेन वेदकेनाभिहित→यदाज्ञापयति देव, किन्तु महाप्रयोजनमपेक्ष्य भविष्याम्यहमस्थापितमहत्तम, ततो न तत्र देवेन कोप करणीय । तातेनाभिहित→भद्र। हितभाषिणि क कोपावसर ? वदतु विवक्षित भद्र, वेदकेनाभिहित→देव। यद्येव तत कुमारपरिचयादेवावधारितमिद मया, यदुत अय वैश्वानरोऽन्तरङ्गभूत कुमारस्य वयस्यो, न शक्योऽधुना केनाप्यपसारयितु, गृहीत कुमारेणात्यर्थं हितबन्धुबुद्ध्या, न शक्नोति तद्विरहे क्षणमप्यासितुं कुमार, यतो न लभते धृति, गृह्यते रणरणकेन, मन्यते तृणतुल्यमनेन रहितमात्मान, ततो यद्येव [यद्यप्यय मु] कुमारो वैश्वानरससर्गत्यागं प्रति किञ्चिदुच्यते ततोऽहमेव तर्कयामि→'महान्तमुद्वेग कुर्यात् आत्मघातादिक वा विदध्यात्, अन्यद्वा किञ्चिदकाण्डविड्वरमनर्थान्तर सपादयेत्' इत्यतो नात्रार्थे किञ्चिद्वक्तु कुमारमर्हति देव । बुद्धिसमुद्रेणोक्त→देव। सत्यमेव सर्वमिद यदावेदित वेदकेन, तथाहि→वयमपि कुमारस्य पापमित्रसबन्धवारणे गाढमुद्युक्ता सकलकालमास्महे, चिन्तित, चास्माभि यद्येव[यद्यय मु]कुमारोऽनेन वैश्वानरपापमित्रेण वियुज्येत, तत सत्य नन्दिवर्द्धन स्यात्, केवलमीदृश कथञ्चिदनयोर्गाढनिरूढ प्रेम येन न शक्यतेऽधुना कुमारोऽनर्थभीरुतया वियोजन विधातुमित्यतोऽशक्यानुष्ठानरूप कुमारस्य वैश्वानरेण सह मैत्रीवारणमिति मन्यामहे । तातेनाभिहितम्→आर्य। क पुनरत्रोपायो भविष्यति? बुद्धिसमुद्रेणोक्तम्→अतिगहनमेतत्, वयमपि न जानीम, विदुरेणाभिहितम्→देव। श्रूयतेऽत्र कश्चिदतीतानागतवर्त्तमानपदार्थवेदी समागतो जिनमतज्ञो नाम सिद्धपुत्रो महानैमित्तिक, स कदाचिदत्रोपाय लक्षयति, तातेनाभिहित→साधु अभिहित भद्र । साधु , शीघ्र समाहूयता स भवता, विदुरेणाभिहित→यदाज्ञापयति देव इति । निर्गतो विदुर, समागतो नैमित्तिकेन सह स्तोकवेलया, दृष्टो नैमित्तिकस्तातेन, तुष्टश्चेतसा, दापितमासन, कृतमुचितकरणीय, कथितो व्यतिकर, ततो बुद्धिनाडीसचारेण निरूप्य तेनाभिहित→महाराज। न दृश्यतेऽत्रा[विद्यतेऽत्रा मु]न्य कश्चिदुपाय, एक एवात्र परमुपायो विद्यते, दुर्लभश्चासौ प्रायेण । तातेनाभिहित→कीदृश स इति कथयत्वार्य ।

## चित्तसौन्दर्यमहानगरवर्णनम्

जिनमतज्ञेनाभिहित→महाराज । आकर्णय, अस्ति रहित सर्वोपद्रवैर्निवासस्थान समस्तगुणाना, कारण कल्याणपरम्पराया, दुर्लभ मन्दभागधेयैश्चित्तसौन्दर्यं नाम नगर, तथाहि→

वसता तत्र लोकाना, नगरे पुण्यकर्मणाम् । रागादिचरटा सर्वे, जायन्ते नैव बाधका ॥१॥
यतश्च क्षुत्पिपासाद्या, बाधन्ते तत्र नो जनम् । ततस्तदुच्यते धीरै, *सर्वोपद्रववर्जितम्* ॥२॥
ज्ञानादिभाजन लोकस्तद्वशेनैव जायते । कलाकलापकौशल्य, न ततोऽन्यत्र विद्यते ॥३॥
भवन्त्यौदार्यगाम्भीर्यधैर्यवीर्यादयो गुणा । वसता तत्र *तत्सर्वगुणस्थानमतो* मतम् ॥४॥

यतश्च वसता तत्र, धन्याना सप्रवर्धते । उत्तरोत्तरभावेन, विशिष्टा सुखपद्धति ॥५॥
न च सपद्यते तस्या, प्रतिपात कदाचन । *कल्याणपद्धतेर्हेतुरतस्तन्नगर* मतम् ॥६॥
सर्वोपद्रवनिर्मुक्त, समस्तगुणभूपितम् । कल्याणपद्धतेर्हेतुर्यत एव च तत्पुरम् ॥७॥
अत एव सदानन्द, तत्सपुण्यैर्निषेवितम् । नगर चित्तसौन्दर्यं, *मन्दभाग्ये सुदुर्लभम्* [अर्थतश्चतुर्भि कलापकम्] ॥८॥

## शुभपरिणामो राजा

तत्र च नगरेऽस्ति हितकारी सर्वलोकाना, कृतोद्योगो दुष्टनिग्रहे, दत्तावधान शिष्टपरिपालने, परिपूर्ण कोशदण्डसमुदयेन शुभपरिणामो नाम राजा—

यतोऽसौ सर्वलोकाना, चित्तसन्तापवारक । तथा सपर्कमात्रेण, महानन्दविधायक ॥१॥
सदनुष्ठानमार्गेऽपि, जन्तूना स प्रवर्त्तक । अतो धीरजनैर्लोके, *हितकारी* निगद्यते ॥२॥
रागद्वेषमहामोहक्रोधलोभमदभ्रमा । कामेर्ष्याशोकदैन्याद्या, ये चान्ये दु खहेतव ॥३॥
दुष्टचेष्टतया नित्य, लोकसन्तापकारिण । *तेषामुद्दलन* राजा, स कुर्वन्नवतिष्ठते [युग्मम्] ॥४॥
ज्ञानवैराग्यसतोषत्यागसोजन्यलक्षणा । ये चान्ये जनताऽऽह्लादकारिण शिष्टसमता ॥५॥
तेषा स राजा सतत, *परिपालनतत्पर* । आस्ते नि शपकर्त्तव्यव्यापारविमुख सदा [युग्मम्] ॥६॥
धीधृतिस्मृतिसवेगशमाद्यै परिपूर्यते । भाण्डागार यतस्तस्य, गुणरत्ने प्रतिक्षणम् ॥७॥
दण्डश्च वर्द्धते तस्य, चतुर्भेदबलात्मक । शीलाङ्गलक्षणैर्नित्य, रथदन्तिहयादिभि ॥८॥
दुष्टाना निग्रहासक्त, शिष्टाना परिपालक । *कोशदण्डसमृद्धश्च,* तेनासा गीयते नृप ॥९॥

## निष्प्रकम्पता महादेवी

तस्य च शुभपरिणामस्य राज्ञो गृहीतजयपताका शरीरसौन्दर्येण, विनिर्जितभुवनत्रया कलाकलापकोशलेन, अपहसितरतिविभ्रमा विलासविस्तरेण, अधरितारुन्धतीमाहात्म्यातिशया निजपतिभक्तितया, निष्प्रकम्पता नाम महादेवी —

एकत्र सर्वयत्नेन, कृतालङ्कारचर्चनम् । सुरासुरनरस्त्रैण, यत्स्याल्लोकेऽतिसुन्दरम् ॥१॥
क्षोभार्थं मुनिसङ्घस्य, कदाचिदुपतिष्ठते । अन्यस्या दिशि सस्थाप्या, सा देवी निष्प्रकम्पता ॥२॥
आसक्तिर्मुनिचित्ताना, तस्यामेवोपजायते । अत शरीरसौन्दर्यात्सा *गृहीतपताकिका* [त्रिभिर्विशेषकम्] ॥३॥
रुद्रेन्द्रोपेन्द्रचन्द्राद्या, कलाकौशलशालिन । ये चान्ये लाकविख्याता, विद्यन्ते भुवनत्रये ॥४॥
लोभकामादिभि सर्वे, जितास्ते भावशत्रुभि । न कौशलमतस्तेषा, विद्यते परमार्थत [युग्मम्] ॥५॥
तस्यास्तु देव्यास्तत्किञ्चित्कौशल येन लीलया । तान्पराजयते तेन, *साऽभिभूतजगत्त्रया* ॥६॥
रतेर्विलासा कामस्य, केवल तोषहेतव । मुनयस्तु पुनस्तेषा, न वार्त्तामपि जानते ॥७॥
तस्या सत्का पुनर्देव्या, व्रतनिर्वाहणादय । विलासा मुनिलोकस्य, मानसाक्षेपकारिण ॥८॥
अतोऽ*पहसिता नित्य* [सत्य मु]स्वविलासै रतिस्तया । यथा च भर्त्तुर्भक्ता सा, तथेदानी निगद्यते ॥९॥
आपन्निमग्नभर्त्तार, प्रकाम्य निजजीवितम् । निर्वाहयति वीर्येण, तेनासौ *भर्तृवत्सला* ॥10॥
अरुन्धती पुनर्नैव, पत्यु सरक्षणक्षमा । निष्प्रकम्पतया तस्मात्, *भर्तृभक्ततया जिता* ॥११॥
किञ्चेह बहुनोक्तेन ? राज्ञ कार्यप्रसाधनी । तस्य राज्ये पर सारा, सा देवी निष्प्रकम्पता ॥१२॥

## तत्पुत्रीक्षान्तिवर्णनम्

तयोश्च निष्प्रकम्पताशुभपरिणामयोर्देवीनृपयोरस्ति प्रकर्प सुन्दरीणा, उत्पत्तिभूमिराश्चर्याणा, मञ्जूषा गुणरत्नराशे, वपुर्वैलक्षण्येन मुनीनामपि मनोहारिणी क्षान्तिर्नाम दुहिता→

यत सा सततानन्ददायिनी पर्युपासिता । स्मरणेनापि नि शेषदोषमोपविधायिनी[1] [यनी मु] ॥१॥
निरीक्षते विशालाक्षी, यन्नर किल लीलया । पण्डितै स महात्मेतिकृत्वा गाढ प्रशस्यते ॥२॥
आलिङ्गन पुनस्तस्या, मन्ये यो लप्स्यते नर । स सर्वनरवर्गस्य, चक्रवर्त्ती भविष्यति ॥३॥

1 °विघातनी प्र ।

अतश्चास्तरा तस्या, नान्या जगति विद्यते । *प्रकर्ष सुन्दरीणा* सा, विद्वद्भिस्तेन गीयते ॥४॥
सद्ध्यानकेवलज्ञानमहर्द्धिप्रशमादय । लोकानामद्भुता भावा, ये चमत्कारकारिण ॥५॥
ते भवन्ति भविष्यन्ति, भूताश्चानन्तशो यत । तत्प्रसादेन सत्त्वाना, तामाराधयता सदा [सताम् मु] युग्मम् ॥६॥
*उत्पत्तिभूमि* सा तस्मादाश्चर्याणामुदाहृता । यथा च रत्नमञ्जूषा, तथेदानी निबोधत ॥७॥
दानशीलतपोज्ञानकुलरूपपराक्रमा । सत्यशौचार्जवालोभवीर्यैश्वर्यादयो गुणा ॥८॥
ये केचित्सुन्दरा लोके, वर्त्तन्ते रत्नरूपिण । क्षान्तिरेव हि सर्वेषा, ते' पाधारता गता ॥९॥
तेनासौ *रत्नमञ्जूषा,* विद्वद्भि परिकीर्त्तिता । क्षान्तिहीना गुणा सर्वे, न भन्ते निराश्रया ॥10॥
अथवा→क्षान्तिरेव महादान, क्षान्तिरेव महातप । क्षान्तिरेव महाज्ञान, न्तिरेव महादम ॥११॥
क्षान्तिरेव महाशील, क्षान्तिरेव महाकुलम् । क्षान्तिरेव महावीर्य, क्षान्तिरे पराक्रम ॥१२॥
क्षान्तिरेव च सन्तोष, क्षान्तिरिन्द्रियनिग्रह । क्षान्तिरेव महाशौच, क्षान्ति व महादया ॥१३॥
क्षान्तिरेव महारूप, क्षान्तिरेव महाबलम् । क्षान्तिरेव महैश्वर्यं, क्षान्तिर्धैर्यमुदाहृता ॥१४॥
क्षान्तिरेव पर ब्रह्म, सत्य क्षान्ति प्रकीर्त्तिता । क्षान्तिरेव परामुक्ति, क्षान्ति सर्वार्थसाधिका ॥१५॥
क्षान्तिरेव जगद्वन्द्या, क्षान्तिरेव जगद्धिता । क्षान्तिरेव जगज्ज्येष्ठा, क्षान्ति कल्याणदायिका ॥१६॥
क्षान्तिरेव जगत्पूज्या, क्षान्ति परममङ्गलम् । क्षान्तिरेवौषध चारु, सर्वव्याधिनिबर्हणम् ॥१७॥
क्षान्तिरेवारिनिर्नाश, चतुरङ्ग महाबलम् । किञ्चात्र बहुनोक्तेन ? क्षान्तौ सर्व प्रतिष्ठितम् ॥१८॥
अत एव तु सा कन्या, मुनिलोकमनोहरा । कुर्यादीदृशरूपाया, को न चित्त सचेतन ? ॥१९॥
अन्यच्च→यस्य चित्त समारोहेद्विलसन्ती स्वलीलया । सा कन्या धन्यता प्राप्य, सोऽपि तद्रूपता व्रजेत् ॥20॥

### वैश्वानरससर्गत्यागोपाय क्षान्तिपरिणय

अत सम्यग्गुणाकाङ्क्षी, क सकर्णो न ता हृदि? । कुर्यात्कन्या सदाकाल, सर्वकामसमर्पिकाम् ॥२१॥
एवञ्च स्थिते→सा गुणोत्कर्षयोगेन, कन्या सर्वाङ्गसुन्दरा । अस्य वैश्वानरस्योच्चै, प्रतिपक्षतया स्थिता ॥२२॥
तस्या दर्शनमात्रेण, भीतभीत सुविह्वल । एष वैश्वानरो मन्ये, दूरत प्रपलायते ॥२३॥
नि शेषदोषपुञ्जोऽय, सा कन्या गुणमन्दिरम् । साक्षादग्निरय पाप, सा पुनर्हिमशीतला ॥२४॥
सहावस्थानमेव हि, नानयोर्विद्यते क्वचित् । विरोधभावात्तेनैवमस्माभिरभिधीयते ॥२५॥
यदैव कन्या ता धन्या, कुमार परिणेष्यति । अनेन पापमित्रेण, तदा मैत्री विहास्यति ॥२६॥

अत्रान्तरे चिन्तित विदुरेण→अये । अनेन जिनमतज्ञेन नैमित्तिकेनेदमभिहित→यथा चित्तसौन्दर्ये य शुभपरिणाम, तस्य या निष्प्रकम्पता, तज्जनिता या क्षान्ति, सैवामु नन्दिवर्द्धनकुमारस्यानेन पापमित्रेण वैश्वानरेण सह ससर्ग निवारयितु समर्था, नान्यस्तन्निवारणे कश्चिदुपाय इति, तत्सर्वमनेन युक्तमुक्तम् । अथवा किमत्राश्चर्यम् ? न हि जिनमतज्ञ कदाचिदयुक्त भाषते । ततस्तन्निमित्तकवचनमाकर्ण्य तातेनावलोकित पार्श्ववर्त्तिनो मतिधनस्य महामन्त्रिणो वदन, स्थितोऽसौ प्रह्वतर, अभिहितस्तातेन→आर्य। मतिधन। श्रुतमेतद्भवता ? मतिधनेनाभिहित–देव। श्रुतम् । तातेनाभिहित→आर्य। यद्येव ततो महदिद मम चित्तोद्वेगकारण, यद्येष विशिष्टजनस्पृहणीयोऽपि कुमारस्य गुणकलाप पापमित्रसम्बन्धदूषितो निष्फल सपन्न इति । तद् गच्छ, शीघ्र प्रेषय चित्तसौन्दर्ये वचनविन्यासकुशलान् प्रधानमहत्तमान्, ग्राहय तद्देशासम्भवीनि प्राभृतानि इति, उपदिश गच्छता तेषा निरन्तरसम्बन्धकरणपटून्युपचारवचनानि, याचय कुमारार्थ शुभपरिणाम क्षान्तिदारिकामिति । मतिधनेनाभिहित –यदाज्ञापयति देव इति, निर्गन्तु प्रवृत्तो मतिधन ।

### कर्म्मपरिणामायत्त कन्यापरिणय

जिनमतज्ञेनाभिहित→महाराज । अलमनेनारम्भेण, न खल्वेवविधगमनयोग्य तन्नगर, तातेनाभिहित→आर्य। कथम्? जिनमतज्ञेनाभिहित→महाराज। समस्तान्येवात्र लोके नगरराजभार्यापुत्रमित्रादीनि वस्तूनि द्विविधानि भवन्ति, तद्यथा–अन्तरङ्गाणि बहिरङ्गाणि च, तत्र बहिरङ्गेष्वेव वस्तुषु भवादृशा गमनाऽऽज्ञापनादिव्यापारो, नान्तरङ्गेषु । एतच्च नगर, राजा, तत्पती, दुहिता, च सर्वमन्तरङ्ग वर्त्तते, तन्न युज्यते तत्र महत्तमप्रेषणम् । तातेनाभिहित→आर्य । क पुनस्तत्र प्रभवति ?

जिनमतज्ञेनाभिहित→योऽन्तरङ्ग एव राजा । तातेनाभिहित→आर्य। क पुनरसो? जिनमतज्ञेनाभिहित–महाराज। कर्म्मपरिणाम, तस्य हि शुभपरिणामस्य कर्मपरिणामेनेव भटभुक्त्या दत्त तन्नगरम्, अतस्तदायत्तोऽसौ वर्त्तते । तातेनाभिहित→आर्य। किं भवत्यसौ कर्म्मपरिणामो मादृशामभ्यर्थनाविषय ? जिनमतज्ञेनाभिहित→महाराज। नैतदेव, स हि यथेष्टकारी प्रायेण नापेक्षते सत्पुरुषाभ्यर्थना, न रज्यते सदुपचारवचनेन, न गृह्यते (रु ध्यते प्र) परोपरोधेन, नानुकम्पते दृष्ट्वाऽप्यापद्गत जन, केवलमसावपि कार्यं विदधान पृच्छति महत्तमभगिनी लोकस्थिति, पर्यालोचयति स्वभार्यां कालपरिणति, कथयत्यात्मीयमहत्तमाय स्वभावाय, अनुवर्त्तते अस्यैव नन्दिवर्द्धनकुमारस्य समस्तभवान्तरानुयायिनी प्रच्छन्नरूपा भार्यां भवितव्यता, बिभेति कियन्मात्र नन्दिवर्द्धनकुमारवीर्यादपि स्वप्रवृत्तौ । ततश्चैवविधमन्तरङ्गपरिजन स्वसभावनया सम्मान्य एष कर्म्मपरिणाममहाराज कार्यं कुर्वाणो न वहिरङ्गलोक रटन्तमपि गणयति, किं तर्हि ? यदात्मने रोचते तदेव विधत्ते, तस्मान्नायमभ्यर्थनोचित, किन्तु यदाऽस्य प्रतिभासिष्यते, तदा स्वयमेव कुमाराय दापयिष्यति शुभपरिणामेन क्षान्तिदारिकामिति ।

### जिनमतज्ञोक्त चेत स्वास्थ्यकारणम्

तातेनाभिहित→आर्य। हतास्तर्हि वय, यतो न ज्ञायते कदाचित्त(दात)स्य प्रतिभासिष्यते, अस्मिंश्चानपसारिते पापमित्रे कुमारस्य समस्तगुणविफलतया न किञ्चिदस्माक जीवतीतिकृत्वा । जिनमतज्ञेनाभिहित→महाराज । अल विषादेन, किमत्र क्रियते ? यदीदृशमेवेद प्रयोजनमिति ।

तथाहि→*नर प्रमादी शक्येऽर्थे, स्यादुपालम्भभाजनम् । अशक्यवस्तुविषये, पुरुषो नापराध्यति* ॥१॥

अपि च→*योऽशक्येऽर्थे प्रवर्त्तेत, अनपेक्ष्य बलाबलम् । आत्मनश्च परेषा च, स हास्य स्याद्विपश्चिताम्* ॥२॥

तदत्रैव स्थिते कार्ये, यद्वविष्यत्तया परम् । भवता त्यक्तचिन्तानामासितु युज्यते ध्रुवम् ॥३॥

अन्यच्च कथ्यते किञ्चिच्चेतस स्वास्थ्यकारणम् । निरालम्वनतामेत्य, मा भूद्दैन्य भवादृशाम् ॥४॥

तातेनाभिहित→आर्य। साधूक्त, समाश्वासिता वयमनेन भवता पश्चिमवचनेन, तत्कथय किं तदस्माक चेतस स्वास्थ्यकारणमिति । जिनमतज्ञेनाभिहित→महाराज। अस्त्यस्य कुमारस्य प्रच्छन्नरूप पुण्योदयो नाम वयस्य, स यावदस्य पार्श्ववर्त्ती तावदेष वैश्वानर पापमित्रतया य यमनर्थं कुमारस्य सपादयिष्यति स सोऽस्य प्रत्युतार्थरूपतया पर्यवस्यतीति, तदाकर्ण्य मनाक् स्वस्थीभूतस्तात । अत्रान्तरे दिनकरमम्बरतलस्य मध्यभागमारूढ निवेदयन्नाडिकाच्छेदप्रहतपटहनादानुसारी समुत्थित शङ्खशब्द, पठित कालनिवेदकेन ।

न क्रोधात्तेजसो वृद्धि, किन्तु मध्यस्थभावत । दर्शयन्निति लोकाना, सूर्यो मध्यस्थता गत ॥१॥

### कुमाराभिप्रायज्ञानार्थ प्रयास

तातेनाभिहित→अये । मध्याह्नसमयो वर्त्तते, तत समुत्थातव्यमिदानीमितिकृत्वा विसर्जितो राजलोक, पूजितौ कलाचार्यनैमित्तिकौ, प्रस्थापितौ सबहुमान, ततो नैमित्तिकवचनादशक्यानुष्ठानमेतदिति जातनिर्णयेनापि तातेन मोहहेतुतयाऽपत्यस्नेहस्य समादिष्टो विदुर, यदुत→परीक्षितव्यो भवता कुमाराभिप्राय, किं शक्यतेऽस्मात्पापमित्राद्वियोजयितु कुमारो न वेति ? विदुरेणाभिहित→यदाज्ञापयति देव । तत समुत्थितस्तात, कृत दिवसोचित कर्त्तव्य, द्वितीयदिने समागतो मम समीपे विदुरो, विहितप्रणामो निषण्णो मदन्तिके, पृष्टो मया→भद्र। ह्य किन्नागतोऽसि? विदुरेण चिन्तित–अये। समादिष्टस्तावदह देवेन, यथा लक्षयितव्यो भवता कुमाराभिप्राय, ततोऽहमस्मै यत् तस्मात्साधो सकाशादाकर्णितमासीन्मया दुर्जन–ससर्गदोषप्रतिपादकमुदाहरण तत्कथयामि, ततो विज्ञास्यते खल्वेतदीयोऽभिसन्धि, इत्येव विचिन्त्य विदुरेणाभिहित→कुमार। किञ्चिदाक्षण्यमभूत्, मयाऽभिहित→कीदृशम् ? विदुरेणाभिहित→कथानकमाकर्णितम् । मयाऽभिहित→वर्णय कीदृशं तत्कथानकम्? विदुरेणाभिहित→वर्णयामि, केवलमवहितेन श्रोतव्य कुमारेण । मयाऽभिहित→एष दत्तावधानोऽस्मि ।

### स्पर्शनप्रभावदर्शककथा मनीषिबालयो स्पर्शनसपर्क

विदुरेणाभिहित→अस्त्यस्यामेव मनुजगतौ नगर्यामस्मिन्नेव भरताभिधाने पाटके क्षितिप्रतिष्ठित नाम नगरम् । तत्रास्ति वीर्यनिधानभूत कर्मविलासो नाम राजा । तस्य च द्वे अग्रमहिष्यौ, शुभसुन्दरी अकुशलमाला च । तत्र शुभसुन्दर्या पुत्रोऽस्ति मनीषी नाम, बालोऽकुशलमालाया । तौ च मनीषिबालौ सप्राप्तकुमारभावो नानाकारेषु काननादिषु क्रीडारसमनुभवन्तौ यथेष्टचेष्टया विचरत । अन्यदा स्वदेहाभिधाने कानने नातिदूरादेव दृष्टस्ताभ्या कश्चित्पुरुष, स च तयो पश्यतोरेव

समारूढस्तदुच्छ्रयाभिधान वल्मीक, निबद्धस्तेन मूर्द्धनामकतरुशाखाया पाशको निर्मित शिरोधराया प्रवाहितश्चात्मा, ततो 'मा साहस मा साहस' इति वदन्तौ प्राप्तौ ससभ्रम तत्समीप कुमारौ, छिन्न पाशको बालेन, तत समोहविह्वलो भग्नलोचनश्च पतितोऽसौ पुरुषो भूतले, समाह्लादितो वायुदानेन कुमाराभ्या, लब्धा चेतना, उन्मीलिते लोचने, निरीक्षिता दिशो, दृष्टौ कुमारौ, अभिहितस्ताभ्या–भद्र! किमेतदधमपुरुषोचित भवता व्यवसितम् ? कि वा भद्रस्येदृशाध्यवसायस्य कारणम्? इति कथयतु भद्रो यद्यनाख्येय न भवति । ततो दीर्घदीर्घं नि श्वस्य पुरुषेणाभिहित→अलमस्मदीयकथया, न सुन्दरमनुष्ठित भद्राभ्या, यदहमात्मदु खानल निर्वापयितुकामो भवद्भ्या धारित, तदधुनापि न कर्त्तव्यो मे विघ्न इति ब्रुवाण समुत्थित पुनरात्मानमुल्लम्बयितुमसौ पुरुषो, धृतो बालेन, अभिहितश्च–भद्र! कथय तावदस्माकमुपरोधेन स्ववृत्तान्त ततो यद्यलब्धप्रतीकार स्यास्ततो यदुचित तत्कुर्या ।

## सदागमादेशेन भव्यस्य स्पर्शनमैत्रीत्याग

पुरुषेणाभिहितं→यदि निर्बन्धस्तत श्रूयताम्→आसीन्मम शरीरमिव, सर्वस्वमिव, जीवितमिव, हृदयमिव द्वितीय भवजन्तुर्नाम मित्र, स चातिस्नेहनिर्भरतया न क्षणमात्रमपि मा विरहयति, कि तर्हि? सकलकाल मामेव लालयति, पालयति, पृच्छति च मा क्षणे क्षणे यदुत–भद्र स्पर्शन । कि तुभ्य रोचते? ततो यद्यदह वदामि तत्तदसौ भवजन्तुर्मम वयस्यो वत्सलतया सपादयति न कदाचिन्मत्प्रतिकूल विधत्ते, अन्यदा मम मन्दभाग्यतया दृष्टस्तेन सदागमो नाम पुरुष । पर्यालोचित च सह तेन किञ्चिदेकान्ते भवजन्तुना भावितचित्तेन, हृष्ट इव लक्ष्यते । ततस्तत्कालादारभ्य शिथिलीभूतो ममोपरि स्नेहबन्ध, न करोति तथा लालना, न दर्शयत्यात्मबुद्धि, न प्रवर्त्तते मदुपदेशेन, न मम वार्त्तामपि प्रश्नयति, प्रत्युत मा वैरिकमेव मन्यते, दर्शयति विप्रियाणि, सकल प्रतिकूलमासेवते । ततो मया चिन्तितम्–हा हन्त किमेतत् ? न मया किञ्चिदस्य व्यलीकमाचरित, किमित्ययमकाण्ड एव भवजन्तु षष्ठिकापरावर्त्तित इवान्यथा सवृत्त, हा हतोऽस्मि मन्दभाग्य इत्याराटच्यमानो वज्राहत इव, पिष्ट इव, हृतसर्वस्व इव, शोकभराक्रान्तमूर्त्ति प्राप्तोऽह दु खातिरेकम् । लक्षित च कथञ्चित्पर्यालोचयता मया अये! सर्वोऽप्यय सदागमपर्यालोचजनितोऽनर्थव्यतिकरो, विप्रतारितोऽय मम वयस्योऽनेन पापेन, स चोन्मूलयन्निव मम हृदय पुन पुनस्तेन सदागमेन सह रहसि पर्यालोचयति, तन्निवारणार्थं रटन्तमपि मा नाकर्णयति, यथा यथा च भवजन्तो सदागमपर्यालोच सुतरा परिणमति तथा तथा मामेष नितरा शिथिलयति, तत प्रवर्द्धते मे गाढतर दु खम् । अन्यदा दृढतर पर्यालोच्य सदागमेन सह किञ्चिदेकान्ते त्रोटितो मया सह सबन्ध सर्वथैव भवजन्तुना, परिच्छिन्नोऽह चित्तेन, त्यक्तानि मम वल्लभानि तद्वचनेनैव गृहीतानि यानि पूर्वं कोमलतूलीगण्डोपधानादिसनाथानि शयनानि, विरहितानि हसपक्ष्मादिपूरितान्यासनानि, मुक्तानि बृहतिकाप्रावाररल्लिकाचीनाशुकपट्टाशुकादीनि कोमलवस्त्राणि, प्रत्याख्यातानि मम सुखदायीनि शीतोष्णर्तुप्रतिकूलतया सेव्यानि कस्तूरिकागु(ग)रुचन्दनादीनि विलेपनानि, वर्जित सर्वथा ममाह्लादातिरेकसपादक कोमलतनुलताकलितो ललनासधात । तत प्रभृति स भवजन्तु करोति केशोत्पाटन, शेते कठिनभूमौ, धारयति शरीरे मल, परिधत्ते जरच्चीवराणि, वर्जयति दूरत स्त्रीगात्रसङ्ग, कथञ्चिदापन्ने तस्मिन्करोति प्रायश्चित्त, सहते माघमासे शीत, गृह्णाति ज्येष्ठाऽऽषाढयोरातप, सर्वथा परमवैरिक इव यद्यत्किञ्चिन्मे प्रतिकूल तत्सर्वमाचरति । ततो मया चिन्तित→परित्यक्तस्तावत्सर्वथाऽहमनेन, गृहीतश्च शत्रुबुद्ध्या, *तथाप्यामरणान्ता प्रणया सज्जनानामिति* वृद्धवाद, ततो यद्यप्ययमनेन सदागमपापमित्रेण विप्रतारितो मामेव कदर्थयति तथाऽप्यकाण्ड एव न मया मोक्तव्यो, यतो भद्रकोऽय ममात्मीयप्रकृत्या लक्षितो बहुना कालेन, कृतानि भूयासि ममानुकूलानि, सदागममेलकजनितोऽयमस्य विपर्यास, तत्कदाचिदपगच्छत्येष कालेन, ततो भविष्यति ममोपरि पूर्ववदस्य स्नेहभाव, एव पर्यालोच्य व्यवस्थितोऽह बहिष्कृतोऽपि तेन भवजन्तुना तस्यैव सम्बन्धिनि शरीराभिधाने प्रासादे महादु खानुभवेन कालमुदीक्षमाणो दुराशापाशावपाशित सन् कियन्तमपि कालमिति । अन्यदा सदागमवचनमनुवर्त्तमानस्तिरस्कृत्य मा पुरुषक्रियया निष्कास्य ततोऽपि प्रासादात्परमाधार्मिक इव निर्घृणतया मामाक्रन्दन्त अवगणय्य रुष्ट इव तत्र यास्यामि यत्र भवन्त लोचनाभ्या न द्रक्ष्यामीत्यभिधाय गत कुत्रचित्। स चेदानी निर्वृतौ नगर्यां प्राप्त श्रूयते, सा च मादृशामगम्या नगरी, ततो मया चिन्तित→किमधुना मम प्रियमित्रपरिभूतेन तद्विरहितेनाजागलस्तनकल्पेन जीवितेन? ततश्चेदमध्यवसितमिति ।

## मनीषिबालयो स्पर्शनेन सह बहिरन्तश्छायया मैत्री

बालेनाभिहित→साधु स्पर्शन । साधु, स्थाने भवतो व्यवसाय, दु सह हि प्रियमित्रपरिभवदु ख, तद्विरहसन्तापश्च न

शक्यतेऽन्यथा यापयितुम् । तथाहि–

न शक्य सहजात्सोढु, क्षमिणाऽपि पराभव । *कनकेन हि निर्मुक्त, पाषाणोऽपि प्रलीयते* ॥१॥

मानिना मित्रविरहे, जीवितु नैव युज्यते । इद हि नश्यता तूर्णं, वासरेण निवेदितम् ॥२॥

अहो ते मित्रवत्सलता, अहो ते स्थिरानुराग, अहो कृतज्ञता, अहो साहस, अहो निर्मिथ्यभावतेति। भवजन्तो पुनरहो क्षणरक्तविरक्तता, अहो कृतघ्नता, अहो अलोकिकत्व, अहो मूढता, अहो खरहृदयत्व, अहो अनार्यानुष्ठानप्रवृत्तिरिति। केवलमेवमपि स्थिते ब्रवीम्यहमत्र किञ्चित्तदाकर्णयतु भद्र [द्रम् मु] । स्पर्शनेनाभिहित→वदतु निर्विकल्पमार्य , बालेनाभिहितम्–

अलब्धप्रतीकाराणामभिमानावलम्बिनाम् । स्नेहैकबद्धकक्षाणा, युक्तमेतद्भवादृशाम् ॥१॥

तथापि मदनुग्रहेण धारणीया भद्रेण प्राणा , इतरथा ममापीयमेव गति । रञ्जितोऽहमनेन भवतो निष्कृत्रिममित्रवात्सल्येन, दाक्षिण्यमहोदधयश्च सत्पुरुषा भवन्ति, सत्पुरुषश्च भद्र कार्यतो गम्यते, अत कर्त्तव्यमेवेतत् निर्विचार मामक वचन भद्रेण, यद्यपि चूतमनोरथा न कि(चि)ञ्चिनिकया पूर्यन्ते, तथापि मदनुकम्पया भवता मत्सबन्ध एव भवजन्तुविरहदु खप्रतीकारबुद्ध्या मन्तव्य । स्पर्शनेनाभिहित→साधु आर्य। साधु, धारिता एव भवताऽनुपकृतवत्सलेनातिस्निग्धवचनामृतसेकेनानेन स्वयमेव विलीयमाना मदीयप्राणा , किमत्र वक्तव्यम्? नष्टो मेऽधुना शोकसन्तापो, विस्मारित इव भवता भवजन्तु , शीतलीभूत नयनयुगल, आह्लादित चित्त, निर्वापित मे शरीर भवद्दर्शनेन, किम्बहुना ? त्वमेवाधुना भवजन्तुरिति, तत सजातरतयोर्निरन्तर स्नेहभाव । मनीषिणा चिन्तित→न खलु सहजोऽनुरक्तो वयस्य केनचित्प्रेक्षापूर्वकारिणा पुरुषेण निर्दोषरत्यज्यते, न च सदागमो निर्दोष कदाचित्त्याजयति, स हि गाढ पर्यालोचितकारीति श्रुतमस्माभि , तदत्र कारणेन भवितव्य, न सुन्दर खल्वेष स्पर्शन प्रायेण, तदनेन सह मैत्री कुर्वता विस्पमाचरित बालेन । एव चिन्तयन्नेव मनीषी सभाषित स्पर्शनेन–कृत मनीषिणाऽपि लोकयात्रानुरोधेन सभाषणम्, सजाता तेनापि सह बहिश्छायया मैत्री स्पर्शनस्य ।

## कर्मविलासाऽकुशलमालयोरभिप्राय

प्रविष्टा सर्वेऽपि नगरे, सप्राप्ता राजभवन, दृष्टो दत्तास्थान कर्म्मविलास सह महादेवीभ्या, कृत पादपतन जननीजनकाना आनन्दितास्तैराशीर्वादेन दापितान्यासनानि नोपविष्टास्तेषु, निषण्णा भूतले, दर्शित स्पर्शन , कथितरतद्वृत्तान्त , प्रकाशितश्चात्मनश्च तेन सह मैत्रीभाव कुमाराभ्या, परितुष्ट कर्मविलास । चिन्तितमनेन→मम तावदपथ्यसेवनमिव व्याधेरुपचयहेतुरेष स्पर्शन दृष्ट एव मयाऽनेकश पूर्वं, तत्सुन्दरमेतत्सपन्न यदनेन सहानयोर्मैत्री सजातेति, केवल प्रकृतिरिय ममानादिरूढा वर्त्तते यदुत→योऽस्यानुकूलस्तस्य मया प्रतिकूलेन भवितव्य, य पुनरस्य प्रतिकूलो निरभिष्वङ्गतया तस्य मया सुन्दर वर्त्तितव्य, य पुनरेकान्ततस्त्यजति स मयाऽपि सर्वथा मोक्तव्य एव । तदेव स्थिते निरीक्ष्य निरीक्ष्य कुमारयोरेन प्रति चेष्टित यथोचित करिष्यामीति विचिन्त्याभिहित कर्मविलासेन→वत्सो। सुन्दरमनुष्ठित भवद्भ्या यदेष स्पर्शन प्राणत्याग विदधानो धारितो, मैत्रीकरणेन पुन सुन्दरतर, क्षीरखण्डयोगतुल्यो हि वत्सयोरनयो सार्द्ध सबन्ध । अकुशलमालया चिन्तित→अहो मे धन्यता, भविष्यत्येतत्सबन्धेन मम यथार्थं नाम। यो ह्यस्य स्पर्शनस्यानुकूल स ममात्यन्तवल्लभ स एव च मा वर्द्धयति, पालयति, मदीयस्नेहफल चानुभवति नेतर, बहुशोऽनुभूतपूर्वमेतन्मया, एष च मदीयसूनुरेन प्रति मुखरागेण गाढमनुकूलो लक्ष्यते ततो भविष्यति मे मनोरथपूर्तिरिति विचिन्त्य तया बाल प्रत्यभिहित→वत्स। सुन्दरमनुष्ठित, अवियोगो भवतु भवत सुमित्रेणेति।

## शुभसुन्दरीचिन्तनम्

शुभसुन्दर्या चिन्तित→न सुन्दर खल्वेष मम तनयस्य पापमित्रसम्बन्ध , रिपुरेष परमार्थेन, कारणमनर्थपरम्पराया , शत्रुरय ममापि सहजोऽनुवर्त्तते, कदर्थिताऽहमनेन बहुश पूर्वं, नास्त्येव मयाऽस्य च सहावस्थान, केवलमेतावानत्र चित्तसन्धारणाहेतु→यदेष मदीयपुत्रोऽमु प्रति मुखच्छायया दृष्टिविकारेण च विरक्त इव लक्ष्यते, ततो न प्रभविष्यति प्रायेण ममाय पापो, यदि वा न ज्ञायते कि भविष्यति? विषम खल्वेष दुरात्मा, इत्याद्यनेकविकल्पमालाकुलमानसाऽपि गम्भीरतया मोनेनैव स्थिता शुभसुन्दरी ।

## स्पर्शनमूलशुद्धिज्ञानार्थं प्रभावस्याटनम्

अत्रान्तरे सजातो मध्याह्न , उपसहृतमास्थान, गता सर्वेऽपि स्वस्थानेषु, तद्दिनादारभ्य प्रवर्द्धते बालस्य स्पर्शनेन सह स्नेहसबन्ध , स हि चकितस्तिष्ठति सर्वथा, मनीषी न गच्छति विश्रम्भ, स्पर्शनस्तु सदा सन्निहिततया कुमारयोरन्तर्बहिश्च

न पार्श्व मुञ्चति, तत पर्यटन्ति ते सहिता एव नानास्थानेषु, क्रीडन्ति विविधक्रीडाभि । ततो मनीषिणा चिन्तित→कीदृशमनेन सह विचरता सर्वत्राविश्रब्धचित्ताना सुखम्? न चैष तावदद्यापि सम्यग् लक्ष्यते कीदृशस्वरूप इति, न चाज्ञातपरमार्थैरेष निर्द्धारयितु सग्रहीतु वा पार्यते, तदिदमत्र प्राप्तकाल—गवेषयामि तावदस्य मूलशुद्धि, ततो विज्ञाय यथोचितमाचरिष्यामीति स्थापित सिद्धान्त । तत समाहूतो रहसि बोधो नामाङ्गरक्ष । अभिहितश्चासौ→भद्र। ममास्य स्पर्शनस्योपरि महानविश्रम्भ, तदस्य मूलशुद्धि सम्यगवबुध्य शीघ्रमावेदय, बोधेनाभिहित→यदाज्ञापयति कुमार इति । निर्गतो बोध, ततोऽभ्यस्तसमस्तदेश—भाषाकौशलो बहुविधवेषविरचनाचतुर स्वामिकार्यवद्धकक्षो लब्धलक्ष्योऽनुपलक्ष्यश्च प्रहितस्तेनात्मीय **प्रभावो** नाम पुरुष प्रणिधि आदिष्टश्चासौ प्रस्तुतप्रयोजनम् । ततो विविधदेशेषु कियन्तमपि काल पर्यट्य समागत सोऽन्यदा, प्रविष्टो बोधसमीपे, विहितप्रणामो निषण्णो भूतले । बोधेनापि विधायोचिता प्रतिपत्तिमभिहितोऽसौ→भद्र । वर्णयात्मीयवृत्तान्तम । प्रभाव प्राह →यदाज्ञापयति देव —

## राजसचित्तनगरे रागकेसरिविषयाभिलाषौ राजमन्त्रिनौ

अस्ति (स्मि) तावदहमितो निर्गत्य गतो बहिरङ्गेषु नानादेशेषु । न लब्धो मया तत्र प्रस्तुतप्रवृत्तिगन्धोऽपि, ततो गतोऽहमन्तरङ्गेषु जनपदेषु । तत्र च दृष्टमेकत्र मया भिल्लपल्लीकल्पमाकीर्ण समन्तात्कामादिभिश्चरटै निवास पापिष्ठलोकाना, आकरो मिथ्याभिमानस्य, हेतुरकल्याणपरम्पराया, अवष्टब्ध सतत विततेन तमसा, रहित प्रकाशलेशेनापि **राजसचित्त** नाम नगरम्। तत्र च चूडामणिश्चरटचक्रस्य कारण समस्तपापवृत्तीना, वज्रपात कुशलमार्गगिरे, दुर्जय शक्रादीना, अतुलबलपराक्रमो **रागकेसरी** नाम नरेन्द्र । तस्य च चिन्तक सर्वप्रयोजनाना, अप्रतिहताज्ञ समस्तस्थानेषु, निपुणो जगद्वशीकरणे, कृताभ्यासो जन्तुविमोहने, पटुबुद्धि पापनीतिमार्गेषु, अनपेक्ष स्वकार्यप्रवृत्तौ परोपदेशाना, निक्षिप्तसमस्तराज्यभारो **विषयाभिलाषो** नामामात्य । ततस्तस्मिन्नगरे यावदह राजकुलस्याभ्यर्णभूभागे प्राप्तस्तावदकाण्ड एव समुल्लसितो बहल कोलाहलो, निर्गच्छन्ति घोषयता बन्दिवृन्देन प्रख्यापितमाहात्म्या लौल्यादिनरेन्द्राधिष्ठिता **मिथ्याभिनिवेशादयो** भूयास स्यन्दना । पूरयन्ति गलगर्जितेन दिगन्तराणि राजमार्गमवतरन्तो **ममत्वादय** करिवरा । चलिता हेषारवेण बधिरयन्तो दिक्चक्रवाल **अज्ञानादयो** वरवाजिन। विराजन्ते गृहीतनानायुधा रणशौण्डीरतया वल्गमाना पुरतो धावन्तश्चापलादयोऽसख्येया पदातय । तत कन्दर्पप्रयाणकपटहशब्दा—कर्णनसमनन्तर खरपवनप्रेरितमेघजालमिव क्षणमात्रेणैव विलासध्वजमालाकुल बिब्बोकशङ्खकाहलाध्वनिपूरितदिगन्तर मीलितमपरिमित बलम् ।

## विषयाभिलाषस्य स्पर्शनादिपञ्चपुरुषा

ततस्तदवलोक्य मया चिन्तित→अये। किमेतत्? गन्तुमिव प्रवृत्त क्वचिदय राजा लक्ष्यते, तत्किमस्य गमनप्रयोजनमिति यावद्वितर्काकुलस्तिष्ठामि तावद्दृष्टो मया पर्यन्तदारुण स्वरूपेणादर्शक ससारवैचित्र्यस्य बोधको विदुषा, निर्वेदभूमिर्विवेकिना, अविज्ञातस्वरूपो निर्विवेकैस्तस्यैव विषयाभिलाषस्य मन्त्रिण सबन्धी **विपाको** नाम पुरुष । तत प्रियसभाषणपूर्वक पृष्टोऽसौ मया→भद्र। कथय किमस्य नरेन्द्रस्य प्रस्थानकारणम्? कुतूहल मे, विपाकेनाभिहित→आर्य। यद्येव तत समाकर्णय, पूर्वमिह क्वचिदवसरे सुगृहीतनामधेयेन देवेन रागकेसरिणाऽभिहितोऽमात्यो यदुत→आर्य विषयाभिलाष। तथा कथञ्चिद्विधेहि यथा मम समस्तमपि जगत् किङ्करता प्रतिपद्यते, मन्त्रिणाऽभिहित→यदाज्ञापयति देव, ततो नान्य कश्चिदस्य राजादिष्टप्रयोजनस्य निर्वर्त्तनक्षम इति मनसि पर्यालोच्य कि चात्रान्येन साधनेन बहुना क्लेशितेन? साधयिष्यन्त्येतान्येवाचिन्त्यवीर्यतया प्रस्तुतप्रयोजनमिति सजातावष्टम्भेन मन्त्रिणा गाढमनुरक्तभक्तानि, विविधस्थानेषु निर्व्यूढसाहसानि, स्वामिनि भृत्यतया लब्धजयपताकानि, जनहृदयाक्षेपकरणपटूनि, प्रत्यादेश शूराणा, प्रकर्षश्चटुलाना, निकषभूमि परवञ्चनचतुराणा, परमकाष्ठा साहसिकाना, निदर्शन दुर्दान्ताना, आत्मीयान्येव स्पर्शनादीनि पञ्च गृहीतानि मानुषाणि प्रहितानि जगद्वशीकरणार्थम् । ततो मया चिन्तित→अये। लब्ध स्पर्शनस्य तावन्मूलोत्थानम् ।

## सन्तोषजयाय युद्धसरम्भ

विपाकेनाभिहित→ततो वितते जगति विचरद्भिस्तैर्वशीकृतप्राय भुवन वर्त्तते, ग्राहितप्राय रागकेसरिण किङ्करता, केवल महाशस्यसमुदायानामितिविशेष इव तेषामुपद्रवकारी समुत्थित श्रूयते किल कश्चित् सन्तोषो नाम चरटो, निर्वाहिताश्च तान्यभिभूय किल कियन्तोऽपि लोकास्तेन, प्रवेशिताश्च देवभुक्तेरतिक्रान्ताया निर्वृतौ नगर्यामिति च श्रूयते । ततो मया चिन्तित→व्यभिचरति

मनागयमर्थो यतोऽस्माक समक्षमेव मनीपिवालयो स्पर्शनेन निर्वृतो नगर्यां भवजन्तोर्गमन सदागमवलेनाख्यात, अय तु स्पर्शनादीन्यभिभूय सन्तोपेण निर्वाहिता लोका स्थापिताश्च निर्वृत्तो नगर्यामिति कथयति, तत्कथमेतद् ? अथवा किमनयाऽकाण्ड–पर्यालोचनया? अवहितस्तावदाकर्णयाम्यस्य वचन, पश्चाद्विचारयिष्यामि । विपाकेनाभिहित→ततोऽयमाप्तलोकश्रुतेराकर्णितोऽद्य देवेन रागकेसरिणा स्पर्शनाद्यभिभवव्यतिकर । ततोऽतिदु सहमश्रुतपूर्व च स्वपदातिपरिभववचनमाकर्ण्य कोपानलजनितरक्त–लोचनयुगलेन, विपमस्फुरिताधरेण, करालभृकुटिभङ्गकुण्डलीकृतललाटपट्टेनावद्धनिरन्तरस्वेदविन्दुना, निर्दयकराभिहतधरणीपृष्ठेन, प्रलयज्वलनभास्वर रूपमाविभ्रताऽमर्पवशपरिस्खलद्वचनेन देवेन रागकेसरिणाऽऽज्ञापित परिजन→अरे त्वरितास्ताडयत प्रयाणकपटह, सज्जीकुरुत चतुरङ्ग वलम् । परिजनेनाभिहित→यदाज्ञापयति देव, ततस्तथा देवमायास्यमानमवलोक्य विपयाभिलापेणाभिहित→देव । अलमावेगेन, कियानसौ वराक सन्तोप स्थानमादरस्य? न खलु केसरी लीलादलितत्रिगण्डगलित–वरकरिनिकरो हरिण व्यापाद्यतयोद्दिश्यायस्तचित्तो भवति । देवेनाभिहित→सखे सत्यमिद, केवल युष्मन्मानुपकदर्धना कुर्वता दृढमुद्वेजितास्तेन पापेन सन्तोपेण, न खलु तमनुन्मूल्य मम मनस सुखासिका सपद्यते । मन्त्रिणाऽभिहित→देव। स्तोकमेतत्, मुच्यता सरम्भ, ततस्तद्वचनेन मनाक् स्वस्थीभूतो देव, कृतमशेप गमनोचित, स्थापित पुरत स्नेहसलिलपूर्ण प्रेमावन्धाख्य कनककलश, उद्घोपित केलिजल्पनामको जयजयशब्द, गीतानि चाटुवचनादीनि मङ्गलानि, प्रहत रतिकलहनामकमुद्दामातोद्यवृन्द, निर्वर्त्तितान्यङ्गरागभूपणादीनि समस्तकौतुकानि, प्रवृत्तो रथावरोहणार्थं देव । अत्रान्तरे स्मृतमनेन–अये। न दृष्टोऽद्यापि मया तात, अहो मे प्रमत्तता, अहो मे दुर्विनीतता, अहो मे तुच्छत्वेन स्वल्पप्रयोजनेऽपि पर्याकुलता यत्तातपादवन्दनमपि विस्मृतमिति । ततो निवृत्य चलितस्तद्दर्शनार्थं देव ।

### रागकेसरिजनकमहामोहस्य सामर्थ्यम्

मयाऽभिहित→भद्र । क पुनरस्य तात ? ततो विपाकेनाभिहित→आर्य। अतिमुग्धोऽसि, यतस्त्वमेतावदपि न जानीपे, यतोऽस्य देवस्य रागकेसरिणो वालावलादीनामपि सुप्रतीतोऽनेकाद्भुतकर्म्मा भुवनत्रयप्रकटनामाभिधानो महामोहो जनक। तथाहि–महामोहो जगत्सर्वं, भ्रामयत्येप लीलया । शक्रादयो जगन्नाथा, यस्य किङ्करता गता ॥१॥
अन्येपा लङ्घयन्तीह, शौर्यावष्टम्भतो नरा । आज्ञा न तु जगत्यत्र, महामोहस्य केचन ॥२॥
वेदान्तवादिसिद्धान्ते, परमात्मा यथा किल । चराचरस्य जगतो, व्यापकत्वेन गीयते ॥३॥
महामोहस्तथैवात्र, स्ववीर्येण जगत्त्रये । द्वेपाद्यशेपलोकाना, व्यापक समुदाहृत ॥४॥
तत एव पवर्त्तन्ते, यान्ति तत्र पुनर्लयम् । सर्वे जीवा परे पुसि, यथा वेदान्तवादिनाम् ॥५॥
महामोहात्प्रवर्त्तन्ते, तथा सर्वे मदादय । लीयन्तेऽपि च तत्रैव, परमात्मा स वर्त्तते ॥६॥
अन्यच्च–यद् ज्ञातपरमार्थोऽपि, [1]वुद्ध्वा सन्तोपज सुखम् । इन्द्रियैर्वाध्यते जन्तुर्महामोहोऽत्र कारणम् ॥७॥
अधीत्य सर्वशास्त्राणि, नरा पण्डितमानिन । विपयेपु रता सोऽय, महामोहो विजृम्भते ॥८॥
जैनेन्द्रमततत्त्वज्ञा, कपायवशवर्त्तिन । जायन्ते यन्नरा लोके, तन्महामोहशासनम् ॥९॥
अवाप्य मानुप जन्म, लव्ध्वा जैन च शासनम् । यत्तिष्ठन्ति गृहासक्ता, महामोहाऽत्र कारणम् ॥10॥
विश्रब्ध निजभर्त्तार, परित्यज्य कुलस्त्रिय । परेपु यत्प्रवर्त्तन्ते, महामोहस्य तत्फलम् ॥११॥
विलङ्घ्य [2]च महामोह, स्ववीर्येण निराकुल । काश्चिद्विडम्वयत्युच्चैर्यतिभावस्थितानपि ॥१२॥
मनुष्यलोके पाताले, तथा देवालयेष्वपि । विलसत्येप महामोहो, गन्धहस्ती [3]यदृच्छया ॥१३॥
सर्वथा मित्रभावेन, गाढ विश्रब्धचेतसाम् । कुर्वन्ति [4]वञ्चन यच्च, महामोहोऽत्र कारणम् ॥१४॥
विलङ्घ्य कुलमर्यादा, पारदार्येऽपि यन्नरा । वर्त्तन्ते विलसत्येप, महामोहमहानृप ॥१५॥
[5]यत एव [6]समुत्पन्ना, जाताश्च [7]गुणभाजनम् । प्रतिकूला गुरोरतस्य, वशे येऽस्य नराधमा ॥१६॥
अनार्याणि तथाऽन्यानि, यानि कार्याणि [8]कर्हिचित् । चौर्यादीनि विलासेन, तेपामेप प्रवर्त्तक ॥१७॥
इत्थ प्रभूतवृत्तान्त, परिपाल्य जगत्त्रयम् । वृद्धोऽहमधुना युक्त, कि ममेति विचिन्त्य च ॥१८॥
पार्श्वस्थितोऽपि शक्नोमि, वीर्येण परिरक्षितुम् । जगत्तेन स्वपुत्राय, राज्य यच्छामि साम्प्रतम् युग्मम् ॥१९॥

1 वुद्ध्या प्र । 2 (आक्रम्य) तु प्र । 3 यथेच्छया प्र । 4 वञ्चन=अमुत्राहितकृदपि प्र । 5 गुरा । 6 आत्तदीक्षा । 7 श्रुताध्ययनादिना । 8 कानिचित् प्र ।

रागकेसरिणे दत्त्वा, ततो राज्य विचक्षण । महामोहोऽधुना सोऽय, शेते निश्चिन्तता गत ॥20॥
तथापीद जगत्सर्वं, प्रभावेन महात्मन । तस्यैव वर्त्तते नून, कोऽन्य स्यादस्य पालक ? ॥२१॥
तदेषोऽद्भुतकर्त्तव्य, प्रसिद्धोऽपि जगत्त्रये । महामोहनरेन्द्रस्ते, कथ प्रष्टव्यता गत ? ॥२२॥

ततो मयाऽभिहित→भद्र । न कर्त्तव्योऽत्र भवता कोप, पथिक खल्वह, श्रुतश्च मयापि महामोह पूर्वं सामान्येन, न पुनर्विशेषतो रागकेसरिजनकतया तदधुनाऽपनीत ममाज्ञान भद्रेण, तदुत्तरवृत्तान्तमप्याख्यातुमर्हति भद्र ।

### महामोहरागकेसरिविषयाभिलाषादीना युद्धार्थ प्रस्थानम्

विपाकेनाभिहित→ततो गतो देव शीघ्र जनकपादमूल, दृष्टोऽनेन तमसज्ञकेन लम्बमानेन भ्रूयुगलेन अविद्याभिधानया प्रकम्पमानया गात्रयष्ट्या जराजीर्णकायस्तृष्णाभिधानाया वेदिकाया विपर्यासनाम्नि विष्टरे महत्युपविष्टो महामोह । तत क्षितितलविन्यस्तहस्तमस्तकेन कृत देवेन पादपतन, अभिनन्दितो महामोहेन, निषीदतश्च भूतले देवस्य दापित महामोहेनासन, उपाविष्टस्तत्र जनकसभ्रमवचनेन देव, पृष्टा शरीरकुशलवार्त्ता, निवेदितश्च प्रस्तुतव्यतिकर । ततो महामोहेनाभिहित पुत्र। ममाधुना जरच्चीवरस्येव पश्चिमो भावो वर्त्तते, ततो मदीयशरीरस्य पामापरिगतमूर्तेरिव करभस्य यद्वाह्यते तत्सार, ततो न युक्त मयि तिष्ठति भवत प्रस्थान कर्तु, तिष्ठ त्व विपुल राज्य विधानो निराकुलचित्त, अहमेव प्रस्तुतप्रयोजन साधयिष्यामीति। देवेन कर्णो पिधायाभिहित→तात। मा मैव वोच, शान्त पाप, प्रतिहतममङ्गल, अनन्तकल्पस्थायि भवतु योष्माक शरीर, न खलु युष्मदीयशरीरनिराबाधामात्रपरितोषिणि किङ्करजनेऽस्मिन्नेवमाज्ञापयितुमर्हति तात, तत्किमनेन बहुना? गच्छाम्यह, अनुजानीत यूयम् । महामोह प्राह→जात । मया तावद्गन्तव्यमेव, भवतस्तु केवलमवस्थानेऽनुज्ञा, इत्यभिधायोत्थितो महामोह । ततो विज्ञाय निर्बन्ध देवेनाभिहित–तात। यद्येव ततोऽहमपि तातपादानुचरो भविष्यामि, न प्रतिस्खलनीयस्तातेन, महामोह प्राह–जात। एव भवतु, न खलु वयमपि भवन्त मोक्तु क्षणमपि पारयाम, केवल गुरुतया प्रयोजनस्यैव मन्त्रितमस्माभिस्तदधुना सुन्दरमिद जातेन जल्पितम् । देवेनाभिहित→महाप्रसाद । ततस्तातोऽपि प्रस्थित इति ज्ञापित समस्तनरेन्द्राणा देवेन, प्रवर्त्तित नि शेष विशेषतो बलम्। तत स्वयमेव महामोहनरेन्द्रो, देवो रागकेसरी, विषयाभिलाषादय सर्वे मन्त्रिमहत्तमा सर्वबलेन सन्तोषचरटस्योपरि निग्रहेण चलिता इति वार्त्तया क्षुभितमेतत्समन्ताद्राजसचित्त नगर, समुल्लसितोऽय बहल कलकल। तदिद भद्र। अस्य नरेन्द्रस्य प्रस्थानप्रयोजनमिति । तच्चातिकुतूहलिन भवन्तमालोक्य मया निवेदित, इतरथाऽतित्वरया मम वचनमात्रोच्चारणेऽपि नावसरोऽस्ति, यतो ममाग्रानीके नियम । मयाऽभिहित–आर्य । किमत्र वक्तव्यम्? *परोपकारकरणव्यग्रा एव सत्पुरुषा भवन्ति, ते हि परे प्रिय कर्त्तुमुद्यता शिथिलयन्ति स्वप्रयोजन, कुर्वन्ति स्वभुजोपार्जितद्रव्यव्यय, विषहन्ते विविधदु खानि, न गणयन्त्याऽऽपद, ददति मस्तक, प्रक्रामन्ति प्राणान्, परप्रयोजनमेव हि ते स्वप्रयोजन मन्यन्ते।* ततश्चैवविधैर्मदीयवचनैर्मनसि परितुष्टो नामयित्वा मदभिमुखमीषदुत्तमाङ्ग व्रजाम्यहमधुना इत्यभिधाय च कृतप्रणाम। मया गतो विपाक। मया चिन्तित→साधितप्राय मयाऽधुना राजकार्य, यत स्पर्शनस्य मूलशुद्धिमुपलभ्य भवताऽऽगन्तव्यमेतावानेव मम राजादेश, तत्र यावन्तोऽनेन विपाकेन स्पर्शनादीना गुणा वर्णितास्ते सर्वे तत्र स्पर्शने घटन्ते, ममानुभवसिद्धमेतत्, तस्मादेतदुपवर्णितमानुषपञ्चकस्याद्योऽसौ भविष्यति, अतो लब्धा मया तस्य मूलशुद्धि, केवलमेन सन्तोषव्यतिकरमद्यापि नावगच्छामि। एतावद्वितर्कयामि–सदागमानुचर एवाय कश्चिद्भविष्यति, अन्यथा पूर्वापरविरुद्धमेतत्स्यात्, अथवा किमनेन? गच्छामि तावत् स्वामिपादमूल, निवेदयामि (निवेदयिष्यामि प्र) यथोपलब्धवृत्तान्त, ततो देव एवात्र यथोचित विज्ञास्यतीत्यालोच्य समागतोऽह, एतदाकर्ण्य देव प्रमाणमिति । बोधेनाभिहित→साधु प्रभाव। साधु, सुन्दरमनुष्ठित भवता, तत सहैव प्रभावेण प्रविष्टो बोध कुमारसमीप, कृतप्रणामेन च निवेदित कुमाराय समस्तोऽपि प्रभावानीतवार्त्तावृत्तान्त, परितुष्टो मनीषी, पूजित प्रभाव।

### स्पर्शनस्य सदागमानुचरसतोषाद् भय

पृष्टोऽन्यदा मनीषिणा स्पर्शन –यदुत–भद्र। कि भवत सदागमेनैव तेन भवजन्तुना सुमित्रेण सह विरह सपादित उत तत्र कश्चिदन्योऽप्यासीत्? इति स्पर्शनेनाभिहित→आर्य। आसीत्, केवलमल तत्कथया, न खल्वह भयविह्वलतया तस्य क्रूरकर्मणो नामाप्युच्चारयितु शक्नोमि, स हि सदागमस्तस्य केवल भवजन्तोरुपदेश ददाति मत्कदर्थनविषय, स तु तस्यैवानुचर क्रूरकर्मा नानायातनाभि साक्षान्मा कदर्थयति, भवजन्तु मत्तो विमुखयति, तेनैव चाह शरीरप्रासादान्निःसारितो, भवजन्तुश्च निर्वृतौ नगर्यां प्रापित. स एव तत्र कारण परम सदागमस्य केवलमुपदेशदाने व्यापार मनीषिणाऽभिहित–भद्र। कि

तस्याभिधानम्? स्पर्शन प्राह→कथितमिदमार्यस्य मया, नाह भयाकुलतया तदभिधानमुच्चारयामि, अत एव पूर्वमपि मया न युष्माक तदाख्यातम् । किञ्च→अतिपापिष्ठोऽसो, ततोऽल नामग्रहणेन, *पापिष्ठजनकथा हि क्रियमाणा पाप वर्द्धयति, यशो दूषयति, लाघवमाधत्ते, मनो विप्लावयति, धर्मबुद्धि ध्वसयतीति* । मनीपिणाऽभिहित–तथापि महत्कुतूहल तदभिधानश्रवणेऽस्माक, न चास्मदभ्यर्णे वर्त्तमानेन भवता तद्भय विधातव्य, न च नामग्रहणमात्रेण किञ्चित्पाप, न ह्यग्निरित्युक्ते मुखदाह सपद्यते, ततो विज्ञाय निर्वन्ध तरलिततार दशापि दिशोऽवलोकयता स्पर्शनेनाभिहित–आर्य । यद्येव तत सन्तोष इति तस्य दुर्नामकस्य नाम ।

## स्पर्शने मनीषिविचार

मनीपिणा चिन्तित→सम्यगुपलब्धा मूलशुद्धिरस्य स्पर्शनस्य प्रभावेण, य [यत मु] सन्तोषव्यतिकर एवेकरतत्राघटमानक आसीत् सोऽप्यधुना घटित । सम्यङ् मया पूर्वं वितर्कित यथा न सुन्दर खल्वेष स्पर्शन प्रायेणेति, यतो विपयाभिलापप्रयुक्तोऽय लोकवञ्चनप्रवण पर्यटति तदशोभन एवाय, तथापि प्रतिपन्नोऽय मया मित्रतया, दर्शितो वहिश्छायया स्नेहभाव , क्रीडितमेकत्र वहुकाल, तस्मान्न युक्तोऽकाण्ड एव परित्यक्तु, केवल विज्ञातस्वरूपेणास्य मयाऽधुना सुतरा न कर्त्तव्यो विश्रम्भो, नाचरितव्यमस्यानुकूल, न समर्पणीयमात्मस्वरूप, न निवेदनीय गुह्य, नापि दर्शनीयो वहिर्भाव , विषमप्रकृतिरेष वर्त्तते, ततोऽनेन सह यापनया वर्त्तितव्य, पूर्वस्थित्येव पर्यटितव्य, सर्वत्र सहितेन कर्त्तव्य चात्मीयप्रयोजनबोधकमस्य वचन, केवलमभिष्वङ्गोऽस्योपरि न कार्यो मया यावदस्य सर्वथा परित्यागावसरो भवति, एव वर्त्तमानस्य मे न भविष्यत्येष वाधक इति स्थापितो मनीपिणा स्वचेतसि सिद्धान्त । तत पूर्वस्थित्येव विलसन्ति ते स्पर्शनमनीपिवाला नानास्थानेपु, व्रजन्ति दिनानि ।

## स्पर्शनयोगशक्तेर्वाले प्रभाव मनीपिण सावधानी

अन्यदा स्पर्शनेन कृतो जल्पप्रस्तावोऽभिहित च तेन→अरे। किमत्र लोके सारम्? कि वा सर्वे जन्तवोऽभिलषन्ति? वालेनाभिहित→वयस्य। किमत्र ज्ञातव्यम्? सुप्रसिद्धमिदम्। स्पर्शन प्राह→कथय कि तत्? वालो जगाद→वयस्य। सुखम्। स्पर्शन प्राह→तत् किमिति तदेव सदा न सेव्यते? वालेनाभिहित→कस्तस्य सेवनोपाय ? स्पर्शनेनोक्त→अहम्। वालो जगाद–कथम्? स्पर्शन प्राह→अस्ति मे योगशक्ति, तयाऽह प्राणिना शरीरमनुप्रविश्य वहिरन्तश्च क्वचिल्लीनस्तिष्ठामि, ततश्च ते यदि भक्तिपुरसर मामेव ध्यायन्ति, कोमलललितस्पर्शनसवन्ध कुर्वन्ति, ततो निरुपम सुख लभन्ते, तेनाह सुखसेवनस्योपाय । मनीपिणा चिन्तित→अये। रचितोऽनेनावयोर्वञ्चनप्रपञ्च । वालेनाभिहित→वयस्य । तत्किमियन्त काल न निवेदित[नावेदित मु]मिदमस्माकम्? अहो वञ्चिता वयमधन्या सत्यप्येवविधे सुखोपाये तदनासेवनेन । अहो ते गम्भीरता यदेवविधामपि योगशक्तिमात्मनो न प्रकटयसि, तदिदानीमपि कुरु प्रसाद, दर्शय कुतूहल, व्यापारय योगशक्ति, भवावयो सुखसेवनहेतुरिति। तत कि क्रियतामेतदिति दृष्टिविकारेणेव दर्शयता साकूतेन निरीक्षित मनीपिणो वदन स्पर्शनेन, तत पश्यामि कि तावत् करोतीति सचिन्त्य मनीपिणाऽभिहित→वयस्य। क्रियता वालभापित, कोऽत्र विरोध ? तत स्पर्शनेन विरचित पद्मासन, स्थिरीकृत काय , परित्यक्तो वहिर्विक्षेप , निश्चलीकृता दृष्टि , समर्पिता नासिकाऽग्रे, निवद्ध हृत्पोण्डरीके मानस, धृता धारणा, सजाता तत्प्रत्ययैकतानता, समापूरित ध्यान, निरुद्धा करणवृत्तय , आविर्भूत स्वरूपशून्य इवार्थनिर्भास , सजात समाधि , विहितोऽन्तर्धानहेतु सयम , कृतमन्तर्द्धान, अनुप्रविष्टो मनीपिवालयो शरीर, अधिष्ठित स्वाभिमत[हित मु] प्रदेश , विस्मितो मनीपिवालो, प्रवृत्ता द्वयोरपि कोमलस्पर्शेच्छा । ततो वालो मृदूनि शयनानि, सुखान्यासनानि, कोमलानि वसनानि, अस्थिमासत्वग्रोमसुखदायीनि सवाहनानि, ललितललनानामनवरतसुरतानि, ऋतु (त्व) विपर्यस्तवीर्याणि सुखस्पर्शविलेपनानि, अन्यानि चोद्वर्त्तनस्नानादीनि स्पर्शनप्रियाणि गृद्धो मूर्च्छित सततमासेवते । तच्च शयनादिक भस्मकव्याधिरिव भक्तपान स्पर्शन समस्तमुपभुड्क्ते। वालस्य तु गार्ध्यव्याधिविह्वलीभूतचित्तस्य सन्तोषस्वरूपस्वास्थ्यविकलतया पामाकण्डूयनमिव परमार्थतस्तद्दु–खकारणमेव, तथाऽप्यसौ विपर्यासवशेन तदुपभोगे सति चिन्तयति→अहो मे सुख, अहो मे परमानन्द । ततो मिथ्याभावनया परमसुखसन्दर्भनिर्भर किलाहमिति वृथा निमीलिताक्षोऽनाख्येय रसान्तरमवगाहते । मनीषी पुनर्मृदुस्पर्शेच्छाया प्रवर्त्तमानायामेव भावयति→अये। स्पर्शनजनितोऽय मम विकारो, न स्वाभाविक , परमरिपुश्चाय मम वर्त्तते, सुनिर्णीतमिद मया, तत कथमय सुखहेतुर्भविष्यति? इति मत्वा तदनुकूल न किञ्चिदाचरति । अथ कथञ्चित्प्रतिपन्नोऽय मित्रतयाऽनुवर्त्तनीयस्तावदितिभावनया कालयापना कुर्वाणस्तदनुकूलमपि किञ्चिदाचरति तथापि तस्य लोल्यरोगविकलतया सन्तोषामृतस्वस्थीभूतमानसस्य रोगरहितशरीरस्येव

सुपथ्यान्न तच्छयनादिकमुपभुज्यमान सुखमेवोत्पादयति, तथापि नासौ तत्राभिष्वङ्गं विधत्ते, ततो न भवत्यागामिनोऽपि दुखस्याऽऽबन्ध ।

### बालस्य स्पर्शनकिङ्करता

अन्यदा प्रकटीभूत स्पर्शन। अभिहितोऽनेन बाल→अयि वयस्य! मदीयपरिश्रमस्यास्ति किञ्चित्फलम्? सपन्नस्ते कश्चिदुपकार ? बाल प्राह सखे! अनुगृहीतोऽस्मि, दर्शितो ममाचिन्त्याह्लादसपादनेन भवता साक्षात्स्वर्ग, अथवा किमत्राश्चर्यम्? परार्थमेव निर्मितस्त्वमसि विधात्रा–

तथाहि→परार्थमेव जायन्ते, लोके नून भवादृशा । मादृशाना तु संभूतिस्त्वत्प्रसादेन सार्थिका ॥१॥
इद हि तेषा सौजन्यं, यत्स्वभावेन सर्वदा । परेषा सुखहेतुत्व, प्रपद्यन्ते नरोत्तमा· ॥२॥

स्पर्शनेन चिन्तित→अये! सपन्नस्तावदेष मे निर्व्यभिचार किङ्कर, प्रतिपद्यते मयाऽऽदिष्टमेष कृष्ण श्वेत, श्वेत कृष्णमिति निर्विचारम् । एव विचिन्त्य स्पर्शनेनाभिहितं→वयस्य! इयतैव न प्रयोजन, चरितार्थोऽहमिदानी भवदुपकारसपत्त्येति । ततो मनीषिसमीपमुपगम्याभिहितमनेन→सखे! कि सार्थक भवतोऽर्थसपादनेन मदीय प्रयास उत नेति ? मनीषिणोक्त–भद्र! किमत्रोच्यते, अनाख्येयस्तावकोऽतिशय । स्पर्शनेन चिन्तित→'अये! साभिप्रायकमेतद्, दुष्ट खल्वेष मनीषी न शक्यते मादृशै रञ्जयितु, लक्षितोऽहमनेन स्वरूपत प्रायेण, तस्मात्सलज्ज एव तावदास्ता नात्र बहुविकत्थन श्रेयस्करम्' इति विचिन्त्य धूर्त्ततया कृता स्पर्शनेन [1]काकली, न दर्शितो मुखविकारोऽपि, स्थितो मौनेनेति ।

### अकुशलमालाशुभसुन्दर्योरभिप्राय

इतश्च बालेनापि स्वमातुरकुशलमालाया कथित समस्तोऽपि रभसेन यो [2]योगदीपनशक्तिपुरसर सुखसंपादनसामर्थ्यलक्षण स्पर्शनव्यतिकर । अकुशलमालोवाच→जात! सूचितमिदमादावेव मया यथा सुन्दरस्तवानेन वरमित्रेण सार्द्धं सबन्ध, हेतु सुखपरम्पराया । किञ्च–अस्ति ममापीदृशी योगशक्तिरिति दर्शयिष्याम्यहमपि जातस्य कुतूहलम् । बालस्तूवाच→यद्येव ततो वहुतरमम्वाया प्रसादेनास्माभिरद्यापि द्रष्टव्यम् । अकुशलमालोवाच→तत्कथनीय भवता यदा प्रयुज्यते योगशक्तिरिति। इतश्च मनीषिणाऽपि स्वमातु शुभसुन्दर्या निवेदित सर्वोऽपि [3]स्पर्शनवृत्तान्त । तयाऽभिहित→वत्स! न चारुस्तवानेन पापमित्रेण (स्पर्शनेन प्र) सह ससर्ग, कारणमेष दुखपद्धते । मनीषिणाऽभिहित→सत्यमेतत्, केवल न कर्त्तव्यमत्र भयमम्बया, लक्षितो मयाऽय स्वरूपेण, नाहमस्य यत्नवतोऽपि वञ्चनागोचर, केवलमस्य परित्यागकाल प्रतिपालयामि, यत प्रतिपन्नोऽय मया मित्रतया नाकाण्ड एव हातु युक्त । शुभसुन्दर्युवाच→जात ! सुन्दरमिदमनुष्ठित भवता, अहो ते लोकज्ञता, अहो ते प्रतिपन्नवात्सल्य, अहो ते नीतिपरता, अहो ते गम्भीरता, अहो ते स्थैर्यातिरेक ।

तथाहि–नाकाण्ड एव मुञ्चन्ति, सदोषमपि सज्जना । प्रतिपन्नं गृहस्थायी, तत्रोदाहरण जिन ॥१॥
प्रतिपन्नमकाले तु, सदोषमपि यस्त्यजेत् । स निन्द्य स्यात्सता मध्ये, न चासौ स्वार्थसाधक ॥२॥
यस्तु मूढतया काले, प्राप्तेऽपि न परित्यजेत् । सदोष लभते तस्मात्, स्वक्षय नात्र सशय ॥३॥
हेयवुद्ध्या गृहीतेऽपि, ततो वस्तुनि बुद्धिमान् । तत्त्यागावसरापेक्षी, प्रशसा लब्धुमर्हति ॥४॥

### स्पर्शनासक्तबालस्याप्रज्ञापनीयता

कर्मविलासराजस्तु महादेवीभ्या सकाशात्त कुमारव्यतिकरमाकर्ण्य परितुष्टो मनीषिणो रुष्टो बालस्य चित्तमध्ये । बालेनापि तत प्रभृति गाढतर कोमलशयनसुरताद्यासेवनानि स्पर्शनप्रियाणि दिवानिशमाचरता परित्यक्तो राजकुमारोचित शेषव्यापार, परिहृत गुरुदेवपादवन्दन, विमुक्त कलाग्रहण, शिथिलीकृता लज्जा, अङ्गीकृत पशुधर्म । ततोऽसौ न गणयति लोकवचनीयता, न रक्षति कुलकलङ्क, न जानीते स्वस्योपहास्यता, नोपेक्षते कुशलपक्ष, न गृह्णाति सदुपदेशान्, केवलं यत्र कुत्रचित् नारीसङ्गमासनमन्यद्वा किञ्चित्कोमलमुपलभते तत्र तत्राविचार्य तत्स्वरूप लौल्यातिरेकेण प्रवर्त्तत एव । ततो मनीषी संजातकरुणस्त शिक्षयति, स्पर्शनस्य मूलशुद्धिमाचष्टे, वञ्चकोऽयमिति दीपयति, 'भ्रात! नास्य विश्वसनीय, परमरिपुरेष स्पर्शन' इति त बाल पुन पुनश्चोदयति । बाल प्राह→मनीषिन् । अलमनेनादृष्टार्थेन प्रलापेन, य एष मे वरवयस्योऽनन्तागाधसुखसागरावगाहने हेतु स एव ते परमरिपुरिति कैषा भाषा ? मनीषिणा चिन्तित→मूढ खल्वेवैष न शक्यते निवारयितु, अतोऽलमेतन्निवारणेन,

1 =सूक्ष्म शब्द । 2 योगशक्तिदीपनपु प्र । 3 =व्यतिकर प्र ।

स्वरक्षणे मया यत्नो विधेय ।
तथाहि→अकार्यवारणोद्युक्तो, मूढे य परिखिद्यते । वाग्विस्तरो वृथा तस्य, भस्मन्याज्याहुतिर्यथा ॥१॥
*नोपदेशशतेनापि, मूढोऽकार्यान्निवर्त्त्यते* । शीतांशुग्रसनात्केन, राहुर्वाक्यैर्निवारित ? ॥२॥
अकार्ये दुर्विनीतेषु, प्रवृत्तेषु तत सदा । न किञ्चिदुपदेष्टव्य, सता कार्याऽवधीरणा ॥३॥
इत्यालोच्य स्वय चित्ते, हित्वा बालस्य शिक्षणम् । स्वकार्यकरणोद्युक्तो, मनीषी मौनमाश्रित ॥४॥

## सामान्याया मध्यमबुद्धये मध्यस्थताऽऽदेश

इतश्च तस्यैव कर्मविलासस्य राज्ञोऽस्ति सामान्यरूपा नाम देवी । तस्याश्चाभीष्टतमोऽस्ति मध्यमबुद्धिर्नाम दारको, वल्लभतमो मनीषिबालयो, क्रीडितस्ताभ्या सह भूयास कालं, स च प्रयोजनवशाद्राजादेशेनैव देशान्तर गत आसीत्, (त प्र) इदानीमागत, दृष्टौ मनीषिबालौ सह स्पर्शनेन, आलिङ्गितस्ताभ्या स्पर्शनेन च । तत सकौतुकेन मध्यमबुद्धिना कर्णाभ्यर्णे निधाय वदन पृष्टो बाल→क एष इति ? निवेदितो बालेनास्य यथा स्पर्शननामायमचिन्त्यप्रभावोऽस्मत्सहचर इति, मध्यमबुद्धिरुवाच→कथम्? तत कथितो बालेन सर्वोऽपि व्यतिकर, सजातो मध्यमबुद्धेरपि स्पर्शनस्योपरि स्नेहभाव । बालेनाभिहित→भद्र स्पर्शन। दर्शयास्य स्वकीय माहात्म्यम् । स्पर्शन प्राह→एष दर्शयामि, तत प्रयुक्ता योगशक्ति, कृतमन्तर्द्धान, अधिष्ठित मध्यमबुद्धे शरीर, विस्मितो मध्यमबुद्धि, प्रवृत्ता कोमलस्पर्शेच्छा, उपभुक्तानि ललितशयनसुरतादीनि, सजातश्चित्ताह्लाद, प्रीणितो मध्यमबुद्धि, प्रकटीभूत स्पर्शन, पृष्ट स्वप्रयाससाफल्यम्, अनुगृहीतोऽह भवतेति निवेदित सरभसेन मध्यमबुद्धिना । तत पात्रीभूतोऽयमपि न दूरयायी वर्त्तत इति विचिन्तित स्पर्शनेन । मनीषिणा चिन्तित→वशीकृतप्रायोऽयमपि मध्यमबुद्धिरनेन पापेन स्पर्शनेन, अतो यद्युपदेश गृहाति तत शिक्षयाम्येन, मा भूदस्य मुग्धतया वराकस्य वञ्चनमिति । ततो रहसि मध्यमबुद्धिरभिहितो मनीषिणा→भद्र। न भद्रकोऽय स्पर्शनो, विषयाभिलाषप्रयुक्तोऽय लोकाना वञ्चक पर्यटति, मध्यमबुद्धिरुवाच–कथम्? तत कथिता मनीषिणा बोधप्रभावोपलब्धा समस्ताऽपि तस्य स्पर्शनस्य मूलशुद्धि । मध्यमबुद्धिना चिन्तित–स्वानुभवसिद्धा मम तावदस्य स्पर्शनस्य सबन्धिनी वत्सलता, अचिन्त्यप्रभावता सुखहेतुता च, अयमपि च मनीषी नायुक्तभाषी, तन्न जानीम किमत्र तत्त्वम् ? कि वा वयमेवस्थिते कुर्म इति ? अथवा किमनेन चिन्तितेन ? तावदम्बा पृच्छामि, तदुपदिष्टमाचरिष्यामीति विचिन्त्य गत सामान्यरूपाया समीप, कृत पादपतन, अभिनन्दितस्तया, निविष्ट क्षितितले, निवेदितो व्यतिकर । सामान्यरूपयोक्तम्–वत्स। तावत्त्वयाऽधुना स्पर्शनमनीषिणोर्द्वयोरपि वचनमनुवर्त्तयतोभयाऽविरोधेन मध्यस्थतयैव स्थातु युक्त, कालान्तरे पुनर्य एव बलवत्तर पक्ष स्यात् स एवाश्रयणीय ।
तथाहि–सशयापन्नचित्तेन, भिन्ने कार्यद्वये सता । कार्य कालविलम्बोऽत्र, दृष्टान्तो मिथुनद्वयम् ॥१॥

## कालविलम्बे मिथुनद्वयकथा–मुग्धाऽकुटिलयो क्रीडा

मध्यमबुद्धिरुवाच–अम्ब। कि तन्मिथुनद्वयम्? सामान्यरूपयाक्त–पुत्र। आकर्णय→अस्ति तथाविध नाम नगर, तत्र ऋजुर्नाम राजा, तस्य प्रगुणा नाम महादेवी, तयोर्मकरध्वजाकारो मुग्धो नाम तनय, तस्य च रतिसन्निभा अकुटिला नाम भार्या, ततस्तयोर्मुग्धाऽकुटिलयोरन्योऽन्यबद्धानुरागयोर्विषयसुखमनुभवतोर्व्रजति काल । अन्यदा वसन्तसमये उपरितनप्रासादभूमिकावासभवने व्यवस्थित प्रभाते उत्थितो मुग्धकुमारो, मनोहरविविधविकसितकुसुमवनराजिराजित गृहोपवनमुपलभ्य सजातक्रीडाभिलाषो भार्यां प्रत्युवाच→देवि । अतिरमणीयेयमुपवनश्री, तदुत्तिष्ठ गच्छाव कुसुमोच्चयनिमित्त, आनयाव एनम्। अकुटिलयाऽभिहित→यदाज्ञापयत्यार्यपुत्र, ततो गृहीत्वा मणिखचिते कनकसूर्पिके गते गृहोपवन, प्रारब्ध कुसुमोच्चय। मुग्ध प्राह→देवि। पश्यावस्तावत् क कनकसूर्पिका झटिति पूरयति? व्रज त्वमन्यस्या दिशि अहमन्यस्या व्रजामीति, अकुटिलयाऽभिहित→एवं भवतु, गतो कुसुमोच्चय कुर्वाणौ परस्पर दर्शनपथातीतयोर्गहनान्तरयो ।

## कालज्ञविचक्षणाभ्या मुग्धाऽकुटिलरूपग्रहणम्

अत्रान्तरे कथञ्चित्त प्रदेशमायात व्यन्तरदेवमिथुनकम् । कालज्ञो देवो विचक्षणा देवी, तेन च गगनतले विचरताऽवलोकित तन्मानुषमिथुन, ततोऽचिन्त्यतया कर्म्मपरिणतेरतिसुन्दरतया तस्य मानुषमिथुनस्याऽपर्यालोचितकारितया मन्मथस्य, मदनजननतया मधुमासस्यातिरमणीयतया प्रदेशस्य, केलिबहलतया व्यन्तरभावस्यातिचपलतयेन्द्रियाणा, दुर्निवारतया विषयाभिलाषस्यातिचटुलचारितया मनोवृत्तेस्तथाभवितव्यतया च तस्य वस्तुन कालज्ञस्याभूदकुटिलाया तीव्रोऽनुराग तथैव च मुग्धस्योपरि विचक्षणाया । तत

किलैना वञ्चयामीतिबुद्ध्या कालज्ञेनाभिहिता विचक्षणा→देवि। व्रज त्वमग्रत तावद्यावदहमितो राजगृहोपवनाद्देवार्चननिमित्त कतिचित्कुसुमान्यादायागच्छामि । सा तु मुग्धहृदयतया स्थिता मौनेन, गतोऽकुटिलाभिमुख कालज्ञोऽवतीर्णो घनतरगहने अदर्शनीभूतो विचक्षणाया । चिन्तितमनेन—अये । कि पुन कारणमाश्रित्येद मिथुन परस्परतो दवीयोदेशवर्ति वर्त्तते, तत प्रयुक्तमनेन विभङ्गज्ञान, लक्षित तयोर्दूरीभवनकारणम् । ततोऽयमेवात्रोपाय इति विचिन्त्य कृतमनेन देवशक्त्याऽऽत्मनो वैक्रिय मुग्धरूप, निर्वर्त्तिता कनकसूर्पिका, भृता कुसुमाना, गतोऽकुटिलासमीप, ससभ्रममाह च→जिताऽसि प्रिये। जिताऽसि, तत कथमार्यपुत्रो झटित्येवायातो जिताऽहमपि (पीति) विलक्षीभूता मनागकुटिला । कालज्ञेनाभिहित→प्रियेऽल विषादेन, स्वल्पमिद कारण, केवल निर्वर्त्तितोऽधुना कुसुमोच्चयो, व्रजावोऽमुष्मिन्नुपवनविभूषणे कदलीलतागृहे । प्रतिपन्नमनया, ततो गत्वा कृतमाभ्या तत्र पल्लवशयनीयम् । इतश्च विचक्षणया चिन्तितं→अये। गतस्तावदेष कालज्ञ, ततो यावदय नागच्छति यावच्चेय नारी दूरे वर्त्तते तावदवतीर्य मानयाम्येन रतिवियुक्तमकरकेतनाकार तरुण, करोम्यात्मनो जन्मन साफल्य, लक्षितश्चानयापि विभङ्गज्ञानेनैव तयोर्दूरीभवनहेतु, ततो विधायाऽकुटिलारूप कुसुमभृतकनकसूर्पिका गता मुग्धसमीपम्, आह च→जितोऽसि, आर्यपुत्र। जितोऽसि, तत ससभ्रम ता निरीक्ष्य मुग्ध प्राह—प्रिये। सुष्ठु जित, किमधुना क्रियताम्? विचक्षणयोक्त→यदह वदामि, मुग्ध प्राह→कि तत्? विचक्षणाऽऽह→व्रजामो लताभवन, मानयामो विशेषत सदुपवनश्रिय, प्रतिपन्नमनेन ।

## ऋज्वादीना मिथुनद्वयदर्शने आनन्द

ततो गतौ [गत्वा मु] तौ विचक्षणामुग्धौ तत्रैव कदलीलतागृहके, दृष्ट तन्मिथुन, निरीक्षित विस्मिताभ्या परस्पराभिमुख मिथुनाभ्या, न दृष्टस्तिलतुषत्रिभागमात्रोऽपि स्वेतरयोर्विशेष । मुग्धेन चिन्तित→अये। भगवतीना वनदेवतानां प्रसादेन द्विगुणोऽह सपन्नो देवी च, तदिद महदभ्युदयकारण, त निवेदयामीद ताताय, ततो निवेद्य स्वाभिप्रायमितरेषा गच्छामस्तावत्तातसमीप इत्यभिधायोत्थितो मुग्ध । चलित चतुष्टयमपि, प्रविष्टं ऋजुराजाऽऽस्थाने, तद्विलोक्य विस्मितो राजा महादेवी परिकरश्च, किमेतदिति पृष्टो मुग्ध । स प्राह→वनदेवताप्रसाद ऋजुराज प्राह→कथम् ? तत कथितो मुग्धेन व्यतिकर । ऋजुना चिन्तित→अहो मे धन्यता, अहो मे देवतानुग्रह , ततो हर्षातिरेकेण समादिष्टस्तेनाऽकालमहोत्सवो नगरे । दापितानि महादानानि, विधापितानि नगरदेवतापूजनानि । स्वय च राजा राजमण्डलमध्यस्थ प्राह—

एकेन सुतेन सुतद्वय, वध्वा जातमथो वधूद्वयम् । खादत पिबताथ सज्जना। गायत वादयताथ नृत्यत ॥१॥

तत प्रगुणापि महादेवी एतदेव नरेन्द्रोक्तमनुवदन्ती वादितानन्दमर्द्दलसन्दोहबधिरितदिगन्ता विहितोर्ध्वभुजा नर्त्तितु प्रवृत्ता, द्विगुणाह सपन्नेति गता हर्षमकुटिला, प्रनृत्ता शेषान्तपुरिका, प्रमुदित नगर, वृत्तो बृहता विमर्द्देन महानन्द इति ।

## कालज्ञविचक्षणयोश्चिन्तनम्

केलिप्रियतया हृष्ट कालज्ञ । केवल चिन्तितमनेन→का पुनरेषा द्वितीया योषित् सजातेति। उपयुक्तो ज्ञानेन, ज्ञातमनेन→सैवैषा मदीयभार्या विचक्षणेति । तत सजात क्रोध, चिन्तितमनेन, मारयाम्येन दुराचार पुरुष, एषा पुनरमरतया न शक्यते मारयितु, तथाप्येव पीडयामि यथा न पुन परपुरुषगन्धमपि प्रार्थयते । एव कृतनिश्चयस्याप्यस्य कालज्ञस्य तथाभवितव्यतया पवृत्ताऽर्थपर्यालोचना, स्फुरित चित्ते→यथा न सम्यग् चिन्तितमिद मया, न पीडनीया तावद्विचक्षणा, यतोऽहमपि न शुद्धाचारो, ममापि समानोऽय दोष, मारणमपि मुग्धस्य न युक्त, यतो मारितेऽस्मिन्नन्यथाभाव विज्ञाय न भजते मामकुटिला, विरज्यते सुतरा विचक्षणा, तत्किमकुटिला गृहीत्वाऽदृष्टस्वकलत्रधर्षण इतोऽपक्रमामि ? एतदपि नास्ति, यतोऽकाण्डप्रस्थाने न स्वाभाविकोऽयमिति लक्षितविकारा कदाचिदकुटिला मा न भजते, तया रहितस्य पुनर्गमनमनर्थकमेव, तस्मादीर्ष्याधर्म्मं परित्यज्य कालविलम्ब एवात्र श्रेयानिति । विचक्षणयापि चिन्तितं→अये । स एवाय मदीय भर्त्ता कालज्ञोऽनेन रूपेण स्थित, कुतोऽन्यस्यात्र सभव इति । तत कथमस्य पुरत परपुरुषेण सह तिष्ठामीति सजातलज्जा अयमन्या भजत इति समुत्पन्नेर्ष्या दु शकमेव स्थिते स्थातुमित्याविर्भूताकुलभावा गताया अपि न काचिदर्थसिद्धिरिति स्थानेनात्मान तोषयन्ती न चान्या गतिरस्तीति निरालम्बा । साऽपि यद्भविष्यत्तया कालविलम्बमेवाश्रित्य तत्रैव स्थिता । तत्प्रभृत्यदर्शितवैक्रियौ परित्यक्तेर्ष्याधर्मो देवमायया समस्तमानुषकर्त्तव्यान्याचरन्तौ प्रत्येक द्वय भजमानौ स्थितौ विचक्षणाकालज्ञौ प्रभूतकालम् ।

## प्रतिबोधकाचार्यस्योपदेश

अन्यदा मोहविलयाभिधाने कानने सातिशयज्ञानादिरत्नाकरो बहुशिष्यपरिकर समागत प्रतिबोधको नाम आचार्य,

निवेदितो नरेन्द्रायोद्यानपालेन, तत सपौरजनो निर्गतस्तद्वन्दनार्थं राजा, भगवतोऽपि उपवेशनार्थं देवैर्विरचित कनककमल, दृष्टस्तत्रोपविष्टस्तेभ्यो धर्ममाचक्षाणो भगवान्नरपतिना इलातलविलुलितमौलिना, वन्दित तत्पादारविन्द शेषमुनयश्च, अभिनन्दिता कर्मविटपिपाटनपटिष्ठनिष्ठुरकुठारायमाणेन धर्मलाभाशीर्वादेन भगवता शेषयतिभिश्च, उपविष्टा भूतले, कालज्ञादयोऽपि प्रयुज्य समस्त वन्दनादिविनय यथास्थानमुपविष्टा । प्रस्तुता भगवता विशेषतो धर्मदेशना, दर्शिता भवनिर्गुणता, वर्णिता कर्मवन्धहेतव, निन्दित ससारचारकावास, श्लाघितो मोक्षमार्ग, ख्यापित शिवसुखातिशय, कथिता विषयाभिष्वङ्गस्य भवभ्रमण–हेतुशिवसुखप्रतिरोधिका दुरन्तता । ततस्तद्भगवद्वचनामृतमाकर्ण्य विचक्षणाकालज्ञयोर्विदलित मोहजालमाविर्भूत सम्यग्दर्शनपरिणाम, समुज्ज्वलित कर्मेन्धनदहनप्रवण स्वदुश्चरितपश्चात्तापानल ।

### विचक्षणाकालज्ञयो पश्चात्ताप

अत्रान्तरे तयो शरीराभ्या विनिर्गतै रक्तकृष्णै परमाणुभिर्घटितशरीरा, वीभत्सा दर्शनेन, भीषणा स्वरूपेण, उद्वेगहेतुर्विवेकिना एका स्त्री भगवत प्रताप सोढुमक्षमा निर्गत्य पर्षद पश्चान्मुखीस्थिता दूरवर्त्तिनि भूभागे स्थिता, पश्चात्तापार्द्रीकृतहृदयतया गलदश्रुसलिलौ समकमेव विचक्षणाकालज्ञौ पतितौ भगवच्चरणयो, कालज्ञेनाभिहित→भगवन्। अधमाधमोऽह येन मया विप्रतारिता स्वभार्या, आचरित पारदार्यं, [1]द्रुग्ध सरलहृदयो मुग्धो, जनितो नरेन्द्रमहादेव्यादीना व्यलीकसुतव्यामोह, वञ्चितोऽय परमार्थेनात्मा, तस्य ममैवविधपापकर्मण कथ शुद्धिर्भविष्यतीति ? विचक्षणयोक्त→ममापि कथम्? यत समाचरित पापिष्ठया मयाऽपीद सर्वं, कि वा निवेद्यते? दिव्यज्ञानस्य प्रत्यक्षमेवेद समस्त भगवत । भगवानाह–भद्रौ। न कर्त्तव्यो युवाभ्या विषादो, न भद्रयोर्दोषोऽय, निर्मल भवतो स्वरूपम् । तावाहतु कस्य पुनर्दोषोऽयम्? भगवानाह→येय युष्मच्छरीरान्निर्गत्य दूरे स्थिता नारी तस्या । तावाहतु→भगवन् । किन्नामिकेयम्?

### भोगतृष्णास्वरूपम्

भगवताऽभिहित→भद्रौ। भोगतृष्णेयमभिधीयते । विचक्षणाकालज्ञाभ्यामभिहित→भगवन्। कथ पुनरियमेवविधदोषहेतु ? भगवताऽभिहित→भद्रौ। श्रूयताम् →

रजनीव तमिस्रस्य, भोगतृष्णैव सर्वदा । रागादिदोषवृन्दस्य, सर्वस्यैषा प्रवर्त्तिका ॥१॥
येषामेषा भवेद्देहे, प्राणिना पापचेष्टिता । तेषामकार्येषु मति, प्रसभ सप्रवर्त्तते ॥२॥
तृणकाष्ठैर्यथा वह्निर्जलपूरैर्यथोदधि । तथा न तृप्यत्येषाऽपि, भोगैरासेवितैरपि ॥३॥
यो मूढ शमयत्येना, किल शब्दादिभोगत । जले निशीथिनीनाथ, स हस्तेन जिघृक्षति ॥४॥
मोहादेना प्रिया कृत्वा, भोगतृष्णा नराधमा । ससारसागरे घोरे, पर्यटन्ति निरन्तके ॥५॥
सदोषेयमिति ज्ञात्वा, ये पुन पुरुषोत्तमा । स्वदेहगेहान्निःसार्य, चित्तद्वार निरुन्धते ॥६॥
ते सर्वोपद्रवैर्मुक्ता, प्रलीनाशेषकल्मषा । आत्मान निर्मलीकृत्य, प्रयान्ति परम पदम् [युग्मम्] ॥७॥
येऽनया रहिता सन्तस्ते वन्द्या भुवनत्रये । वशे गता पुनर्येऽस्या, साधुभिस्ते विगर्हिता ॥८॥
अनुकूला भवन्त्यस्या, ये मोहादधमा नरा । तेषामेषा प्रकृत्यैव, दु खसागरदायिका ॥९॥
प्रतिकूला भवन्त्यस्या, ये पुन पुरुषोत्तमा । तेषामेषा प्रकृत्यैव, सुखसन्दोहकारिका ॥10॥
तावन्मोक्ष नरो द्वेष्टि, ससार बहु मन्यते । पापिष्ठा भोगतृष्णेय, यावच्चित्ते विवर्त्तते ॥११॥
यदा पुनर्विलीयेत, कथञ्चित्पुण्यकर्मणाम् । एषा भवस्तदा सर्वो, धूलिरूप प्रकाशते ॥१२॥
तावच्चाशुचिपुञ्जेषु, योषिदङ्गेषु मूढधी । कुन्देन्दीवरचन्द्रादिकल्पना प्रतिपद्यते ॥१३॥
यावदेषा शरीरस्था, वर्त्तते भोगतृष्णिका । तदभावे मनस्तेषु, न स्वप्नेऽपि प्रवर्त्तते [युग्मम्] ॥१४॥
समाने पुरुषत्वेऽपि, परकिङ्करता गता । निन्द्य यत्कर्म कुर्वन्ति, भोगतृष्णाऽत्र कारणम् ॥१५॥
येषा पुनरिय देहान्निर्गता सुमहात्मनाम् । निर्द्धना अपि ते धीरा, शक्रादेरपि नायका ॥१६॥
किञ्चित्तामससमिश्रै, राजसै परमाणुभि । निर्वर्त्तितशरीरेय, गीता तन्त्रान्तरेष्वपि ॥१७॥
तदेषा भवतो पापा, पापकर्मप्रवर्त्तिका । अतोऽस्या एव दोषोऽय, विद्यते नैव भद्रयो ॥१८॥

1 वञ्चितौ सरलहृदयौ अकुटिलामुग्धौ प्र ।

स्वरूपेण सदा भद्रौ, निर्मलौ परमार्थत । एषैव सर्वदोषाणा, कारणत्वेन सस्थिता ॥१९॥
इह [1]स्थातुमशक्तत्वात्, एषा दूरस्थिताऽधुना । भवन्तौ मत्समीपाच्च, निर्गच्छन्तौ प्रतीक्षते ॥20॥

## भोगतृष्णाप्रतिविधानोपाय

विचक्षणाकालज्ञाभ्यामभिहित→भगवन्! कदा पुनरस्या सकाशादावयोर्मोक्ष ? भगवानाह→भद्रौ! नेह भवे, अद्यापि भवद्भ्यामिय सर्वथा त्यक्तु न शक्या, केवलमस्या निर्द्दलने महामुद्गरायमाण प्रादुर्भूत भवतो सम्यग्दर्शन, तदुद्दीपनीय पुन पुन सुगुरुसनिकर्षेण[2], नाचरणीयमस्या भोगतृष्णाया अनुकूल, लक्षयितव्यो मनसि विवर्त्तमानोऽस्या सम्बन्धी विकार, निराकरणीयोऽसौ प्रतिपक्षभावनया, यत प्रतिक्षण तनुता गच्छन्ती न भविष्यतीय शरीरेऽपि वर्त्तमाना भवतोर्बाधिका, भवान्तरे पुनरस्या सर्वथा त्यागसमर्थौ भविष्यतो भवन्ताविति । तदाकर्ण्य ततो महाप्रसाद इति वदन्तौ विचक्षणाकालज्ञौ पतितौ भगवच्चरणयो । ततोऽमु व्यतिकरमालोक्य श्रुत्वा च भगवद्वचन ऋजुप्रगुणामुग्धाकुटिलानामपि प्रादुर्भूत पश्चात्तापेन सह विशुद्धाध्यवसाय । ऋजुप्रगुणाभ्या चिन्तित→अहो अलीकसुतवधूद्विगुणितव्यमोहेन निरर्थक विडम्बित, विहिता सुत–वध्वोरुन्मार्गप्रवृत्तिरावाभ्यामिति । मुग्धेन चिन्तित→अहो कृत मया परस्त्रीगमनेन कुलस्य दूषणम् । अकुटिलया चिन्तित→बत सजात मे शीलखण्डनमिति । ततश्चतुर्णामपि स्थितमेतच्चित्ते यदुत→निवेदयाम एवस्थितमेवेद भगवता, एत एवास्य दुश्चरितस्य प्रतिविधानमुपदेक्ष्यन्ति । अत्रान्तरे चतुर्णामपि शरीरेभ्यो निर्गतै परमाणुभिर्घटितशरीर शुक्ल वर्णेन परिगत तेजसाऽऽह्लादक लोचनाना प्रीणक चेतसामुपलभ्यमान 'मया रक्षितानि मया रक्षितानि यूयमिति' ब्रुवाणमेक डिम्भरूप सहर्ष भगवन्मुखमीक्षमाण स्थित सर्वेषा पुरत, तावत्तदनुमार्गेणैव कृष्ण वर्णेन बीभत्समाकारेण उद्वेगहेतु प्राणिना तथैव निर्गत द्वितीय डिम्भरूप, तस्माच्च तदाकाररूपधरमेव क्लिष्टतर प्रकृत्या सजातमन्यदपि तृतीय डिम्भरूप, तच्च वर्द्धितुमारब्ध, तत शुक्लडिम्भरूपेण मस्तके हस्ततलप्रहार दत्त्वा तद्वर्द्धमान निवार्य प्रकृत्या धारित, निर्गते च भगवदनुग्रहात् द्वे अपि ते कृष्णे डिम्भरूपे । ततो भगवताभिहित→भो भद्राणि (द्रा ?)! यद्भवद्भिश्चिन्तित यथा कृतमस्माभिर्विपरीताचरणमिति न तत्र भवद्भिर्विषादो विधेय, यतो न भवतामेष दोषो, निर्मलानि यूय स्वरूपेण । तैरभिहित→भगवन्! कस्य पुनरेष दोष ? भगवानाह→यदिद शुक्लानन्तर भवच्छरीरेभ्यो निर्गत कृष्णवर्ण डिम्भरूप अस्याय दोष । तान्याहु→भगवन् किन्नामकमिदम्? भगवतोक्त→अज्ञानमिदमुच्यते, तैरुक्त→भगवन्! यदिदमेतस्मादज्ञानात्प्रादुर्भूत द्वितीय कृष्णडिम्भरूप, अनेन च शुक्लरूपेणास्फोटच वर्द्धमान धारितमेतत्किनामकम्? भगवानाह→पापमिद, तान्याहु→अस्य शुक्लडिम्भरूपस्य तर्हि किमभिधानम्? भगवतोक्त→आर्जवमिदमभिधीयते । ततस्तान्याहु→भगवन्! कीदृशमिदमज्ञानम्? कथ चेद पापमेतस्माज्जातम्? किमिति चानेनार्जवेनेद विवर्द्धमान धारितम् ? इति सर्वं विस्तरत श्रोतुमिच्छाम ।

## अज्ञानमाहात्म्यम्

भगवानाह→यद्येव तत समाकर्णयत यूयम् →

यत्तावदिदमज्ञान, युष्मद्देहाद्विनिर्गतम् । एतदेव समस्तस्य, दोषवृन्दस्य कारणम् ॥१॥
अनेन वर्त्तमानेन, शरीरे जन्तवो यत । कार्याकार्यं न जानन्ति, गम्यागम्य च तत्त्वत ॥२॥
भक्ष्याभक्ष्य न बुध्यन्ते, पेयापेय च सर्वथा । अन्धा इव कुमार्गेण, प्रवर्त्तन्ते तत परम् ॥३॥
ततो निबध्य घोराणि, कर्माण्यकृतशम्बला । भवमार्गे निरन्तेऽत्र, पर्यटन्ति सुदुखिता ॥४॥
अज्ञानमेव सर्वेषा, रागादीना प्रवर्त्तकम् । स्वकार्ये भोगतृष्णाऽपि, यतोऽज्ञानमपेक्षते ॥५॥
अज्ञानविरहेणैव, भोगतृष्णा निवर्त्तते । कथञ्चित्सप्रवृत्ताऽपि, झटित्येव निवर्त्तते ॥६॥
सर्वज्ञ सर्वदर्शी च, निर्मलोऽय स्वरूपत । अज्ञानमलिनो ह्यात्मा, पाषाणान्न विशेष्यते ॥७॥
*या काश्चिदेव मर्त्येषु, निर्वाणे च विभूतय । अज्ञानेनैव ता सर्वा, हृता सन्मार्गरोधिना ॥८॥*
अज्ञान नरको घोरस्तमोरूपतया मतम् । अज्ञानमेव दारिद्र्यमज्ञान परमो रिपु ॥९॥
अज्ञान रोगसघातो, जराऽप्यज्ञानमुच्यते । अज्ञान विपद सर्वा, अज्ञान मरण मतम् ॥10॥
अज्ञानविरहे नैष, घोर ससारसागर । अत्रापि वसता पुसा, बाधक प्रतिभासते ॥११॥

---

1 अशक्तिष्ठा प्र । 2 सम्पर्केण प्र ।

या काश्चिद्व्यवस्था स्युर्याश्चोन्मार्गप्रवृत्तय । यच्चासमञ्जस किञ्चिदज्ञान तत्र कारणम् ॥१२॥
त एव हि प्रवर्त्तन्ते, पापकर्मसु जन्तव । प्रकाशाच्छादक येषामेतच्चेतसि वर्त्तते ॥१३॥
येषा पुनरिद चित्ताद्धन्याना विनिवर्त्तते । शुभ्रीभूतान्तरात्मानस्ते सदाचारवर्त्तिन ॥१४॥
वन्द्यास्त्रिभुवनस्यापि, भूत्वा भावितमानसा । अशेषकल्मषोन्मुक्ता, गच्छन्ति परम पदम् युग्मम् ॥१५॥
एतच्चाज्ञानमत्रार्थे, सर्वषा भवता समम् । सजात तेन दोषोऽयमस्येव न भवादृशाम् ॥१६॥
डिम्भरूपमनेनेव, द्वितीय पापनामकम् । सर्वत्र जन्यते तस्मादत्रापि जनित किल ॥१७॥
एतद्धि सर्वदु खाना, कारण वर्णित बुधै । उद्वेगसागरे घोरे, हठादेतत्प्रवर्त्तकम् ॥१८॥
मूल सक्लेशजालस्य, पापमेतदुदाहृतम् । न कर्त्तव्यगत प्राज्ञै, सर्वं यत्पापकारणम् ॥१९॥
हिसानृतादय पञ्च, तत्त्वाश्रद्धानमेव च । क्रोधादयश्च चत्वार, इति पापस्य हेतव ॥20॥
वर्जनीया प्रयत्नेन, तस्मादेते मनीषिणा । ततो न जायते पाप, तस्मान्नो दु खसभव ॥२१॥
युष्माक पुनरज्ञानाज्जात पापमिद यत । अज्ञानमेव सर्वेषा, हिसादीना प्रवर्त्तकम् ॥२२॥

## आर्जवकार्यम्

वर्द्धमानमिद पापमार्जवेन निवारितम् । यदत्र कारण सम्यक्, कथ्यमान निबोधत ॥२३॥
आर्जव हि स्वरूपेण, शुद्धाशयकर परम् । वर्द्धमानमत पाप, वारयत्येव देहिनाम् ॥२४॥
एतच्चार्जवमत्रार्थे, सर्वेषा वर्त्तते समम् । अज्ञानजनित पाप, युष्माकममुना जितम् ॥२५॥
रक्षितानि मया यूयमत एव मुहुर्मुहु । सहर्षमेतदाचष्टे, डिम्भरूप स्मिताननम् ॥२६॥
धन्यानामार्जव येषामेतच्चेतसि वर्त्तते । अज्ञानादाचरन्तोऽपि, पाप ते स्वल्पपापका ॥२७॥
यदा पुनर्विजानन्ति, ते शुद्ध मार्गमञ्जसा । तदा विधूय कर्माणि, चेष्टन्ते मोक्षवर्त्मनि ॥२८॥
आर्जवेन ततो धन्यास्ते शुभ्रीभूतमानसा । निर्माया[निर्मला मु]चारविस्तारा, पार गच्छन्ति ससृते ॥२९॥
तदेवविधभावाना, भद्राणा बुध्येते[ध्यते मु]ऽधुना । अज्ञानपापे निर्द्धूय, सम्यग्धर्मनिषेवणम् ॥30॥

## ऋजुराजादीना दीक्षा

उपादेयो हि ससारे, धर्म एव बुधै सदा । विशुद्धो मुक्तये सर्वं, यतोऽन्यद् दु खकारणम् ॥३१॥
अनित्य प्रियसयोग, इहेर्ष्याशोकसकुल । अनित्य योवन चापि, कुत्सिताचरणास्पदम् ॥३२॥
अनित्या सपदस्तीव्रक्लेशवर्गसमुद्भवा । अनित्य जीवित चेह, सर्वभावनिवन्धनम् ॥३३॥
पुनर्जन्म पुनर्मृत्युर्हीनादिस्थानसश्रय । पुन पुनश्च यदत, सुखमत्र न विद्यते ॥३४॥
प्रकृत्याऽसुन्दर ह्येव, ससारे सर्वमेव यत् । अतोऽत्र वद कि युक्ता, क्वचिदास्था विवेकिनाम्? ॥३५॥
मुक्त्वा धर्म जगद्वन्द्यमकलङ्क सनातनम् । परार्थसाधक धीरै, सेवित शीलशालिभि युग्मम् ॥३६॥
तते भागवत वाक्य, श्रुत्वेदममृतोपमम् । ससारवासात्ते सर्वे, स्व स्व चित्त निवर्त्तितम् ॥३७॥
राजाऽऽह क्रियते सर्वं, यदादिष्ट महात्मना । प्रगुणाऽऽह महाराज! किमद्यापि विलम्ब्यते ॥३८॥
चारु चारूदित तात! सम्यगम्ब! प्रजल्पितम् । युक्तमेतदनुष्ठान, मुग्धेनेव प्रभाषितम् ॥३९॥
हर्षोत्फुल्लसरोजाक्षी तथापि गुरुलज्जया । तदुक्त बहु मन्वाना, वधूर्मोनेन सस्थिता ॥40॥

तत पतितानि चत्वार्यपि भगवच्चरणयो । ऋजुराजेनोक्त→वत्स! सपादयामो यदादिष्ट भगवता, भगवानाह→उचितमिद भवादृशा भव्यानाम्, तत पृष्टो भगवानेव प्रशस्तदिन राज्ञा, भगवतोक्त→अद्यैव शुद्ध्यतीति, ततस्तत्रस्थेनैव नरेन्द्रेण दापितानि महादानानि, कारितानि देवपूजनानि, स्थापित शुभाचाराभिधान स्वतनयो राज्ये, जनितो नागरिकजनाना चित्तानन्द इति।

ततो निर्वर्त्य कर्त्तव्य, प्रव्रज्याकरणोचितम् । गुरुणाऽर्पितसद्भाव, दीक्षित च चतुष्टयम् ॥१॥
ततस्ते कृष्णरूपे द्वे, डिम्भे तूर्णं पलायिते । शुक्लरूप पुनस्तेषा, प्रविष्ट तनुषु क्षणात् ॥२॥
कालज्ञेन ततश्चित्ते, सभार्येण विचिन्तितम् । पश्याहो धन्यताऽमीषा, सुलब्ध जन्मजीवितम् ॥३॥
एतैर्भागवती दीक्षा, यै प्राप्ता पुण्यकर्मभि । दुरन्तोऽप्यधुना मन्ये, तैस्तीर्णोऽय भवोदधि ॥४॥

चारित्ररत्नादेतस्मात्ससारोत्तारकारणात् । वय तु देवभावेन, व्यर्थकेनाऽत्र वञ्चिता ॥५॥

### कालज्ञविचक्षणयोर्वार्त्तालाप

अथवा–मिथ्यात्वोद्दलन यस्मादस्माभिरपि साम्प्रतम् । दुर्लभ भवकोटीभि, प्राप्त सम्यक्त्वमुत्तमम् ॥६॥
अतोऽस्ति धन्यता काचिदस्माकमपि सर्वथा । नरो दारिद्र्यभाड् नैव, लभते रत्नपुञ्जकम् ॥७॥
तत सहर्षौ तौ सूरे, प्रणम्य चरणद्वयम् । तेनानुशिष्टौ स्वस्थान, सप्राप्तौ देवदम्पती ॥८॥
प्रविष्टा भोगतृष्णाऽपि, शरीरे गच्छतोस्तयो । शुद्धसम्यक्त्वमाहात्म्यात्, केवल सा न बाधिका ॥९॥
विचक्षणाऽऽह कालज्ञमन्यदा रहसि स्थिता । आर्यपुत्र! यदा दृष्टा, त्वयाऽह कृतवञ्चना ॥10॥
तदा किं चिन्तितम्? सोऽपि, स्वाभिप्राय न्यवेदयत् । विचक्षणाऽऽह सत्यस्त्व, कालज्ञ इति गीयसे युग्मम् ॥११॥
तेनापि पृष्टा सोवाच, पर्यालोच तदात[न मु]नम् । कालज्ञ प्राह सत्यैव, त्वमप्यत्र विचक्षणा ॥१२॥
यत कालविलम्बेन, क्रियमाणेन वल्लभे! । भोगा भुक्ता स्थिता प्रीतिर्जात नाकाण्डविड्वरम् ॥१३॥
प्राप्तो धर्मो नृपादीनामुपकार कृतो महान् । तत कालविलम्बोऽय, फलितोऽत्यर्थमावयो ॥१४॥
विचक्षणाऽऽह को वाऽत्र? सन्देहो नाथ! वस्तुनि । किं वा न जायते चारु, पर्यालोचितकारिणाम् ? ॥१५॥
तत प्रीतिसमायुक्तौ, सजातौ देवदम्पती । सद्धर्मलाभादात्मान, मन्यमानौ कृतार्थकम् ॥१६॥
इदं पुत्र! मया तुभ्यं, कथित मिथुनद्वयम् । सदिग्धेऽर्थे विलम्बेन, कालस्य गुणभाजनम् ॥१७॥
ततश्च–सदिग्धेऽर्थे विधातव्या, भवता कालयापना । पश्चाद् बहुगुण यच्च, तदेवाङ्गीकरिष्यते ॥१८॥

### अकुशलमालाया· योगशक्ति

मध्यमबुद्धिराह–यदाऽऽज्ञापयत्यम्बा–

ततो मनीषिणो वाक्य, स्मरतो नास्य जायते । प्रीतिबन्धो दृढ तत्र, स्पर्शने भाववैरिणी ॥१९॥
बालालापै पुनस्तत्र, स्नेहबुद्धि प्रवर्त्तते । दोलायमानोऽसौ चित्ते, कुरुते कालयापनाम् ॥20॥
इतश्च तेन बालेन, सा प्रोक्ता जननी निजा । अम्ब! सदर्शयात्मीय, योगशक्तिंवल मम ॥२१॥
तयोक्त दर्शयाम्येषा, पुत्र! त्व समुखो भव । तत सा ध्यानमापूर्य, प्रविष्टा तच्छरीरके ॥२२॥
अथाऽकुशलमालाया, प्रवेशानन्तर पुन । स बाल स्पर्शनेनापि, गाढ हर्षादधिष्ठित ॥२३॥
तत शरीरे तौ तस्य, वर्त्तमानौ क्षणे क्षणे । अभिलाष मृदुस्पर्शे, कुरुतस्तीव्रवेदनम् ॥२४॥
परित्यक्तान्यकर्त्तव्यस्तावन्मात्रपरायण । स बाल सुरतादीनि, दिवा रात्रौ च सेवते ॥२५॥
कुविन्दडोम्बमातङ्गजातीयास्वपि तद्वश । अतिलौल्येन मूढात्मा, ललनासु प्रवर्त्तते ॥२६॥
ततोऽकर्त्तव्यनिरतं, सत्कर्त्तव्यपराङ्मुखम् । त बाल सकलो लोक, पापिष्ठ इति निन्दति ॥२७॥
अज्ञोऽय गतलज्जोऽय, निर्भाग्य कुलदूषण । स एव निन्द्यमानोऽपि, मन्यते निजचेतसि ॥२८॥
स्पर्शनाम्बाप्रसादेन, ममास्ति सुखसागर । लोको यद्वक्ति तद्वक्तु, किमेतज्जल्पचिन्तया युग्मम् ॥२९॥
अथाऽकुशलमालाऽपि, निर्गत्य परिपृच्छति । कीदृशी मामिकी जात ! योगशक्तिर्विभाति ते ? ॥30॥
स प्राहानुगृहीतोऽस्मि, निर्विकल्पोऽहमम्बया । सुखसागरमध्येऽत्र, यथाऽह सप्रवेशित ॥३१॥
अन्यच्चाम्ब! त्वया नित्य, मदनुग्रहकाम्यया । न मोक्तव्य शरीर मे, यावज्जीव स्वतेजसा ॥३२॥
अथाऽकुशलमालाऽऽह, यत्तुभ्य वत्स! रोचते । तदेव सतत कार्य, मया मुक्तान्यचेष्टया ॥३३॥
स्वाधीना ता निरीक्ष्यैव, बालेन परिचिन्तितम् । स्पर्शनोऽपि ममायत्त, सामग्री [1]सर्वसाधिका ॥३४॥
अहो मे धन्यता लोके, नास्त्यतो बत मादृश । ततोऽसौ गाढहृष्टात्मा, स्वानुरूप विचेष्टते ॥३५॥
अथ निन्दापरे लोके, स्नेहविह्वलमानस । लोकापवादभीस्त्वाम्मध्यवुद्धि प्रभापते ॥३६॥
बाल! नो युज्यते कर्त्तुं, तव लोकविरुद्धकम् । अगम्या [य?] गमन निन्द्य, सपाप कुलदूषणम् ॥३७॥
स प्राह विप्रलब्धोऽसि, नून मित्र! मनीषिणा । स्वर्गे विवर्त्तमान मा, नेक्षसे कथमन्यथा ? ॥३८॥

1 कार्यसाधिका प्र ।

ये मूढा जातिदोषेण, कोमल ललनादिकम् । नेच्छन्ति स महारत्न, मुञ्चन्ति स्थानदोपत ॥३९॥
तदाकर्ण्य ततश्चित्ते, कृत मध्यमवुद्धिना । नैप प्रज्ञापनायोग्यो, व्यर्थो मे वाक्परिश्रम ॥40॥

## वसन्तस्वरूपम्

एव च तिष्ठता तेपा, वालमध्यमनीपिणाम् । अथान्यदा समायातो, वसन्त [1]कृतमन्मथ ॥४१॥
सजाता [2]काननाभोगा[3], सुमनोभरपूरिता । भ्रमद्भ्रमरझङ्कारतारगीतमनोहरा ॥४२॥
कामिनीहृदयानन्ददायक प्रियसन्निधो । विजृम्भते वनान्तेपु, केकिकोकिलकूजितम् ॥४३॥
प्रोत्फुल्लकिंशुकाग्रेपु, पुष्पभारोऽतिरक्तक । वियोगदलितस्त्रीणा, पिशितप्रकरायते ॥४४॥
मञ्जर्य सहकाराणामामोदितदिगन्तरा । हृष्टा वसन्तराजेन, धूलिक्रीडा प्रकुर्वते ॥४५॥
देवकिन्नरस[4]वन्धिमिथुनै कथिता वने । भ्रमेण [5]नाकान्मर्त्यस्य[6], तदानी रमणीयता ॥४६॥
वल्लर्यो निर्भरीभूत्वा,(भूता) वद्ध्वा (वद्धा) दोला गृहे गृहे । मदनोद्दीपने मन्द, प्रवृत्तो मलयानिल ॥४७॥
अथेदृशे वसन्तेऽसौ, सह मध्यमवुद्धिना । क्रीडार्थं निर्गतो वाल, कामकालप्रमोदित ॥४८॥

## बालकृतदेवशय्योपभोग

जनन्या देहवर्त्तिन्या, सयुक्त स्पर्शनेन च । गतो लीलाधर नाम, सोद्यान नन्दनोपमम् ॥४९॥
तस्यास्ति मध्यभूभागे, शुभ्रशृङ्गो महालय । [7]जनतानयनानन्द, प्रासादस्तुङ्गतोरण ॥50॥
कामिनीहृदयाह्लादकारको रतिवत्सल । जनै प्रतिष्ठितस्तत्र, देवो मकरकेतन ॥५१॥
इतश्च तस्य देवस्य, पूजासत्कारकारणम् । तिथि क्रमेण सजाता, दिने तत्र त्रयोदशी ॥५२॥
कन्यका वरलाभाय, वध्व सोभाग्यवृद्धये । दुर्भगास्तु पतिप्रेममोहेन [8]हतमानसा ॥५३॥
मोहान्धा कामिनोऽभीष्टयोपित्सम्वन्धसिद्धये । गृहीतार्चनिका कामपूजनार्थं समागता [युग्मम्] ॥५४॥
ततो वालो [9]महारोल, तत्राकर्ण्य सविस्मय । प्रविष्ट कामसदन, सह मध्यमवुद्धिना ॥५५॥
दृष्टस्तत्र रतेर्नाथ, प्रणतो भक्तिपूर्वकम् । पूजितश्च प्रयत्नेन, सस्तुतो गुणकीर्त्तने ॥५६॥
अथ प्रदक्षिणा तस्य, ददानो देवसद्मन । वालो ददर्श पार्श्वस्थ, गुप्तस्थाने व्यवस्थितम् ॥५७॥
तस्यैव रतिनाथस्य, देवस्य कृतकोतुकम् । सवासभवन रम्य, मन्दमन्दप्रकाशकम् [युग्मम्] ॥५८॥
कुतूहलवशेनाथ, द्वारि सस्थाप्य मध्यमम् । मध्ये प्रविष्ट सहसा, स वालस्तस्य सद्मन ॥५९॥
अथ तत्र सुविस्तीर्णां, [10]सपर्यङ्का [11]सतूलिकाम् । मृदूपधानसपन्ना कोमलामलचेलिकाम्[12] ॥60॥
सुप्तेन रतियुक्तेन, कान्तमध्या मनोभुवा । स ददर्श महाशय्या, देवानामपि दुर्लभाम् [युग्मम्] ॥६१॥
ततो मन्दप्रकाशत्वात्, सवासभवनस्य स । किमेतदिति सचिन्त्य, शय्या पस्पर्श वालक ॥६२॥
इतश्चेतश्च हस्तेन, स्पृशता सुचिर मुदा । ततो विभाविता तेन[ऽनेन म]शय्येपा मा[म म]करध्वजी ॥६३॥
विचिन्तित च तत्स्पर्शकोमल्यहृतचेतसा । अहो कोमलता मन्ये, नान्यत्र भवतीदृशी ॥६४॥
तत शरीरवर्त्तिन्या, जनन्या स्पर्शनेन च । प्रेर्यमाण स्वकीयेन, चापलेन च दूपित ॥६५॥
स वालश्चिन्तयत्येव, मानयामि यथेच्छया । एना कोमलिका शय्या, सुप्त्वाऽह क्षणमात्रकम् ॥६६॥
देव सुप्तोऽत्र मदनो, रतियुक्तो न चिन्तितम् । अपायो देवशय्याया, सुप्तस्येति न भावितम् ॥६७॥
दृष्टस्य लाघव लोकैरिति नेव मन कृतम् । विज्ञात नेति सपत्ये, हास्यो मध्यमवुद्धित [युग्मम्] ॥६८॥

## राज्ञीस्पर्श

अनालोच्यायति मोहात्, केवल सुप्त एव स । आरुह्य शय्या ता दिव्या, कृत वालविचेष्टितम् ॥६९॥
ततस्तस्या विशालाया, शय्याया वद्धमानस । इतश्चेतश्च कुर्वाण, सर्वाङ्गाणि पुन पुन ॥70॥
अहो सुखमहो स्पर्शस्तथाऽहो धन्यता मम । चिन्तयन्निति शय्याया, लुठमान स तिष्ठति ॥७१॥

---

1 कृतमन्मथा प्र । 2 कानन भोगा प्र । 3 आभोगा =दशा । 4 हारि प्र । 5 =देवावासात् । 6 =मनुष्यस्य ।
7 =जनसमूह । 8 हतमानसा प्र । 9 कोलाहलम् । 10 सुपयङ्काम् प्र । 11 सुतूलिकाम् प्र । 12 चेल = वस्त्रम् ।

इतश्च नगरे तत्र, बहिरङ्गो नृपोत्तम । अन्योऽप्यस्ति महातेजा, प्रख्यात शत्रुमर्दन ॥७२॥
तस्याऽस्ति पद्मपत्राक्षी, प्राणेभ्योऽपि सुवल्लभा । प्रधानकुलसभूता, देवी मदनकन्दली ॥७३॥
ग्राहितार्चनिका सा च, परिवारेण सयुता । आयाता तत्र सदने, कामदेवस्य पूजिका ॥७४॥
देवकोष्ठस्थित सा च, सपूज्य मकरध्वजम् । सवासभवनस्थस्य, प्रविष्टा तस्य पूजिका ॥७५॥
प्रविशन्तीमुदीक्ष्यासौ, ता स्त्रीतिकृतनिश्चय । लज्जाभयाभ्या निश्चेष्टो, बाल काष्ठमिव स्थित ॥७६॥
ततो मन्दप्रकाशे सा, भवने मृगलोचना । हस्तस्पर्शेन शय्याया, देवमर्चयते किल ॥७७॥
चन्दनेन च कुर्वन्त्या, रतिकामविलेपनम् । स बाल सर्वगात्रेषु, स्पृष्ट कोमलपाणिना ॥७८॥
ततोऽकुशलमालाया, वशेन स्पर्शनस्य च । बालश्चिन्तयत्येव विपर्यासितमानस ॥७९॥
यादृशोऽय मृदुस्पर्शो, हस्तस्यास्यानुभूयते । नानुभूतो मया तादृग्, जन्मन्यपि कदाचन ॥८०॥
अहो मयाऽन्यस्पर्शेषु, सौन्दर्यं कल्पित वृथा । नात परतर मन्ये, त्रिलोकेऽप्यस्ति कोमलम् ॥८१॥
इतश्च कामदेवस्य, परिचर्यां विधाय सा । स्वस्थान प्रगता काले, राज्ञी मदनकन्दली ॥८२॥

## राज्ञीवाञ्छा

ततोऽसौ बाल कथं ममेयं स्त्री सपत्स्यत इति चिन्तया विह्वलीभूतहृदयोऽनाख्येयमन्तस्तापातिरेक वेदयमानो विस्मृतात्मा तस्यामेव शय्याया मुञ्चन् उष्णोष्णान् दीर्घदीर्घान् नि श्वासान् मूर्च्छित इव, मूक इव, मत्त इव, हृतसर्वस्व इव, ग्रहगृहीत इव, तप्तशिलाया निक्षिप्तमत्स्यक इव इतश्चेतश्च परिवर्त्तमानो विचेष्टते । ततो द्वारे वर्त्तमानेन मध्यमबुद्धिना चिन्तित→अये। किमित्येष बालोऽस्मात् सवासभवनादियताऽपि कालेन न निर्गच्छति? इति, कि वा करोति? इति प्रविश्य तावन्निरूपयामि, तत प्रविष्टो मध्यमबुद्धिर्लक्षिता हस्तस्पर्शेन कामशय्या, हृतमस्यापि हृदय तत्कोमलतया, ततो विमलीभूतदृष्टिना तेन दृष्ट शय्यैकदेशे विचेष्टमानस्तदवस्थो बाल, चिन्तितमनेन→अहो किमनेनेदमकार्यमाचरितम् ? न युक्त देवशय्यायामधिरोहण, न खलु रतिरूपविभ्रमापि गुर्वङ्गना सता गम्या भवति, तथेय शय्या सुखदापि देवप्रतिमाधिष्ठितेतिकृत्वा केवल वन्दनीया न पुनरुपभोगमर्हतीति, ततश्चोत्थापितोऽनेन बालो यावन्न किञ्चिज्जल्पति । मध्यमबुद्धिराह→अहो अकार्यमिद, न युक्त देवशय्यायामधिरोहणमित्यादि, तथापि न दत्तमुत्तर बालेन ।

## व्यन्तरकृता पीडा

अत्रान्तरे प्रविष्टस्तद्देवकुलाधिष्ठायको व्यन्तरो, बद्धस्तेनाकाशबन्धै बाल, पातितो भूतले, समुत्पादिताऽस्य सर्वाङ्गीणा तीव्रवेदना । ततो मुमूर्षन्तमुपलभ्य कृतो मध्यमबुद्धिना हाहारव, तत किमेतदिति सभ्रमेण चलितो देवकुलात्तदभिमुख लोको, नि सारितो व्यन्तरेण वासभवनाद् बहिर्बालो, महास्फोटेन क्षिप्तो भूतले, भग्ननयन कण्ठगतप्राणोऽसौ दृष्टो लोकेन, तदनुमार्गेण दीनमनस्को निर्गतो मध्यमबुद्धि, किमेतदिति पृष्टोऽसौ जनेन, लज्जया न किञ्चिज्जल्पितमनेन । ततोऽवतीर्य कञ्चित्पुरुषं व्यन्तरेण कथितो जनेभ्यस्तदीयव्यतिकर । ततो देवाऽपथ्यकारीति पापिष्ठोऽयमिति धिक्कारितोऽसौ बालो मकरध्वजभक्तै, कुलदूषणोऽयमस्माक विषतरुरिव संपन्न इति गर्हित स्वजातीयै, अनुभवतु पापकर्मण फलमिदानीमित्याक्रोशित सामान्यलोकै, कियदेतदसमीक्षितकारिणा समस्तानर्थभाजनत्वात् तेषामित्यपकर्णितो विवेकिलोकै । ततोऽसौ व्यन्तर कृतविकृतरूप सन्नाह→चूर्णनीयोऽय दुरात्मा भवता पुरतो मयाऽधुना बाल इति । तत कृतहाहारव 'प्रसीदतु प्रसीदतु भट्टारको, ददातु भ्रातृप्राणभिक्षाम्' इति ब्रुवाण पतितो व्यन्तराधिष्ठितपुरुषपादयोर्मध्यमबुद्धि, तत्करुणापरितचेतसा लोकेनाप्यभिहितो व्यन्तरो यदुत→भट्टारक । मुच्यतामेकवार तावदेष न पुन करिष्यतीति, ततो मध्यमबुद्धिकरुणया लोकोपरोधेन च मुक्तोऽसौ व्यन्तरेण बालो, लब्धा चेतना, मुत्कलीभूत शरीर, नि सारितस्तूर्णं देवकुलात् ।

## बालस्थितिर्मध्यमचिन्ता च

मध्यमबुद्धिना नीत कृच्छ्रेण स्वभवन, ज्ञातोऽय व्यतिकर परिकरात्कर्मविलासेन । चिन्तितमनेन कियदेतद्? अद्यापि मयि प्रतिकूले बालस्य यद्भविष्यति तन्न लक्षयन्त्येते लोका, ततोऽभिहित कर्मविलासेन परिकर— किमस्माक दुर्विनीतचिन्तया? नोचित सोऽनुशास्ते, न वोढव्यर[illegible] केनापि व्यापार । परिकरेणोक्त—यदाज्ञापयति[illegible]ति । पृष्टोऽसौ मध्यमबुद्धिना बाल —भ्रात । न किञ्चित्तेऽधुनाशरी[illegible]धते? बालेनाभिहितं—न शरीरके, केवल [illegible] ममान्तस्ताप ।

मध्यमवुद्धिराह—जानासि किन्निमित्तोऽयम्, ततो वामशीलतया कामस्य वाल प्राह—न जानामि, केवल द्वारस्थितेन भवता तत्र सवासभवनमभिप्रविशन्ती गच्छन्ती वा किं विलोकिता काचिन्नारी न वा ? मध्यमवुद्धिराह—विलोकिता । वालेनोक्त—तत्कि लक्षिता काऽसाविति भवता? मध्यमवुद्धिराह—सुष्ठु लक्षिता, सा हि शत्रुमर्दनस्य राज्ञो भार्या मदनकन्दलीत्युच्यते, तदाकर्ण्य कथ सा मादृशामितिचिन्तया दीर्घदीर्घतर नि श्वसित वालेन । तदर्थी खल्वयमिति लक्षितो मध्यमवुद्धिना । चिन्तितमनेन—तत्रापि स्थाने तावदस्यायमभिनिवेशो, जनयत्येव सा मदनकन्दली सुन्दरताऽतिशयेन स्वगोचरमभिलपित, यतो द्वारशाखालग्नेन मयाऽप्यतिसङ्कटतया कामसंवासभवनद्वारस्य निर्गच्छन्त्यास्तस्या मदनकन्दल्या सवेदितोऽङ्गस्य स्पर्शो, न तादृश प्रायेणान्यवस्तुन स्पर्शो भुवने विद्यते, दोलायित ममापि तदभिसरणगोचर मनस्तदानीमासीत् । किन्तु न युक्त कुलजाना परस्त्रीगमन, तस्मान्निवारयाम्येनमपि यदि निवर्त्तते मद्वचनेन ।

### मध्यमस्य वालाय निष्फलोपदेश

तत स वाल प्रत्याह—किमद्याप्यविद्या भवत ? कि न दृष्टमिदानीमेव फलमविनयस्य भवता, किमधुनेव विस्मृतम्? यत्कण्ठगतप्राण कथञ्चिन्मोचितस्त्वं मया दुर्विनयकुपितात् भगवतो मकरध्वजात्, ततो निवर्त्तस्वास्माद् दुरध्यवसायात्, [1]नयनविपनागशिरोरत्नशुचिकल्पा हि सा मदनकन्दली, ता प्रार्थयतस्ते केवल भस्मीभाव एव न पुन काचिदर्थसिद्धि । वालेन चिन्तित—अये! लक्षितोऽहमनेन, तत्किमधुनाऽभिप्रायगोपनेन? ततस्तेनोक्त—'यद्येव तत कि वूपे मोचितस्त्व मया ? न पुनर्वूपे यथा गाढतर मारित इति, यतस्तेन कामेन युष्मद्वचनेन मा मुञ्चता केवल मे शरीरवेदनामात्रमपसारित हृदये पुनर्निक्षितो वितर्कपरम्परारू प प्रज्वलितखदिराङ्गारराशि, तेन ममेद दह्यते समन्ताच्छरीर, यद्यह कामवन्धनकाल एवामरिष्य नैतावन्तमन्तरतापमन्वभविष्य, ततो भवता मोचयता प्रत्युत महानयमनर्थ सपादित इति, नाधुना ममेनाममृतसेकायमाना मदनकन्दली विरहय्यान्यथाऽस्यान्तरतापस्योपशम, किम्वहुनाऽत्र जल्पितेन?' इति, ततो लक्षितो मध्यमवुद्धिनाऽस्यानिवर्त्तको निर्वन्ध, स्थितोऽसो तूष्णीभावेन । अत्रान्तरे गतोऽस्त सविता, वालहृदयादिव समुल्लसित तम पटल, लङ्घित प्रथम प्रदोप, नि सचारीभूतो लोक । ततोऽविचार्य कार्याकार्यं समुत्थितो वालो, निर्गत स्वकीयभवनात्, अवतीर्णो राजमार्गे, प्रवृत्त शत्रुमर्दनराजकुलाभिमुख गन्तु, गत कियन्तमपि भूभागम् ।

### अपहृतवालाऽनुधावन्मध्यमस्य स्थिति

इतश्च स्नेहवशेन किमस्य सपत्स्यत इति चिन्तया निर्गतस्तदनुमार्गेण मध्यमवुद्धि । दृष्टो वालेन गच्छता कश्चित्पुरुष, तेन चास्फोट्य वद्धोऽसो मयूरवन्धेन, कूजित वालेन, 'प्राप्त प्राप्त इति वुवाण' प्राप्त एव मध्यमवुद्धि । तत समुत्पाट्य वाल पश्यत एव मध्यमवुद्धे समुत्पतित पुरुषोऽम्वरतले, आरटतश्च वालस्य स्थगित वदन, प्रवृत्त पश्चिमाभिमुखो गन्तुम्। ततो मध्यमवुद्धिरपि अरे रे दुष्टविद्याधर! क्व यासि गृहीत्वा मदीयभ्रातरमिति त्राडी(टी प्र)मुञ्चन्नाकृष्टखड्ग प्रस्थितो भूमो, तदनुमार्गेण निर्गतो नगरात्, अदर्शनीभूत पुरुषो, निराशीभूतो मध्यमवुद्धि, तथापि वालस्नेहानुवन्धेन किल क्वचिन्मोक्ष्यतीतिवुद्ध्या नासो धावन्नुपरमति, धावत एव लङ्घिता रजनी । ततोऽनुपानत्कतया विद्धोऽनेककण्टककीलकै, परिगत श्रमेण, क्षामो वुभुक्षया, पीडित पिपासया, विह्वल शोकेन, अध्यासितो दैन्येन अनेकग्रामनगरेषु पृच्छन् वार्त्तां भ्रान्तोऽसौ सप्ताहोरात्रम्। तत्रापि प्राप्त कुशस्थल नाम नगर, स्थितस्तस्य वहिर्भागे, दृष्टोऽनेन जीर्णान्धकूप, तत कि ममाधुना भ्रातृविकलेन जीवितेन? इति प्रक्षिपाम्यत्रात्मानमिति सचिन्त्य वद्धा मध्यमवुद्धिना [2]निर्वोलगमनार्थमात्मगलके शिला । दृष्ट तन्नन्दननाम्ना राजपुरुषेण, ततो मा साहस मा साहसमिति वुवाण प्राप्तोऽसो तत्समीप, धारित कूपतटोपान्तवर्त्ती मुञ्चन्नात्मान मध्यमवुद्धिरनेन, विमोचित शिला, निवेशितो भूतले, पृष्टश्च—भद्र! किमितीदमधमपुरुषोचित भवता व्यवसितम्? तत कथितोऽनेन वालवियोगव्यतिकर, नन्दनेनाभिहित—भद्र! यद्येव ततो मा विषाद कार्षी, भविष्यति भ्रात्रा सार्द्धं प्रायेण मीलक । मध्यमवुद्धिराह—कथम्? नन्दनेनोक्त—समाकर्णय ।

### होमार्थपीडितवालस्य मुक्ति

अस्त्यत्र नगरेऽस्माक स्वामी हरिश्चन्द्रो नाम राजा । स च प्रतिक्षणमुपद्रूयते विजयमाठरशङ्खादिभि प्रात्यन्तिकैर्मण्ड—लहरैर्नृपतिभि । इतश्चास्ति रतिकेलिर्नाम विद्याधर परममित्रम् । अन्यदा समागतेन शत्रूपद्रुतमवलोक्य देव तेनाभिहित—ददामि

---

1 =दृष्टिविपसर्प । 2 =अज्ञातमृत्युसपादनाय ।

तुभ्यमह क्रूरविद्या यत्प्रभावेण त्वमेतैर्न परिभूयसे । देवेनाभिहित→अनुग्रहो मे, तत कारयित्वा षाण्मासिका पूर्वसेवामितो दिनादष्टमे दिने नीत क्वचित्तेन देवो हरिश्चन्द्र, कारितोऽरिविद्यासाधन, आनीतो द्वितीयदिने सह पुरुषेण, कृता तस्य पुरुषस्य मासरुधिरेण होमक्रिया, सप्त दिनानि विद्याया पश्चात्सेवा, मुक्तोऽसावधुना पुरुष। स एव प्रायस्ते भ्राता भविष्यतीति मे वितर्क , स च ममैव समर्पितोऽधुना देवेन। मध्यमबुद्धिराह–भद्र। यद्येव ततो यद्यस्ति ममोपरि दया भवतस्ततस्तमानय तावदिहैव पुरुष येनाह प्रत्यभिजानामीति । ततश्चैव करोमीत्यभिधाय गतो नन्दन , समायात समुत्पाट्य गृहीत्वा बाल, दृष्टोऽस्थिमात्रावशेष उच्छ्वासनिश्वासोपलक्ष्यमाणजीवितो निरूद्धवाक्प्रसरो मध्यमबुद्धिना बाल। प्रत्यभिज्ञात कृच्छ्रेण, अभिहितो नन्दन→भद्र। स एवाय मम भ्रातेति, सत्य नन्दनस्त्वमसि, अनुगृहीतोऽह भवता। नन्दन प्राह→भद्र। राजद्रोह्यमिद भवत्करुणया मयाऽध्यवसितम्। अन्यच्च–अधुना गतेन मया किलाकर्णित यथा किल रात्रौ राजा पुनस्तर्पयिष्यति रुधिरेण विद्या, भविष्यत्यनेन पुरुषेण प्रयोजनमिति, तदिदमवगम्य मम यद्भवति तद्भवतु, भवद्भ्या तु तूर्णमपक्रमितव्यम्। ततो यदाज्ञापयति भद्रो रक्षणीयश्च यत्नेन भद्रेणात्मेत्यभिधाय समुत्पाटितो बाल, प्रवृत्तो गन्तु मध्यमबुद्धि, ततो भयविधुरहृदयो धावन्नहर्निश वेगेन क्वचित्प्रदेशे बाल पाययन्नुदक, समाह्लादयन् वायुना, प्रीणयन्नशनादिरसेनागणयन्नात्मन शरीरपीडा, महता क्लेशजालेन प्राप्त स्वस्थान मध्यमबुद्धि।

## बालवृत्तान्त

गतानि कतिचिद्दिनानि, जातो मनाक् सबलो बाल, पृष्टो मध्यमबुद्धिना→भ्रात। कि भवताऽनुभूतम्? स प्राह –इतस्तावदुत्क्षिप्तोऽह बद्ध्वा भवत पश्यत एव गगनचारिणा, नीत कृतान्तपुराकारमतिभीषणतयैक श्मशान, दृष्टस्तत्र प्रज्वलिताङ्गारभृताग्निकुण्डपार्श्ववर्ती मया पुरुष, ततस्त प्रति तेनाम्बरचरेणाभिहित→महाराज। सिद्ध ते समीहित, लब्धोऽय मया प्रस्तुतविद्यासिद्धेरुचित सलक्षण पुरुष, इतरेणोक्त→'महाप्रसाद' ततोऽभिहितो नभश्चरेण स पुरुष –यदुत–एकैकस्मिन् विद्याजापपर्यन्ते मया दत्ताऽऽहुतिरग्नौ भवता प्रक्षेप्तव्या, प्रतिपन्नमनेन, प्रारब्धो जाप । ततो विद्याधरेणाकृष्टा यमजिह्वेवातितीक्ष्णा भास्वराकारा [1]शस्त्रिका, तया चोत्कर्त्तिता मदीयपृष्ठात्तेन दीर्घा मासपेशी, निष्पीड्य तत एव प्रदेशाद् निर्गालित रुधिर, भृतश्चुलुक। अत्रान्तरे समाप्तमितरस्यैक विद्यापरावर्त्तन, समर्पिता विद्याधरेण सा रुधिरमासमयी तस्याहुति , प्रक्षिप्ता तेनाग्निकुण्डे, पुन प्रारब्धो जाप , ततश्चैव सोऽम्बरचरो मदीयशरीरपरापरप्रदेशान्नरकपाल इव नारकस्यारटतो मे मासपेशीमुत्कर्त्तयति, त प्रदेश निष्पीड्य रुधिर निर्गालयति, तस्य चुलुकं भृत्वा साधकायाहुतये ददाति, स च विद्यापरावर्त्तनसमाप्तौ गृहीत्वा हुताशने प्रक्षिपति, ततो वेदनाविह्वलो मूर्च्छया पतितोऽह भूतले, विद्याधरस्तु प्रगुणशरीरतया हृष्टो निष्करुणो गाढतर मा विकर्त्तयति। अत्रान्तरे[2]ऽट्टहासैर्हसितमिव गगनेन, गर्जितमिव प्रलयमेघै, गुलगुलितमिव समुद्रेण, प्रचलितेव पृथिवी, रसित दीप्तिजिह्वाभि शिवाभि, [3]प्रनृत्त च विकृतरूपैर्वेतालै, निपतित रुधिरवर्षम् । ततश्चैवविधेषु रौद्रेषु बिभीषिकाविशेषेषु सत्स्वप्यक्षुभितचित्तस्य राज्ञोऽभिमुखीभूता सा क्रूरविद्या, समाप्त जापस्याष्टशत, तत सिद्धाऽह भवत इति वदन्ती प्रकटीभूता विद्या, प्रणता साधकेन, प्रविष्टा तच्छरीरे। तत समुत्कर्त्तितशरीर, निष्पीडितरुधिरबीभत्स, करुणमारटन्त मामुपलभ्य स राजा मयि जात सदय कृतोऽनेन दन्तसीत्कार ततो वारितोऽसौ विद्याधरेण । अभिहित च तेन→राजन्। एष एवास्या विद्याया कल्पो यदुत–न कर्त्तव्याऽस्योपरि दया, ततो विद्याधरेण लिप्त मे केनचिल्लेपेन शरीर, ततोऽह समन्ताद्दन्दह्यमान इव तीव्रवह्निना, चूर्ण्यमान इव वज्रेण, पीड्यमान इव यन्त्रेण प्रविष्टो वेदनाप्रकर्ष, तथापि सुबद्ध न गतमेतन्मे हतजीवित, सजात मे क्षणेन तेन लेपेन दवदग्धस्थाणुकल्प शरीर, समुत्पाटितस्ताभ्या, नीतस्तत्र नगरे, खादितश्च श्वयथुनिमित्तमाम्लभोजन, शून [शून्य मु] मे शरीर, ततो भूयस्तेनैव विधिना मदीयमासरुधिराहुतिभिस्तेन राज्ञा कृतमष्टशतमष्टशत विद्याया जापस्य सप्त दिनानीति, दृष्टश्च तदवस्थोऽह भवता, तदिद भ्रात। मयानुभूत, स्थित च मम हृदये यदुत न प्रायेण नरकेऽप्येवविधो दुखविन्यासो, यादृशो मयाऽनुभूत इति ।

## मनीषिप्रवेश

मध्यमबुद्धिराह–हा भ्रात। नोचितस्त्वमेवविधदुखाना, अहो निर्घृणता विद्याधरस्य, अहो रौद्रता विद्याया । अत्रान्तरे लोकाचारमनुवर्त्तमानो वार्त्तान्वेषणार्थमागतो मनीषी, श्रुतस्तेन द्वारि स्थितेन तथा परिदेवमानो मध्यमबुद्धि, प्रविष्टोऽभ्यन्तरे, कृतेतराभ्यामासनदानादिका प्रतिपत्ति , विहित सभाषणम् । ततो मनीषिणाऽभिहित–मध्यमबुद्धे। किमिति त्व परिदेवयसे?

1 = क्षुरिका। 2 [ऽट्टहासैर्हसितमिव प्रलयमेघैर्गुलगुलितमिव, समुद्रेण मन्थायितमिव मु] 3 प्रवृत्त प्र ।

मध्यमबुद्धिराह→भ्रात। अलौकिकमिद परिदेवनकारणम् । मनीषिणोक्त→कथम्? तत कथितो मध्यमबुद्धिना समस्तो ऽप्युद्यानगमनादिविद्याधरविकर्त्तनपर्यन्तो वालव्यतिकर ।

## मनीषिकृत उपदेश

तत पूर्वमेव ज्ञातनि शेषव्यतिकरेणापि मुग्धेनेव विस्मितेक्षणेन समस्तमाकर्ण्य मनीषिणाऽभिहित→किमिदृक् सपन्न वालस्य? हा न युक्तमिद, यदि वा कथितमिद मया प्रागेवास्य यथा न सुन्दरोऽनेन स्पर्शनेन पापमित्रेण सार्द्धं सवन्ध, तज्जनितेयमस्यानर्थपरम्परा, तथाहि→हेतुरसावनार्यकार्यसङ्कल्पस्य, अनार्यकार्यसङ्कल्पे वर्त्तमाना प्राणिन सक्लिष्टतया चित्तस्य, प्रवलतया पापोदयस्याप्राप्ताभिप्रेतार्था एव वडिशग्रहणप्रवृत्ता इव मत्स्यका निपतन्त्यापद्गहने, लभन्ते मरणम् । न खल्वनुपायतोऽर्थसिद्धि, अनुपायश्चानार्यकार्यसङ्कल्प सुखलाभानाम्, स हि क्रियमाणो धैर्यं ध्वसयति, विवेक नाशयति, चित्त मलिनयति, चिरन्तनपापान्युदीरयति, तत प्राणिन समस्तानर्थसार्थे योजयति, तत् [तत मु]कुतोऽनार्यसङ्कल्पात् सुखलाभगन्धोऽपीति। तस्मादिद सर्वं सुदुश्चरितविलसित वालस्य, योऽय मद्वचन न विधत्ते किमत्र भवत परिदेवितेनेति । वाल प्राह→मनीषिन्। अलमनेनाऽसम्वद्धप्रलापेन? न खलु सत्पुरुषाणा महार्थसाधनप्रवृत्तानामप्यन्तराले व्यसन मनो दु खयति, यद्यद्यापि ता कमलकोमलतनुलता मदनकन्दलीं प्राप्नोमि तत कियदेतद्दु खम् ? तदाकर्ण्य कालदष्टवदसाध्योऽय सदुपदेशमन्त्रतन्त्राणामित्याकलय्य मनीषिणा गृहीतो दक्षिणभुजाग्रे मध्यमबुद्धि, उत्थाप्य तत स्थानात् प्रवेशित कक्षान्तरे।

## मनीषिमध्यमबुद्ध्यो सगति

अभिहितश्चासौ→भ्रात। यद्येष वाल सत्य वाल इव नात्महित जानीते तत्कि भवताऽस्य पृष्ठतो विलग्नेन विनष्टव्यम्? मध्यमबुद्धिराह—वोधितोऽहमिदानीं भवता, योऽय भवदुपदेशमपि लङ्घयति तेनाल मम वालेनेति । अन्यच्च—अतिलज्जनीयोऽय व्यतिकर, तत्किमेष न ज्ञातस्तातेन । मनीषिणाऽभिहित→न केवलेन, तर्हि? समस्तनगरोपेतेन, भद्र। *केन हि प्रभात कटकेना[पटकेना मु]च्छाद्यते* । मध्यमबुद्धिराह—कथ ज्ञात ? मनीषिणाऽभिहित→कामदेवभवनवृत्तान्तस्तावद् वहुलोकप्रतीत एव कि तस्य ज्ञास्यते? विद्याधरहरणवृत्तान्तस्तु प्राप्त इति त्वदीयहाहारवात्प्रवुद्धास्तदा लोका, तैर्विज्ञाय नगरे प्रचारित। मध्यमबुद्धिना चिन्तित→अये। किलाह मातु पुत्रोऽमु व्यतिकर गोपयामि यावता गाढतर प्रकाश सपन्न, सुप्रच्छन्नमपि हि विहित प्रयोजन प्राय प्रकाशत एव लोके, विशेषत पाप, तस्माद्दुर्वुद्धिरेषा प्राणिना यया स्वाचरित पाप प्रच्छादयन्ति।

## मनीष्यादीनामवस्था

इद हि केवलमधिकतर मोहविलसित सूचयतीत्येव विचिन्त्य ततस्तेनाभिहित→मनीषिन्। अमु वृत्तान्तमुपलभ्य भवता किमाचरितम् ? कि तातेन? किमम्वाभ्याम्? कि वा नगरलोकेन? इति श्रोतुमिच्छामि । मनीषिणाऽभिहित→भ्रात। समाकर्णय, मम तावदुपेक्षा निर्गुणेषु सतामितिभावनया सजात वाल प्रति माध्यस्थ्य, तथा क्लिश्यमानेषु दयावन्त सन्त इति पर्यालोचनया प्रादुर्भूता तवोपरि महती करुणा, तथा मुक्तोऽह पापमित्राभिष्वङ्गजनितानामेवविधानामपायानामित्याकलनया संजाताऽऽत्मन्यास्थावुद्धि, गुणाधिकेषु प्रमोदवन्तो महात्मान इति विमर्शेन धन्य पुण्यभागसौ भवजन्तु येनाय समस्तानर्थहेतु स्पर्शन पापवयस्य सर्वथा निराकृत इत्यालोचयत समुल्लसितस्त प्रति हर्ष। तातेन तु केवलमट्टहासेन हसित, मयाऽभिहित→तात। किमेतत्? तातेनाभिहित→पुत्र। यन्मयि प्रतिकूले सपद्यते तत्सपन्न वालस्य, अतो मे हर्ष। हा जात। क्व गतोऽसि? इति परिदेवित सामान्यस्पया, न सञ्जातो मामकतनयस्यापाय इति हृष्टा चित्तेन मदीयजननी, नगरस्य तु सम्पन्नो वालहरणेन प्रमोद, सञ्जाता त्वदीयगमनेन करुणा, प्रादुर्भूत स्वस्थावस्थानदर्शनेन ममोपरि पक्षपात ।

## लोकाभिप्राय

मध्यमबुद्धिराह→कथमेतल्लक्षित भवता? मनीषिणाऽभिहित→निर्गतोऽहमास [सीत् मु]तदा नगरे कुतूहलेन भ्रमणिकया, तत श्रुता मया परस्पर जल्पन्तो लोका 'यदुत→अहो सुन्दर सपन्न यदसौ कलङ्कहेतुर्निजकुलस्य, दुष्टोऽन्त करणेन, वर्जितो मर्यादया, वहिर्भूत सदाचारात्, निरत सततमगम्यगमने, अत एवोपतापकरो नगरस्य वाल केनापि महात्मनाऽपहृत इति। अन्येनाभिहित→सुष्ठु सुन्दरमेवं तु सुन्दरतर भवति यद्यसौ छिन्नो, भिन्नो, व्यापादितश्च श्रूयते, यतस्तस्मिन्नेकान्तत प्रलीने एव पापे नागरिकाणा शीलसरक्षणं सपत्स्यते, नान्यथा । अन्येनाभिहित सुन्दरमिद, केवल यदसौ मध्यमबुद्धिस्तपस्वी तस्य पृष्ठतो लग्न क्लिश्यते, तन्न चारु, स हि विशिष्टप्राय प्रतिभासतेऽस्माकम् । ततोऽपर प्राह→भद्र। ये पापवृ(प्रवृत्ता प्र)

त्तीना वत्सला भवन्ति तेषा कीदृशी विशिष्टता? न खलु जात्यकनकं श्यामिकया सह ससर्गमर्हति, अत एव लभन्ते तद्द्वारेणैव दु खपरपरा, अयशश्च लोके, किमत्राश्चर्यम्? ये पुनरादित एव पापानुष्ठानाशुभजनसपर्कं रहयन्ति तेषा नैष दोषोऽनुयुज्यते, अत्रार्थे अयमेव मनीषी दृष्टान्त, योऽयं महात्मा परिहृतपापप्रवणवालवात्सल्यो निष्कलङ्कं सुखेन जीवति' इति ? ततस्त लोकवादमाकर्णयता मयेद लक्षितमिति ।

### मध्यमबुद्धेर्बोध

मध्यमबुद्धिना चिन्तितम्→

अये । दोषेषु वर्त्तमानस्य, नरस्यात्रैव जन्मनि । नास्त्येव सुखगन्धोऽपि, केवल दु खपद्धति ॥१॥
स हि दु खभराक्रान्तस्तावता नैव मुच्यते । आक्रोशदानतस्तस्य, लोकोऽन्यद्वैरिकायते ॥२॥
एक स दु खैर्निर्दग्धो, द्वितीय निन्दितो जनै । गण्डस्योपरि सजात, स्फोटो बालस्य दुर्मते ॥३॥
जनाना करुणास्थान, जातोऽह बालमीलनात् । कलितस्तादृश प्राय, कैश्चित्तत्त्वविचारकै ॥४॥
दु खाकर सता निन्द्यो, ममेदानी विजानत । तस्मान्नयुक्त ससर्गो, बालेन सह पापिना ॥५॥
गुणेषु वर्त्तमानस्य, नरस्यात्रैव जन्मनि । जायन्ते सपद सर्वा, यथाऽस्यैव मनीषिण ॥६॥
**तथाहि**–अकलङ्क सुखी नित्य [यथा ह्यकलङ्क सुखी मु] श्लाघनीयो विपश्चिताम्। बालस्पर्शनससर्गभीरुत्वादेष वर्त्तते॥७॥
तथापि लोका दोषेषु, सतत विहितादरा । गुणेषु शिथिलोत्साहा, वर्त्तन्ते पापकर्मण [णा मु] ॥८॥
तदेव गुणदोषाणा, विशेष पश्यता मया । गुणेषु यत्न कर्त्तव्यो, य आदिष्टो मनीषिणा ॥९॥
ततश्चैव विचिन्त्यासौ, बभाषे त मनीषिणम् । न शक्यमधुना लोके, प्रकाशमटितु मया ॥10॥
लोका मा प्रश्नयिष्यन्ति, बालवृत्तान्तमञ्जसा । अतिलज्जाकर त च, नाहमाख्यातुमुत्सहे ॥११॥
अन्यच्च दुर्जना लोका, श्रुत्वा मेऽन्त कदर्थनाम् । तदीया नितरा तुष्टा, हसिष्यन्ति विशेषत ॥१२॥
तस्माद् भ्रात। ममात्रैव, स्थातु सद्मनि युज्यते । जनस्य विस्मरत्येतद्यावद् बालविचेष्टितम् ॥१३॥
मनीषिणोक्त यत्तुभ्य, रोचते तद्विधीयताम् । केवल पापमित्रीय, सपर्को वार्यते मया ॥१४॥

तत क्वचिदपि बहिरनिर्गच्छस्तत्रैव सदने स्थितो मध्यमबुद्धि, गतो मनीषी स्वस्थानम् ।

### स्पर्शनाऽकुशलमालाकृतबालोपबृहणा

इतश्च बालशरीरादाविर्भूत स्पर्शनोऽकुशलमाला च । अकुशलमालयाऽभिहित→साधु पुत्रक। साधु, यन्मत्तो जातोऽनुतिष्ठति तदनुष्ठित भवता, यतो निराकृतस्त्वयाऽयमलीकवाचालो मनीषी । स्पर्शनेनाभिहित→अम्ब। युक्तमेवेदृशपुरुषाणामनुष्ठान, दर्शित खल्वेवमाचरता प्रियमित्रेण मयि निर्भरोऽनुराग । अथवा किमनेन निर्घटितेनेदानीं त्रयाणामप्यस्माक भावसार समसमस्तदु खसुखता, ये तु बृहदर्थसाधनप्रवृत्तानामप्यन्तराले विघ्ना भवन्ति तान् के गणयन्ति ? बाल प्राह→वयमप्येतदेव ब्रूम, केवलमेतत्स मनीषी न जानाति । स्पर्शनेनाभिहित→किं तव तेन? सुखविघ्नहेतुरसौ पापकर्मा भवत, अय जनोऽम्बा च केवल ते सुखकारणम् । बाल प्राह→कोऽत्र विकल्प ? नि सन्दिग्धमिदम् । तत कृतस्ताभ्या योगशक्तिव्यापारपूर्वको भूयस्तदीयशरीरे प्रवेश, प्रादुर्भूत मदनकन्दलीगोचर भृशतरमौत्सुक्य, प्रवृत्तोऽन्तस्ताप, प्रवृत्ता जृम्भिका, पतित शयनीये, तत्र चानवरतमुद्वर्त्तमानेनाङ्गेन तथा विचेष्टमानो दृष्टोऽसौ मध्यमबुद्धिना, समुत्पन्ना करुणा, तथापि मनीषिवचनमनुस्मरता न पृष्टो वार्त्तामपि बालस्तेन।

### राजकुलप्रविष्टबालस्य चेष्टा

अत्रान्तरेऽस्त गतो दिनकर, तत प्रथमप्रदोष एव निर्गतो बाल, अवधीरितो मध्यमबुद्धिना, प्राप्त शत्रुमर्दनराजकुल प्रविष्टोऽभ्यन्तरे, दृष्ट वासभवन, चलितस्तदभिमुख, तत प्रचुरतया लोकस्य, सान्धकारतया प्रदोपस्य, व्यग्रतया प्राहरिकाणा कथञ्चिदलक्षित एवासौ प्रविष्टो वासभवनम् । विलोकितस्तन्मध्यभाग, प्रकाशितो मणिप्रदीपै, सनाथो महार्हशयनेन । इतश्च तस्मिन्नवसरे सा मदनकन्दली तस्यैव वासभवनस्यादूरवर्त्तिन्या प्रसाधनशालिकायामात्मान चर्चयन्ती तिष्ठति, ततस्तच्छून्यमवलोक्य स बाल बालतयैवारूढ शय्यायाम्, आ कोमलेतिभावनया समुद्भूतो हर्ष, क्षिप्तमुच्छीर्षके प्रावरण, किल तिरश्चीनो भविष्यति याव(त्ताव)द्विहिताशेषप्रदोषकर्त्तव्यो विसर्जिताऽऽस्थानिकलोक कतिचिदाप्तपुरुषपरिकरो ज्वलत्प्रदीपदर्शितमार्ग समागत

शत्रुमर्दनस्तद्द्वारदेशे, दृष्ट प्रविशन् बालेन, ततोऽतितेजस्वितया शत्रुमर्दनस्य, सत्त्वविकलतया हृदयस्य, साध्वसहेतुत्वादकार्याचरणस्य, प्रतिकूलतया कर्मविलासस्य, स्वफलदानोन्मुखतयाऽकुशलमालाया, स्वविपाकदर्शन(पटु)तया स्पर्शनस्य, भयोत्कर्षेण वेपमानगात्रयष्टिर्निपतितो बालो भूतले। ततोऽत्युच्चतया पर्यङ्कस्य, कणकणतया मणिकुट्टिमस्य, , शिथिलनि सृष्टतया शरीरस्य, समुत्थितो महानास्फोटरव । किमेतदिति तूर्णतर प्रविष्टो राजा, दृष्टस्तेन, कथमयमिह प्रविष्ट इति समुत्पन्नो मनसि वितर्क, दृष्टमुच्छीर्षके प्रावरण, लक्षित शय्यारोहण, दुष्टोऽयमिति सजातो निश्चयो, मत्कलत्राभिलाषुकोऽयमिति च समुत्पन्न क्रोधो, विज्ञात तस्य दैन्य, तथाप्यतिदुरात्मा खल्वयमपनयाम्यस्य दुर्विनयमितिबुद्ध्या दत्तो बालपृष्ठे निजचरणो राज्ञा, आमोटित पश्चान्मुख भुजयुगल, बद्धो रारटयमानस्तत्प्रावरणेनैव, आहूतो विभीषण ।

## नृपकृतबालविडम्बना मृत्युदडश्च

अभिहितश्चासौ→अरे। एष पुरुषाधमो भवताऽत्रैव राजाऽजिरे यथाऽहमाकर्णयाम्यस्य करुणध्वनित तथा समस्तरजनी कदर्थनीयो, विभीषणेनाभिहित→यदाज्ञापयति देव, तत समाकृष्टस्तेन, गृहीत्वाऽऽरटयमानो बालो नीतोऽभ्यर्णराजप्राङ्गणे, बद्धो वज्रकण्टकाकुले लोहस्तम्भे, [1]ताडित कशाघातै, सिक्तोऽग्निवर्णतैलबिन्दुभि, प्रवेशिता अङ्गुल्यग्रादिष्वय शलाका, ततश्चैवविधेषु नरकाकारेषु दु खेषु विभीषणेनोदीर्यमाणेषु क्रन्दतो बालस्य लङ्घिता रजनी, तदाक्रन्दरवेण श्रवणपरम्परया च किमेतदिति कुतूहलेन प्रभाते समागत राजकुले नगर, दृष्टो बाल, स एवाय पापिष्ठोऽद्यापि जीवतीत्यादि प्रवृत्त परस्पर नागरिकाणा बहुविधस्तदाक्रोशजल्प, तमाकर्णयत शतगुणीभूत तत्तस्य दु ख, कथितो नागरिकेभ्यो विभीषणेन रात्रिव्यतिकर, ततोऽहो धृष्टताऽस्येति गाढतर प्रद्विष्टा सर्वे, विज्ञापितो महत्तमै राजा, यदुत→यो देवपादानामेवमयमपथ्यकारी, स तथा क्रियता यथाऽन्योऽप्येव न करोतीति । अस्ति च तस्य राज्ञो भगवदर्हदागमावदातबुद्धि सुबुद्धिर्नामामात्य, केवल तेन क्वचिदवसरे वर प्रार्थितो राजा यदुत–हिंस्रकर्मणि नाह पर्यालोचनीयो भवता, प्रतिपन्नश्च स वरो नरपतिना, तत सुबुद्धि(अ)पर्यालोच्यैव दत्त शत्रुमर्दनेन राजपुरुषाणा नियमो→यदुत–कदर्थयित्वा बहुप्रकारमेन नरापसद व्यापादयतेति। तदाकर्ण्य महाराज्यलाभ इव जातो जनाना प्रमोदातिशय, तत समारोपितो रासभे विडम्ब्यमान शरावमालया समन्ताच्चूर्ण्यमानो यष्टिमुष्टिमहालोष्टप्रहारै, रोरूयमाणो विरसध्वनिना तुद्यमानो मनसि कर्णकटुकैराक्रोशवचनैर्महता कलकलेन समस्तेषु त्रिकचतुष्कचत्वरहट्टमार्गादिषु बभ्रम्यमाणो विगोपितो बाल। ततो विशालतया नगरस्य, प्रेक्षणकप्रायत्वात्तस्य, भ्रमणेनैवातिक्रान्त दिन, सन्ध्याया नीतो वध्यस्थान, उल्लम्बितस्तरुशाखाया, प्रविष्टो नगर लोको, भवितव्यताविशेषेण तस्य त्रुटित पाशक, पतितो भूतले, गतो मूर्च्छा, स्थितो मृतरूपतया, लु(छु)प्तो वायुना, लब्धा चेतना, प्रवृत्तो गृहाभिमुख गन्तु, भूमिकर्ष(घर्ष)णेन कूजमान।

## अगृहीतसङ्केताया सदेह

अत्रान्तरे अगृहीतसङ्केतयोक्त→हे ससारिजीव। तत्र क्षितिप्रतिष्ठितपुरे प्रथम भवता वीर्यनिधानभूत कर्मविलासो नाम राजा निवेदित, अधुना दशापराधप्रभविष्णुरेष शत्रुमर्दनो निवेद्यते, तत्कथमेतदिति ? ससारिजीवेनाभिहित–मुग्धे। मयापि नन्दिवर्द्धनेन सता पृष्ट एवेद विदुर, ततो विदुरेणाभिहित–कुमार। कर्मविलासस्तत्रान्तरङ्गो राजा, शत्रुमर्दनस्तु बहिरङ्ग, तेन नास्ति विरोध, यतो बहिरङ्गाणामेव राज्ञा दशापराधप्रभविष्णुता भवति बहिरङ्गनगरेषु, नेतरेषा, ते हि केवल सुन्दरासुन्दरप्रयोजनानि जनाना प्रच्छन्नरूपा एव सन्त स्ववीर्येण निर्वर्त्तयन्ति, तथाहि→कर्मविलासप्रतिकूलताजनितोऽय बालस्य परमार्थत सर्वोऽप्यनर्थ सपन्न इति । ततो मयाऽभिहित→अपगतोऽधुना मे सन्देह, अग्रत कथय, विदुरेणाभिहित–तत कृच्छ्रेणातिक्रान्ते याममात्रे रजन्या प्राप्त स्वसदन बाल ।

## मध्यमबुद्धेश्चिन्तनम्

इतश्चाकर्णित प्रभात एव तदीयवृत्तान्तो मध्यमबुद्धिना, ततो बालस्नेहलेशस्यानुवर्त्तमानतया सजातो मनाग् विषाद । चिन्तितमनेन→हा किमीदृश सपन्न बालस्य ? इति, पुन पर्यालोचयत प्रादुर्भूतोऽस्य मनसि प्रमोद । चिन्तितमनेन→पश्यत। अहो मनीषिवचनकरणाकरणयोरिह लोक एवान्तर, तथाहि→तदुपदेशवर्त्तिनो मेऽधुना न सपन्न क्लेश, नोदीर्णमयश, पूर्वं पुनर्विपरीतचारिणो द्वयमप्यासीत्, बालस्य पुनरेकान्ततो मनीषिवचनविपरीताचरणनिरतस्य यत्सपद्यते दु खसघातो, विजृम्भते जगत्ययशपटह, सजायते मरण, तत्र किमाश्चर्यम्? तदस्ति ममापि काचिद् धन्यता, यया मनीषिवचने बहुमान सपन्न

1 [त्रोटित मु]

इति । तथाहि→नैवाभव्यो भवत्यत्र, सता वचनकारक । पक्ति काङ्कटुके नैव, जाता यत्नशतैरपि ॥१॥
एव भावयतश्चित्ते, बालस्नेह विमुञ्चत । प्रमोदपूर्णचित्तस्य, लङ्घित तस्य तद्दिनम् ॥२॥
तत समागते बाले, लोकाचारानुवर्त्तनम् । कुर्वता विहित तेन, तस्य सभाषण किल ॥३॥
पृष्टश्चाशेषवृत्तान्त, विषादगतबुद्धिना । तेनापि कथिता तस्मै, बालेनात्मविडम्बना ॥४॥
न शिक्षणस्य योग्योऽय, मत्वा मध्यमबुद्धिना । ततस्तदनुरोधेन, कृतेषत्परिदेवना ॥५॥
ततश्चूर्णितसर्वाङ्गो, दु खविह्वलमानस । तथा राजभयादुग्राद्, बालस्तत्रैव सश्रित ॥६॥
प्रच्छन्नरूप सतत, न निर्गच्छति कुत्रचित् । एव च तिष्ठतो कालस्तयोर्भूयान् विलङ्घित ॥७॥

## प्रबोधनरतिसूरिसमागम

अथान्यदा निजविलसिताभिधाने जीर्णोद्याने गन्धहस्तीव वरकलभवृन्देन, परिकरित सातिशयगुणवता निजशिष्यवर्गेण, प्रवाह करुणारसस्य, सतरणसेतु ससारसिन्धो, परशुस्तृष्णालतागहनस्य, अशनिर्मानपर्वतोद्दलने, मूलमुपशमतरो, सागर सन्तोषामृतस्य, तीर्थं सर्वविद्यावताराणा, कुलभवनमाचाराणा, नाभि प्रज्ञा(प्राज्ञ)चक्रस्य, वडवानलो लोभार्णवस्य, महामन्त्र क्रोधभुजङ्गस्य, दिवसकरो महामोहान्धकारस्य, निकषोपल शास्त्ररत्ना(सुवर्णा)ना, दावानलो रागपल्लवदहने, अर्गलाबन्धो नरकद्वाराणा, देशक सत्पथाना, निधि सातिशयज्ञानमणीनामायतन समस्तगुणाना, समवसृतस्तत्र पुरे प्रबोधनरतिर्नामाचार्य।

## कर्मविलासस्य मनीषिपक्षपात

इतश्च स्पर्शनप्रतिकूलचारिणमुपलभ्य मनीषिण प्रादुरभूत्कर्मविलासस्य तस्योपरि खरतर पक्षपात । ततोऽसौ शुभसुन्दरी प्रत्याह→'प्रिये! लक्षयत्येव तावदिद भवती, यथाऽनादिरूढा प्रकृतिरिय मम वर्त्तते, यदुत→योऽस्य स्पर्शनस्यानुकूलस्तस्य मया प्रतिकूलेन भाव्य, प्रतिकूलस्य पुनरनुकूलतया वर्त्तितव्य, मम च प्रतिकूलमाचरत सर्वत्राकुशलमालोपकरण, अनुकूल विदधत पुनर्भवती ममोपकरण वर्त्तते, तदेव स्थिते स्पर्शनानुकूलचारिणो बालस्य दर्शितो मयाऽकुशलमालाव्यापारणद्वारेण कश्चिदात्मन प्रतिकूलताफलविशेष, अस्य तु मनीषिण स्पर्शनप्रतिकूलवर्त्तिनो न मयाऽद्यापि निजानुकूलताफलविशेषो दर्शितो, यद्यपि यदिदमस्य स्पर्शने निरभिष्वङ्गतया मृदुशयनसुरतादीन्यनुभवत सपद्यते सुख, यश्चाय समुल्लसितो लोकमध्ये यश पटहो, न च सपन्न क्वचिदपायगन्धोऽपि विचरतस्तस्य अस्य समस्तस्य व्यतिकरस्याहमेव भवत्यैवोपकरणभूतया कारण, तथापि मयि सप्रसादे नैतावन्मात्रमेवास्य फलमुचित,' इति प्रिये! विशिष्टतरफलसपादनार्थमस्य मनीषिणो यत्न कुरुष्वेति ।

## शुभसुन्दर्या योगशक्ति

शुभसुन्दर्युवाच→साधु, आर्यपुत्र! साधु, सुन्दरमभिहित देवेन, स्थित ममापीद हृदये, योग्य एव मनीषी देवप्रसादाना, तदेषाऽनुतिष्ठामि यदाज्ञापित देवेनेत्यभिधाय व्यापारिता शुभसुन्दर्या योगशक्ति, विहितमन्तर्धान, प्रविष्टा(गता)मनीषिशरीरे, प्रादुर्भूतोऽस्य प्रमोद, सिक्तममृतसेकेनाम्बा(त्म)शरीर, प्रवृत्ता निजविलसितोद्यानगमनेच्छा, प्रस्थितस्तदभिमुख, चिन्तितमनेन कथमेकाकी गच्छामि, बहुश्च कालो गृहप्रविष्टस्य तिष्ठतो मध्यमबुद्धेरतीतो, विस्मृतोऽधुना लोकस्य बालवृत्तान्तो, व्यपगत तस्य लज्जाकारण, अतस्तमपि निजविलसितोद्याने नयामीति विचिन्त्य गतो मनीषी मध्यमबुद्धिसमीप, निवेदित तस्मै निजाकूतम्। इतश्च कर्मविलासेन तस्यापि जननी सामान्यरूपा तत्फलविपाकसपत्तये तथैव प्रोत्साहिता, सा ह्यकुशलमालाशुभसुन्दर्यो साधारणवीर्या विचित्रफलदायिनी स्वरूपतो वर्त्तते, ततस्तयाऽ[1]धिष्ठितमूर्त्तेर्मध्यमबुद्धेरपि प्रवृत्ता तत्र गमनेच्छा, बालस्तु भवताप्यवश्य गन्तव्यमिति वदता बलामोटिकया प्रवर्त्तितो मध्यमबुद्धिना, गतास्त्रयोऽपि निजविलसितोद्याने ।

## मनीष्यादित्रयाणा सूरिसमागम

अथ नानाविधैस्तत्र, विलसन्त कुतूहलै । प्रमोदशेखर नाम, प्राप्तास्ते जिनमन्दिरम् ॥१॥
तच्च मेरुवदुत्तुङ्ग, विशाल साधुचित्तवत् । देवलोकाधिक मन्ये, सौन्दर्यौदार्ययोगत ॥२॥
युगादिनाथबिम्बेन, श्रीमता तदधिष्ठितम् । समन्ताद् दूरप्रो(गो)त्तुङ्गप्राकारपरिवेष्टितम् ॥३॥
पुरतो लोकनाथस्य, स्तोत्राणि पठतो मुदा । तत्र श्रावकलोकस्य, ध्वनिमाकर्ण्य पेशलम् ॥४॥
किमेतदिति सचिन्त्य, कौतुकाक्षिप्तमानसा । प्रविष्टा जैनसदने, ते त्रयोऽपि कुमारका [युग्मम्] ॥५॥

---
1 तथा प्र ।

[1]रागद्वेषमहामोहसूचकैर्वीतकल्मष । । हास्यहेतिविलासाक्षमालाद्यैर्हीन। ते नम ॥४१॥
अनन्तगुणसङ्कीर्ण(सपूर्ण प्र)। कियद्वाऽत्र वदिष्यति । तावकस्तवने नाथ। जडबुद्धिरय जन ॥४२॥
सद्भावोऽप्यथवा नाथ।? भवतैवावबुध्यते[2] । तदस्य करुणां कृत्वा, [3]विधातव्यो[4] भवे भवे ॥४३॥
(तथापि गाढसद्भावबा(बो)धात्यर्थ(धाद्यर्थ)मय जन । सद्भावोऽप्यथवा नाथ भवतैवाववुध्यते ॥४३॥
तदस्य करुणा कृत्वा विधातव्या भवे भवे । भवोच्छेदकरी नाथ। भक्तिरात्मनि निश्चला ॥४४॥ (प्र)
सस्तुत्यैव जगन्नाथमुत्थाय जिनमुद्रया । विधाय वन्दन भूय, पञ्चाङ्गनमनादिकम् ॥४४॥
तदन्ते प्रणिधान च, मुक्ताशुक्त्याऽतिसुन्दरम् । कृत्वा कृतार्थमात्मान, मन्यमान सुकर्मणा ॥४५॥

## सूरिकृतधर्मदेशना

सूरे पादयुग सिञ्चन्नानन्दोदकबिन्दुभि । वन्दन द्वादशावर्त्तं, स ददौ दोषसूदनम् त्रिभिर्विशेषकम् ॥४६॥
कृतसामायिकोऽशेषसाधूनानम्य भक्तित । अवाप्तधर्मलाभोऽसौ, निषण्ण शुद्धभूतले ॥४७॥
पृष्टसूरितनूदन्ते, सुबुद्धौ तत्र मन्त्रिणि । अथाचार्या विशेषेण, चक्रिरे धर्मदेशनाम् ॥४८॥
कथित भवनैर्गुण्य, वर्णिता कर्महेतव । प्रख्यापित च निर्वाण, दर्शित तस्य कारणम् ॥४९॥
ततश्चामृतससेकचारुणा वचसा मुने । जातास्ते जन्तव सर्वे, चित्तसन्तापवर्जिता ॥50॥
अत्रान्तरे→नखाशुविशद कृत्वा, ललाटे करकुड्मलम् । जगाद भारतीमेना, स राजा शत्रुमर्दन ॥५१॥
भगवन्। अत्र ससारे, नरेण सुखकामिना । किमादेय प्रयत्नेन, सर्वसम्पत्तिकारणम् ? ॥५२॥

## धर्मस्योपादेयता

सूरिराह[5]→आदेयोऽत्र महाराज। धर्म सर्वज्ञभाषित । स एव भगवान् सर्वपुरुषार्थप्रसाधक ॥५३॥
सोऽनन्तसुखसपूर्णे, मोक्षे नयति देहिनम् । अनुषङ्गेण ससारे, स हेतु सुखपद्धते ॥५४॥
नरपतिरुवाच→यद्येवम्—कस्मात्सर्वे न कुर्वन्ति, त सर्वसुखसाधनम्।धर्मं ससारिण कि वा, क्लिश्यन्ते सुखकाम्यया?॥५५॥
सूरिराह—सुखाभिलाष सुकरो, दुष्करोऽसौ[6] नृपोत्तम। । यतो जितेन्द्रियग्रामस्त साधयति मानव ॥५६॥
अनादिभवकान्तारे, प्राप्तानि परम [7]बलम् । दुर्मेधोभिर्न शक्यन्ते, जेतु तानीन्द्रियाणि वै ॥५७॥
तेनैव जन्तवो मूढा, सुखमिच्छन्ति केवलम् । धर्मं पुन सुदूरेण, त्यजन्ति सुखकारणम् ॥५८॥
नरपतिरुवाच—येषा [8]जयमशक्तिष्ठा, कर्त्तुं नो [9]पारयन्त्यमी । धर्मत प्रपलायन्ते, [10]ततो जीवा सुखैषिण ॥५९॥
कानि तानीन्द्रियाणीह? कि स्वरूपाणि वा मुने? । कथ वा दुर्जयानीति? श्रोतुमिच्छामि तत्त्वत ॥60॥

## इन्द्रियस्वरूपम्

मुनिरुवाच→स्पर्शन रसन घ्राण, चक्षु श्रोत्र च पञ्चमम्.। एतानि तानि राजेन्द्र। हृषीकाणि प्रचक्षते ॥६१॥
इष्टै स्पर्शादिभिस्तोषो, द्वेषवृद्धिस्तथेतरै । एतत्स्वरूपमेतेषामिन्द्रियाणा नृपोत्तम। ॥६२॥
दुर्जयानि यथा तानि, कथ्यमान मयाऽधुना । दत्तावधानरत सर्वमनुश्रुत्यावधारय ॥६३॥
अनेकभटसङ्कीर्णे, समरे योधयन्ति ये । मत्तमातङ्गसंघातमेतैस्तेऽपि विनिर्जिता ॥६४॥
अङ्गुल्यग्रे निधायेद, भुवन नाटयन्ति ये । शक्रादयोऽतिशक्तिष्ठास्तेऽप्यमीभिर्वशीकृता ॥६५॥
हिरण्यगर्भवैकुण्ठमहेश्वरपुरसरा । एतैर्निराकृता सन्त, सर्वे किङ्करता गता ॥६६॥
अधीत्य सर्वशास्त्राणि, परमार्थविदो जना । एभिर्विधुरिता सन्तश्चेष्टन्ते बालिशा इव ॥६७॥
एतानि हि स्ववीर्येण, ससुरासुरमानुषम् । वराकमिव मन्यन्ते, सकल भुवनत्रयम् ॥६८॥
दुर्जयानि ततोऽमूनि, हृषीकाणि नराधिप। । एव सामान्यत कृत्वा, हृषीकगुणवर्णनम् ॥६९॥
ततश्च→ज्ञानालोकेन वृत्तान्त, बोधनार्थं मनीषिण । सूरिर्बभाषे सद्दन्तदीधितिच्छुरिताधर ॥70॥
अथवा महाराज।—तिष्ठन्तु तावच्छेषाणि, हृषीकाणि जगज्जये । स्पर्शनेन्द्रियमेवैक, समर्थं बत वर्त्तते ॥७१॥

---

1 हास्यादिभिर्वक्ष्यमाणै । 2 जगत्या यद्विकाश स्यात्पद्माना पद्मबन्धुना (इति भवेत् पुरतोऽत्र) 3 विधातव्या प्र । 4 सद्भाव ।
5 रुवाच प्र । 6 धर्म । 7 कलम् प्र । 8 असमर्था नरा । 9 समर्था भवन्ति । 10 असमर्थत्वात् ।

यतो न शक्यते लोकैर्जेतुमेकैकमप्यद । लीलया जयतीद तु, भुवन सचराचरम् ॥७२॥
नरपतिस्वाच→भगवस्तस्य जेतारो, नरा कि सन्ति कुत्रचित्? । आहोस्विन्नेव विद्यन्ते, भुवनेऽपि तथाविधा ॥७३॥

## उत्कृष्टतमादिचतुर्विधेपूत्कृष्टतमस्वरूपम्

मुनिस्वाच→राजन्न हि न विद्यन्ते, केवल विरला जना । ये चास्य विनिहन्तारस्तत्राकर्णय कारणम् ॥७४॥
जघन्यमध्यमोत्कृष्टास्तथोत्कृष्टतमा गुणै । चतुर्विधा भवन्तीह, पुरुषा भुवनोदरे ॥७५॥
त(तेऽ)थोत्कृष्टतमास्तावद्वैरिद स्पर्शनेन्द्रियम् । अनादिभवसम्बन्धलालित पालित प्रियम् ॥७६॥
जैनेन्द्रागमसम्पर्काद्विज्ञाय बहुदोपकम् । तत सन्तोपमादाय, महासत्त्वैर्निराकृतम् [युग्म] ॥७७॥
गृहस्था अपि ते सन्तो, ज्ञाततत्त्वा जिनागमे । स्पर्शनेन्द्रियलोल्येन, नाचरन्ति कुचेष्टितम् ॥७८॥
यदा पुनर्विशेपेण, तिष्ठेत्तेपा जिनागम । स्पर्शनेन्द्रियसम्बन्ध, त्रोटयन्ति तदाऽखिलम् ॥७९॥
यतो दीक्षा समादाय, निर्मलीमसमानसा । सन्तोपभावतो धन्या, जायन्तेऽत्यन्तनिःस्पृहा ॥80॥
ततस्ते भवकान्तारनिर्विण्णा वीतकल्मपा । स्पर्शनप्रतिकूलानि, सेवन्ते धीरमानसा ॥८१॥
भूमिशयनलोचादिकायक्लेशविधानत । तत सुखस्पृहा हित्वा, जायन्ते ते निराकुला ॥८२॥
तत मकलकर्मांशक्लेशविच्छेदभाजनम् । भूत्वा ते निर्वृति यान्ति, निर्जित्य स्पर्शनेन्द्रियम् ॥८३॥
तेनोत्कृष्टतमा राजन्! निर्दिष्टास्ते विचक्षणे । ये चेवमनुतिष्ठन्ति, विरलास्ते जगत्त्रये ॥८४॥

## मनीषिचितसङ्कल्प

ततो भागवत वाक्यमाकर्ण्येद मनीपिण । अभूच्चेतसि सङ्कल्पस्तदानी चारुचेतस ॥८५॥
अये भगवता यादृग्, वर्णित स्पर्शनेन्द्रियम् । अत्यन्तविपम लोके, स्पर्शनस्तादृश परम् ॥८६॥
यतो बोधप्रभावेन, मम पूर्वं निवेदित । यथाऽन्तरङ्गनगरे, वास्तव्योऽय महावल ॥८७॥
तन्नून पुरुषव्याजसस्थित स्पर्शनेन्द्रियम् । अस्मान् प्रतारयत्येतदन्यथा कथमीदृशम् ? ॥८८॥
तथा भगवताऽऽदिष्टा, ये चोत्कृष्टतमा नरा । कथित स्पर्शनेनापि, भवजन्तुस्तथाविध ॥८९॥
तथाहि मा निराकृत्य, सदागमबलेन स । सन्तोपान्निर्वृति प्राप्त, इति तेन निवेदितम् ॥90॥
तस्मान्नास्त्यत्र सन्देह, साम्प्रत पुरुपत्रयम् । श्रुत्वाऽशेप विजानामि, यदत्र परमाक्षरम् ॥९१॥
अय हि भगवान् सूरिर्भुवन सचराचरम् । ज्ञानालोकेन जानीते, सन्देहदलन परम् ॥९२॥
यावत्स चिन्तयत्येव, साकूतो विस्मितेक्षण । तावल्लक्षितचित्तेन, पृष्टो मध्यमबुद्धिना ॥९३॥
कथम्?– मनीपिन्! नितरा चित्ते, भावितस्त्व विलोक्यसे । किमत्र भवता किञ्चित्सतत्त्वमवधारितम्? ॥९४॥
मनीपणोक्त कि भ्रात! भवता कि न लक्षितम्? । किमेव स्फुटवाक्येन, कथयत्यपि सन्मुनौ ॥९५॥
अनेन हि समादिष्ट, यादृश स्पर्शनेन्द्रियम् । वयस्यस्तावकस्तादृक्, स्पर्शनो नात्र सशय ॥९६॥
कथमेतत्तत पृष्टे, पुनर्मध्यमबुद्धिना । आख्यात कारण तेन, निःशेप तु मनीपिणा ॥९७॥

## बालस्य बालता

वालस्तु पापकर्मत्वात्केवल वीक्षते दिश । अनादरपरस्तत्र, हितेऽपि वचने गुरो ॥९८॥
अथ राज्ञ समीपस्था, पिवन्ती वचनामृतम् । आचार्यीय विशालाक्षी, राज्ञी मदनकन्दली ॥९९॥
सा दृष्टा तेन वालेन, ततोऽस्य हृदि सस्थितम् । नून मे हृदयस्येष्टा, सेय मदनकन्दली ॥100॥
यतोऽवदातमेतस्यास्ता(त)पनीयसमप्रभम् । शरीर दर्शनादेव, मृदुता सूचयत्यलम् ॥१०१॥
रक्तराजीवसच्छाय, विभाति चरणद्वयम् । अलक्षितसिराजाल, कूर्मोन्नतमनुत्तमम् ॥१०२॥
विभर्ति तोरणाकार, भवने माकरध्वजे । जङ्घायुग्म स्वसौन्दर्यादेतस्यास्तेन राजते ॥१०३॥
मेखलाया कलापेन, वद्धमन्मथवारणम् । नितम्वविम्वमेतस्या, विशालममृतायते ॥१०४॥
भारेणेव वशीभूतो, विराजितवलित्रय । एतस्या राजते मध्यो, रोमराजिविभूपण ॥१०५॥
गम्भीरा सज्जनस्येव, हृदय सुमनोहरा । राजते नाभिरेतस्या सत्कामरसकूपिका ॥१०६॥

वहत्येषा स्तनौ वृत्तौ, पीवरौ कुम्भविभ्रमौ । उत्तुङ्गकठिनौ चारू हृदयेन पयोधरौ ॥१०७॥
अन्यच्च धारयत्येषा, सुकुमार मनोहरम् । पुण्यप्राग्भारसम्प्राप्य, रम्य बाहुलताद्वयम् ॥१०८॥
कराभ्यां निर्जितौ मन्ये, नूतनौ रागसुन्दरौ । एतस्याश्चारूरूपाभ्या, रक्ताशोकस्य पल्लवौ ॥१०९॥
दधत्या पारिमाण्डल्य, कन्धराया सुवेधसा । कृत रेखात्रय मन्ये, त्रिलोकजयसूचकम् ॥110॥
अधरो विद्रुमच्छेदसन्निभो भाति पेशल. । राजेते विलसद्दीप्ती, कपोलौ कोमलामलौ ॥१११॥
ये कुन्दकलिकाकारा, विलसत्किरणोत्करा । एतस्या वदने दन्ता, भान्ति ते भुवनत्रये ॥११२॥
सितासित सुविस्तीर्णं, ताम्रराजिविराजितम् । पक्ष्मल जनितानन्दमेतस्या लोचनद्वयम् ॥११३॥
उत्तुङ्गो नासिकावशो, भ्रूलते दीर्घपक्ष्मले । अस्या ललाटमलकै, कलित बत राजते ॥११४॥
अनुरूप करोमीति, नून जात प्रजापते । बहुमानो निजे चित्ते, कृत्वाऽस्या श्रवणद्वयम् ॥११५॥
मालतीकुसुमामोदमोदितालिकुलाकुल । अस्या सुस्निग्धकुटिल, केशपाशो विराजते ॥११६॥
एतस्या मन्मथोल्लापानाकर्ण्य श्रुतिपेशलान् । मन्ये स्वविस्वरत्वेन, लज्जिता किल कोकिला ॥११७॥
उच्चिच्योच्चिच्य यत्सारमेतस्या वरपुद्गलै । धात्रा विनिर्मित रूपमन्यथा कथमीदृशम्? ॥११८॥
अतोऽस्यास्तादृश स्पर्शो, युक्त एव न सशय । न जात्वमृतकुण्डेषु, कटुत्वमवतिष्ठते ॥११९॥
एषाऽप्यभिलषत्येव, मा यतोऽर्धनिरीक्षितै । निरीक्षतेऽतिलोलाक्षी, स्निग्धदृष्ट्या मुहुर्मुहु ॥120॥
एवविधविपर्यासविकल्पाकुलमानस । स बालोऽलीकसौभाग्यगर्वितो मूढता गत ॥१२१॥

## उत्कृष्टनरस्वरूपम्

सूरिस्वाच→तदेव कथितास्तावत्सर्वोत्कृष्टा मया नरा । इदानीमुत्कृष्टाना (तु), यत्स्वरूप तदुच्यते ॥१२२॥
एवञ्च वदति भगवति सूरौ—चारूक्त सूरिणा चारु,परिचिन्त्य मनीषिणा। श्रोतव्य भवताऽपीद,मध्यबुद्धि प्रचोदित ॥१२३॥
सूरिस्वाच→उत्कृष्टास्ते नरा ज्ञेया, यैरिद स्पर्शनेन्द्रियम् । अवाप्य मानुष जन्म, शत्रुबुद्ध्याऽवधारितम् ॥१२४॥
भाविभद्रतया तेषा, परिस्फुरति मानसे । न चैतत्सुन्दर हन्त, जीवाना स्पर्शनेन्द्रियम् ॥१२५॥
ततो बोधप्रभावेन, लक्षयन्त्यपि ते नरा । कुर्वन्तोऽन्वेषण तस्य, मूलशुद्धि परिस्फुटाम् ॥१२६॥
ततो विज्ञाय ते तस्य, लोकवञ्चनता नरा । सर्वत्र चकिता नैव, विश्वसन्ति कदाचन ॥१२७॥
न चानुकूलचारित्व, भजन्ति विजितस्पृहा । ततस्तज्जनितैर्दोषैर्न युज्यन्ते विचक्षणा ॥१२८॥
शरीरस्थितिमात्रार्थमाचरन्तोऽपि तत्प्रियम् । तत्र गृद्धेरभावेन, भवन्ति सुखभाजनम् ॥१२९॥
प्राप्नुवन्ति यश. शुभ्रमिह लोकेऽपि ते नरा । स्वर्गापवर्गमार्गस्य, निकटे तादृशाशया· ॥130॥
गुरव केवल तेषा, नाममात्रेण कारणम् । मोक्षमार्गे प्रवर्त्तन्ते, स्वत एव हि ते नरा ॥१३१॥
अन्येषामपि कुर्वन्ति, ते सन्मार्गावतारणम् । तद्वाक्य ये प्रवर्त्त(पद्य)न्ते, विज्ञाय गुणकारकम् ॥१३२॥
ये पुनर्न प्रपद्यन्ते, तद्वाक्य बालिशा जना । तेषामनादर कृत्वा, ते तिष्ठन्ति निराकुला ॥१३३॥
प्रकृत्यैव भवन्त्येते, देवाचार्यतपस्विनाम् । पूजासत्कारकरणे, रतचित्ता महाधिय ॥१३४॥
एव भाषिणि च भगवति प्रबोधनरतिसूरौ मनीषिणा चिन्तितम्→
उत्कृष्टाना यथैवेद,(यथेदमुत्कृष्टानाम् प्र)श्लाघित चरित नृणाम् । तथानुभवसिद्ध मे किञ्चिदात्मनि भासते ॥१३५॥
मध्यमबुद्धिना चिन्तित—उत्कृष्टपुसा यादृक्षा, गुरुणा वर्णिता गुणा। एते गुणा पर सर्वे, घटन्तेऽत्र मनीषिणि ॥१३६॥

## मध्यमा नरा

गुरुस्वाच→तदेव तावदुत्कृष्टा, वर्णिता पुरुषा मया । अधुना मध्यमाना यत्स्वरूप तन्निबोधत ॥१३७॥
मध्यमास्ते नरा ज्ञेया, यैरिद स्पर्शनेन्द्रियम् । अवाप्य मानुष जन्म, मध्यबुद्ध्याऽवधारितम् ॥१३८॥
स्पर्शनेन्द्रियसम्पाद्ये, ते सुखे गृद्धमानसा । पण्डितैरनुशिष्टाश्च, दोलायन्ते स्वचेतसा ॥१३९॥
चिन्तयन्ति निजे चित्ते, ते दोलायितबुद्धय । विचित्ररूपे ससारे, किमत्र बत कुर्महे? ॥140॥
भोगानेके प्रशसन्ति, रमन्ते सुखनिर्भरा । अन्ये शान्तान्तरात्मानो, निन्दन्ति विगतस्पृहा

इतश्च–मत्सङ्गेनैव तातोऽपि, भद्रको जिनशासने । तत सा मामिका तस्य, प्रार्थना रुचिरा(ता प्र)मता ॥२५॥
आह च–राज्य पुत्र । तवायत्तमायत्त तव जीवितम् । स्वाभिप्रेतमत कुर्वन्न त्व मा प्रष्टुमर्हसि ॥२६॥
ततोऽह हर्षपूर्णाङ्ग, पतितस्तातपादयो । महाप्रसाद इत्येव, ब्रुवाण प्रीतमानस ॥२७॥
तत प्रभृति सर्वोऽपि, यो नमस्कारधारक । सोऽन्त्यजोऽपि निजे देशे, बन्धुबुद्ध्या मयेक्षित ॥२८॥
भोजनाच्छादनैर्दिव्यैरलङ्कारै सरत्नके । धनेन च यथाकाम, भृत साधर्मिको जन ॥२९॥
अन्यच्च–अर्हतो यो नमस्कार, धत्ते पुण्यधनो जन । स देशे घोषणापूर्वं, विहितोऽकरदो मया ॥30॥
साधव परमात्मान, साध्व्य परमदेवता । गुरव श्रावका लोका, ममेति ख्यापित मया ॥३१॥
जिनेन्द्रशासने भक्ति, य कश्चित् कुरुते जन । आनन्दजलपूर्णाक्षस्तमह बहुश स्तुवे ॥३२॥
यात्रास्नात्रमहोत्सर्गे, प्रमोदमुदिताशया । विचरन्ति स्म जैनेन्द्रास्तत सर्वत्र सज्जना ॥३३॥
तथाभिनवधर्माणो, ये मौनीन्द्रमते स्थिता । कृता विशेषतस्तेषा, सपर्या भावतो मया ॥३४॥

## दुर्मुखामात्यकृतपैशुन्यम्

ततो मदनुरागेण, लोका धर्मपरायणा । बहवस्तत्र सपन्ना, *यथा राजा तथा प्रजा* ॥३५॥
अथ त तादृश वीक्ष्य, प्रमोद जिनशासने । अमात्यो दुर्मुखो नाम, पाप प्रद्वेषमागत ॥३६॥
ततो रहसि ताताय, स दुरात्मा हित किल । युष्मभ्यमहमित्येव, प्रख्याप्य शठमानस ॥३७॥
इद न्यवेदयद्देव । नेव राज्यस्य पालना । उच्छृङ्खलीकृता सर्वे, कुमारेण यतो जना ॥३८॥
नातिक्रामन्ति मर्यादा, लोका हि करभीरव । ते मुक्ता मुत्कलाचारा, कमनर्थं न कुर्वते? ॥३९॥
राजदण्डभयादेव, देव । लोको निरङ्कुश । उन्मार्गप्रस्थितस्तूर्णं, करीव विनिवर्त्तते ॥40॥
उद्दण्डोऽनार्यकार्येषु, वर्तमान स केवलम् । प्रतापहाने राज्ञोऽपि, लाघव जनयत्यलम् ॥४१॥
अन्यच्चाऽत्राऽधुना भूरिलोको जैनमते स्थित । क कुमारप्रसादार्थी, नाश्रयेत्तत् सकर्णक ? ॥४२॥
एवं च–करहीने जने जाते, यथेष्टप्रविचारिणि । कस्याऽत्र यूय राजान, कि वा राज्य विनाऽऽज्ञया? ॥४३॥
तदिद यत् कुमारेण, देव। प्रारभ्य(याऽ) लौकिकम् । राजनीते समुत्तीर्णं, बुध्यते तन्न सुन्दरम् ॥४४॥
तात प्राहार्य। यद्येव, स्वयमेवोच्यता त्वया । कुमारो न वय तस्य, सम्मुख भाषितु क्षमा ॥४५॥

## कुमारदुर्मुखयोर्विवाद

ततश्च–तातानुज्ञामवाप्यैव, दुर्मुखो मामभाषत । कुमार। नेदृशी नीतिर्नृपतेर्लोकपालने ॥४६॥
यत.–करापीतजगत्सारो, महसा व्याप्तभूतल । राजा दिनकराकारो, लोकस्योपरि तिष्ठति ॥४७॥
यस्तु प्राकृतलोकस्य, वशग स्यान्महीपति । तस्य स्यात्कीदृश राज्यम्? को वा न्यायस्तदाज्ञया? ॥४८॥
राजदण्डभयाऽभावात्ततो लोका निरङ्कुशा । दुष्टचेष्टितमार्गेषु, प्रवर्त्तन्ते यथेच्छया ॥४९॥
तदेव स्थिते–आदित करदण्डाभ्या, यस्तान्नो शास्ति भूपति । तेनैव परमार्थेन, सत्कृतो धर्मसम्प्लव ॥50॥
कुमार । तदिद ज्ञात्वा, राजधर्मव्यतिक्रमात् । नाऽलीक धर्मवात्सल्य, युक्त कर्तुं भवादृशाम् ॥५१॥
तत प्रादुर्भवत्कोपविह्वलीभूतचेतसा । आकारसवर कृत्वा, मया त प्रति भाषितम् ॥५२॥
आर्य। युक्तमिदं वक्तुमेव मा प्रति यद्यहम् । दुष्टवष्टादिलोकस्य, कुर्यां सन्मानपूजनम् ॥५३॥
ये तु स्वगुणमाहात्म्याद्देवानामपि पूजिता । तेषा यथेच्छदानेऽपि, नैतत्सवध्यते वच ॥५४॥
तथाहि–ये चौर्यपारदार्यादे, सर्वस्माद्दुष्टचेष्टितात् । स्वत एव महात्मानो, निवृत्ता सर्वभावत ॥५५॥
तेषा जैनेन्द्रलोकाना, दण्ड स्यात् कुत्र कारणे? । दण्डबुद्धिर्भवेत्तेषु, यस्यासौ दण्डमर्हति ॥५६॥
करोऽपि रक्षणीयेषु, लोकेषु ननु बुध्यते । तस्यापि नोचिता जैना, ये गुणैरेव रक्षिता ॥५७॥
अत किङ्करता मुक्त्वा, नान्यत्किञ्चन भूभुजाम् । विधातु युक्तमेतेषा, सैवास्माभिर्विधीयते ॥५८॥
*येषा नाथो जगन्नाथो, भगवास्तेषु किङ्कर. । य स्याद्राजा स एवात्र, राजा शेषास्तु किङ्करा* ॥५९॥
एव चाचरता ब्रूहि, राजनीतेर्विलङ्घनम् । कि मया विहित येन, भवानेव प्रजल्पति ? ॥60॥

सकारण तदीयमपक्रमण, ततो जीवति कुमार इतिकृत्वा प्रत्यागता राज्ञश्चेतना, पृष्टश्चतुर, क्व पुनर्गत कुमार इति । चतुरेणाभिहित–न मे किञ्चिदाख्यात कुमारेणाऽपक्रमणकारणमिति, चतुरतया मया लक्षित केवलमेतावद्वितर्कयामि यदुत–जयस्थले पितृष्वसु समीपे गतो भविष्यति, वल्लभा हि नन्दा कुमारस्य, वत्सल पद्मराज, कुमारपरिचयादेवावगतमिद मया, इतो निर्गतस्य तत्रैव चित्तनिर्वाण, नान्यत्रेति । तत साधु चतुर । विज्ञात साधु, इतिवदता दापित चतुराय पारितोषिक महादानं राज्ञा, अयमस्यानर्थव्यतिकरस्य हेतुरितिकृत्वा निर्वासित स्वविषयात्सगोत्रो दुर्मुख, प्रतिज्ञात च देवीनृपाभ्या यथा 'यावत् कुमारवदन साक्षान्नावलोकित तावन्नैवावाभ्यामाहारशरीरसस्कारादिक करणीयमिति ।

## विमलाननारत्नवत्यो स्वयवरार्थमागमनम्

इतश्च तत्रैव दिने प्रविष्टो दूत, तेन च विहितोचितप्रतिपत्तिना निवेदित कनकचूडाय, यथा देव । अस्ति विशाला नाम नगरी । तस्या नन्दनो नाम राजा । तस्य च द्वे भार्ये–प्रभावती पद्मावती च । तयोश्च यथाक्रम द्वे दुहितरौ–विमलानना रत्नवती च । इतश्च कनकपुरे प्रभावत्या सहोदरोऽस्ति प्रभाकरो नाम राजा, तस्य बन्धुसुन्दरी नाम भार्या, तस्याश्च विभाकराभिधानस्तनय, तयोश्च प्रभाकरप्रभावत्यो पूर्वमजातयोरेव विभाकरविमलाननयो परस्परमभूज्जल्प यदुत–आवयोर्यस्य कस्यचिद्दुहिता जायेत, तेनेतरसम्बन्धिने सुताय सा देयेति । अत पूर्वप्रतिपन्ना सा विमलानना विभाकरस्य । अन्यदा गुणसभारगर्भनिर्भर वन्दिभिरुद्घुष्यमाण श्रुत तया कनकशेखरकुमारनामक, ततस्तदाकर्ण्य सा विमलानना कुमारे विजृम्भितानुरागातिरेका निजयूथपरिभ्रष्टेव हरिणिका, सहचरवियुक्तेव चक्रवाकिका, नाकनिर्वासितेव देवाङ्गनिका, मानससर समुत्कण्ठितेव कलहसिका, ग्लहविरहितेव द्यूतकरी, शून्यहृदयतया न वादयति वीणा, न विलसति कन्दुकलीलया, न विधत्ते पत्रच्छेद्यादिक, नाभ्यस्यति चित्रादिकला, न कुरुते शरीरस्थिति, न ददाति कस्यचिदुल्लाप, न लक्षयति रात्रिन्दिन, केवल निष्पन्दमन्दनिश्चललोचना परमयोगिनीव निरालम्बन किमपि ध्यायन्ती तिष्ठति । तत पर्याकुलीभूत परिकरो न जानीते तादृशविकारस्य कारण, ततोऽतिवल्लभत्वेन सदा सन्निहिततया लक्षितोऽसा रत्नवत्या विकारहेतु । य(त?)श्चिन्तित तया–अये। कनकशेखर–कुमारनामग्रहणादनन्तरमिदमवस्थान्तरमस्या सपन्न, अतो निश्चितमेतत्–तेनैव प्रियभगिन्या मनश्चोरित, तदिदमत्र प्राप्तकाल, निवेदयाम्येवस्थितमेव ताताय, येन तात एव तस्य प्रियभगिनीचित्तचौरस्य निग्रह करोतीति विचिन्त्य निवेदित तया सर्वं नन्दननरपतये । चिन्तितमनेन–दत्तेवेय जनन्या विभाकराय, तथापि नान्यथाऽधुनाऽस्या जीवितमितिकृत्वा प्रेषयामि तस्यैव कनकशेखरस्य स्वयवरामेना, यतो नेदृशावस्थायामस्या युक्त कालविलम्ब, पश्चादेव विभाकर सभालयिष्याम। ततो वत्से । धीरा भव, मुञ्च विषाद, गच्छ कुशावर्त्ते कनकशेखरायेति मधुरवचनैरालप्य देवेन सह महापरिजनेन प्रस्थापिता तत्र विमलानना । रत्नवत्यापि विज्ञापितो देव यथा तात । नाहमनया रहिता क्षणमपि जीवितुमुत्सहे, ततो मयाऽपि यातव्यमित्यनुजानीत यूय, केवल न मम कनकशेखरो भर्ता, यत *सापत्न्य नारीणा महदेव स्नेहत्रोटकारण* ततो मया तदिष्टस्य वयस्यस्य कस्यचिद्भार्यया भाव्यमिति । देवेनाभिहित–वत्से। यत्ते रोचते तदेव समाचर, न खलु वत्सा स्वयमेवानुचितमाचरिष्यति । ततो महाप्रसाद इति वदन्ती प्रवृत्ता रत्नवती, ततोऽनवरतप्रयाणकै प्राप्ते ते विमलाननारत्नवत्यौ अद्यास्मिन्नगरे, स्थिते बहिस्थाने, प्रहितोऽहममुमर्थं विज्ञापयितु देवपादमूल, एतदाकर्ण्य देव प्रमाणमिति । ततस्तद्दूतवचनामाकर्ण्य कनकचूडराजो हर्षविषादपूरितहृदय कन्यावासकदानार्थ व्यापार्य शूरसेनबलाधिकृतमस्मान् सुमतिवराङ्गकेसरिण प्रधानमहत्तमान् प्रत्याह–पश्यत। अहो परमानन्दकारणमपीदमस्माक नन्दनराजदुहित्रोरागमन कुमारविरहानलसर्पिष्प्रक्षेपकल्पतया क्षते क्षारनिषेकतुल्य प्रतिभासते, तद् गच्छत शीघ्र यूय जयस्थले निश्चितमेतत्तत्रैवास्ते कुमार । निवेदयत पद्मराजनृपतये मदीयावस्था कन्यागमन च कारणद्वयमवगम्य प्रहेष्यत्येव कुमार पद्मराज । अन्यच्च नन्दिवर्धनकुमारोऽपि पद्मराजमनुज्ञाप्य युष्माभिरानेय, यत स एवोचितो वरो रत्नवत्या। ततोऽस्माभिरभिहित–यदाज्ञापयति देव, ततश्चेहामुना प्रयोजनेन समागता वयमिति । तदिद सर्वमस्मध्यमेतैराख्यात, तदेव स्थिते यद्यपि युष्मद्विरहकातरहृदयतया नेदमस्माभिरभिधातु शक्य तथाऽपि महाप्रयोजनमित्याकलय्याभिधीयते यदुत–मा कुरुताधुना कालविलम्ब गच्छतातित्वरया कुशावर्त्ते, जनयत द्वावपि युवा कनकचूडराजचित्तानन्दमिति । तत शोभनमाज्ञापित तातेन, भविष्यत्येव कनकशेखरेण सह ममावियोग इति चिन्तयता मया कनकशेखरेण चाभिहित–यदाज्ञापयति तात । ततस्तोषनिर्भरेण तातेन तस्मिन्नेव क्षणे सज्जीकारित प्रस्थानोचित चतुरङ्ग बल, नियुक्ता महत्तमा, कारिताशेषमाङ्गलिककर्तव्यौ प्रस्थापितावावामिति । प्रवृत्तोऽन्तरङ्गपरिजनमध्ये मया

सहाभिव्यक्तरूपो वैश्वानर, पुण्योदयोऽपि प्रवृत्त एव केवल प्रच्छन्नरूपतया, ततो दत्त प्रयाणक, लङ्घित कियानपि मार्ग।

### रौद्रचित्तनगरवर्णनम्

इतश्च–निवासस्थान दुष्टलोकाना, उत्पत्तिभूमिरनर्थवेतालाना, द्वारभूत नरकस्य, कारण भुवनसन्तापस्य, तस्करपल्लिप्रायमस्ति रौद्रचित्त नाम नगरम् ।

तथाहि–उत्कर्त्तनशिरश्छेदयन्त्रपीडनमारणै । ये भावा सत्त्वसङ्घस्य, घोरा सन्तापकारिण ॥१॥
ते लोकास्तत्र वास्तव्या, रौद्रचित्तपुरे सदा । तस्मात्तद्दुष्टलोकाना, *निवासस्थान*मुच्यते ॥२॥
कलह प्रीतिविच्छेदस्तथा वैरपरम्परा । पितृमातृसुतादीना, मारणे निरपेक्षता ॥३॥
ये चान्येऽनर्थवेताला, लोके सम्भावनाऽतिगा । ते रौद्रचित्ते सर्वेऽपि, सपद्यन्ते न सशः ॥४॥
*उत्पत्तिभूमिस्ततेषा,* पत्तन तेन गीयते । यथा च नरकद्वार, तथेदानी निगद्यते ॥५॥
ये सत्त्वा नरक यान्ति, स्वपापभरपूरिता । ते तत्र प्रथम तावत्प्रविशन्ति पुराधमे ॥६॥
अत प्रवेशमार्गत्वात्तस्य निर्मलमानसै । गीत *तन्नरकद्वार,* रौद्रचित्तपुर जनै ॥७॥
ये जीवा क्लिष्टकर्माणो, वास्तव्यास्तत्र पत्तने । ते स्वय सतत तीव्रदु खग्रस्तशरीरका ॥८॥
तथा परेषा जन्तूना, दु खसङ्घातकारिण । अतो *भुवनसन्तापकारण* तदुदाहृतम् ॥९॥
किञ्चात्र बहुनोक्तेन ? नास्ति प्रायेण तादृशम् । रौद्रचित्तपुर यादृग्भुवनेऽपि पुराधमम् ॥10॥

### दुष्टाभिसन्धिराजवर्णनम्

तत्र रौद्रचित्तनगरे सङ्ग्रहपरश्चौराणां, परमशत्रु शिष्टलोकाना, विषमशील प्रकृत्या, विलोपको नीतिमार्गस्य, चरटप्रायो दुष्टाभिसन्धिर्नाम राजा ।

तथाहि–मानोग्रकोपाहङ्कारशाठ्यकामादितस्करा । दुष्टाभिसन्धि सर्वेऽपि, नरेन्द्र पर्युपासते ॥१॥
अतोऽन्तरङ्गचौराणा, तेषा पोषणतत्पर । स राजा गीयते लोकै*श्चौरसङ्ग्रहणे* रत ॥२॥
सत्यशौचतपोज्ञानसयमप्रशमादय। ये चापरे सदाचारा, शिष्टलोका यशस्विन ॥३॥
दुष्टाभिसन्धि सर्वेषा, तेषामुन्मूलने रत । अताऽसौ *परम शत्रु, शिष्टाना*मिति गीयते ॥४॥
बह्वीभिर्वर्षकोटीभिर्धर्मध्यान यदर्जितम् । लोकेन तद्दहत्येष, क्षणमात्रेण दारुण ॥५॥
न चास्य तोषणोपायो, मुग्धलोकैर्विभाव्यते । अतो *विषमशीलोऽसौ, प्रकृत्या* प्रतिपाद्यते ॥६॥
सर्वा सन्नीतयस्तावत्प्रवर्तन्ते जगत्त्रये । दुष्टाभिसन्धिर्नो यावत्तासा विघटको भवेत् ॥७॥
प्रादुर्भावे पुनस्तस्य, क्व धर्म ? क्व च नीतय ? । तेनासौ *नीतिमार्गस्य* धीरैर्गीतो *विलोपक* ॥८॥

### निष्करुणतादेवीस्वरूपम्

तस्य च दुष्टाभिसन्धिनरेन्द्रस्यानभिज्ञा परवेदनाना, कुशला पापमार्गे, वत्सला चरटवृन्दस्यानुरक्तचित्ता निजे भर्तरि पूतनाकारा निष्करुणता नाम महादेवी ।

तथाहि–दुष्टाभिसन्धिना तेन, नानाकारै कदर्थनै । चिर कदर्थित दीन, लोकमालोक्य सस्मिता ॥१॥
सा निष्करुणता देवी, दु ख गाढतरं तत । जनयेत्तस्य नो वेत्ति, तेन सा *परवेदनाम्* ॥२॥
नेत्रोत्पाटशिरश्छेदनासिकाकर्णकर्त्तनम् । उत्कर्त्तन त्वचोऽङ्गस्य, खदिरस्येव कुट्टनम् ॥३॥
ये चान्ये जन्तुपीडाया, प्रकारास्तेषु कौशलात् । सा निष्करुणता देवी, *पापमार्गे विचक्षणा* ॥४॥
ये ये भुवनसन्तापकारिणो दुष्टवष्टका । रौद्रचित्तपुरे लोका, सन्ति द्रोहादय खला ॥५॥
ते तेऽतिवल्लभास्तस्यास्ते ते सर्वस्वनायका । अत*श्चरटवृन्दस्य,* देवी सा*ऽत्यन्तवल्लभा* [युग्मम्] ॥६॥
दुष्टाभिसन्धिराजेन्द्र, त भर्त्तार दिवानिशम् । मन्यते परमात्मान, सा शुश्रूषापरायणा ॥७॥
न मुञ्चति च तद्देह, सवाहयति तद्बलम् । *अनुरक्ता निजे पत्यौ,* सा देवी तेन वर्ण्यते ॥८॥

### हिंसानाम कन्यकामाहात्म्यम्

तस्याश्च निष्करुणताया महादेव्या अभिवृद्धिहेतुस्तस्य रौद्रचित्तपुरस्य, वल्लभा तन्निवासिजनाना, विनीता जननीजनकयोरतिभीषणा स्वरूपेण, साक्षात्कालकूटघटितेव हिंसा नाम दुहिता ।

तथाहि–यत प्रभृति सा जाता, कन्यका राजमन्दिरे । तत आरभ्य तत्सर्वं, पुर समभिवर्धते ॥१॥
राजा पुष्टतरीभूतो, देवी स्थूलत्वमागता । अतोऽभिवृद्धिहेतु सा, *पत्तनस्य* सुकन्यका ॥२॥
ईर्ष्याप्रद्वेषमात्सर्यचण्डत्वाप्रशमादय । प्रधाना ये जनास्तत्र, पुरे विख्यातकीर्तय ॥३॥
तेषामानन्दजननी, सा हिसा प्रविलोकिता । स्थिता परापरोत्सङ्गे, सचरन्ती करात्करे ॥४॥
चुम्ब्यमाना जनेनोच्चैर्वम्भ्रमीति निजेच्छया । सा *तन्निवासिलोकस्य, तेनोक्ताऽत्यन्तवल्लभा* ॥५॥
दुष्टाभिसन्धिनृपतेर्वचन नातिवर्तते । सा निष्करुणतादेव्या, वचनेन प्रवर्त्तते ॥६॥
शुश्रूषातत्परा नित्य, तयोर्हिंसा सुपुत्रिका । *जननीजनकयोस्तेन,* सा *विनीतेति* गीयते ॥७॥
भीषणा सा स्वरूपेण, यच्चाभिहितमञ्जसा । तद्दिदानी मया सम्यग्कथ्यमान निबोधत ॥८॥
अपि सा नाममात्रेण, त्रासकम्पविधायिका । सर्वेषामेव जन्तूना, कि पुन प्रविलोकिता ? ॥९॥
साऽधोमुखेन शिरसा, नरक नयति देहिन । सा ससारमहावर्तगर्तसपातकारिका ॥१०॥
सा मूल सर्वपापाना, सा धर्मध्वसकारिणी । सा हेतुश्चित्ततापाना, सा शास्त्रेषु विगर्हिता ॥११॥
किञ्चेह बहुनोक्तेन ? नास्त्येव ननु तादृशी । लोकेऽपि दारुणाकारा, सा हिसा हन्त यादृशी ॥१२॥

### तामसचित्ते द्वेषगजेन्द्रभार्याऽविवेकिता

इतश्चास्ति तामसचित नाम नगर, तत्र महामोहतनयो द्वेषगजेन्द्रो नाम नरेन्द्र प्रतिवसति । इतश्च या प्रागाख्याता वेश्वानरस्य जननी मम धात्री अविवेकिता नाम ब्राह्मणी, सा तस्य द्वेषगजेन्द्रस्य भार्या भवति, सा च केनचित्प्रयोजनेन ततस्तामसचित्तान्नगराद् गर्भस्थिते सति वैश्वानरे तत्र रौद्रचित्तपुरे समागताऽऽसीत्, यादृक् तत्तामसचित्त नगर, यादृशोऽसौ द्वेषगजेन्द्रो राजा, यादृशी साऽविवेकिता, यच्च तस्यास्तामसचित्तनगराद्रौद्रचित्तपुर प्रत्यागमनप्रयोजनमेतत् सर्वमुत्तरत्र (विलोकनीय पृष्ठाङ्क 166) कथयिष्याम। केवल भद्रेऽगृहीतसङ्केते। न तदाऽस्य व्यतिकरस्याह गन्धमपि ज्ञातवान्, इदानीमेवास्य भगवत सदागमस्य प्रसादादिद समस्त मम प्रत्यक्षीभूत, तेन तुभ्य कथयामि, तत साऽविवेकिता तत्र रौद्रचित्तपुरे स्थिता कियन्तमपि काल, जातो दुष्टाभिसन्धिना सह परिचय, यतो द्वेषगजेन्द्रप्रतिबद्ध एवासौ दुष्टाभिसन्धिश्चरटनरेन्द्र, ततोऽविवेकिताया किङ्करभूतो वर्तते, तत साऽविवेकिता मा मनुजगतो समागतमवगम्य ममोपरि स्नेहवशेनागत्य ततो रौद्रचित्तपुरात् स्थिता सन्निहिता, जातोऽस्या मम जन्मदिने वैश्वानरो, वृद्धि गत क्रमेण, कथितस्तया तस्मै सर्वोऽप्यात्मीय स्वजनवर्ग ।

### नन्दिवर्धनेन सह हिंसाया विवाह

ततस्तस्य वैश्वानरस्य तत्र मार्गे मया सह गच्छत समुत्पन्नेवम्भूता बुद्धि यदुत→नयाम्येन नन्दिवर्धनकुमार रौद्रचित्तपुरे, दापयाम्यस्मै दुष्टाभिसन्धिना ता हिसाकन्यका, ततस्तया परिणीतया ममैष सर्वप्रयोजनेषु गाढतर निर्व्यभिचारो भविष्यति। ततो विचिन्त्य तेनैवमभिहितोऽह तत्र गमनार्थम् । मयोक्त→कनकशेखरादयोऽपि गच्छन्तु । वैश्वानर प्राह→कुमार। नामीषा तत्र गमनप्रसरो, यतोऽन्तरङ्ग तद्रौद्रचित्त नगर, ततो विना परिजनेन मत्सहाय एव कुमारस्तत्र गन्तुमर्हति, तत स्तदाकर्ण्याऽहमलङ्घनीयतया तद्वचनस्य, गुरुतया तत्र स्नेहभावस्य, अज्ञानोपहततया चित्तस्याऽनाकलय्य तस्य परमशत्रुता, अपर्यालोच्यात्महिताहित, अदृष्ट्वाऽप्यागामिनीमनर्थपरम्परां गतो वैश्वानरेण सह रौद्रचित्तपुरे, दृष्टो दुष्टाभिसन्धि, दापिता वैश्वानरेण मह्य तेन हिसा, परिणीता क्रमेण कृतमुचितकरणीय, तत प्रहितो दुष्टाभिसन्धिना सहितो हिसावैश्वानराभ्या, मिलितोऽह कनकशेखरादिबले, गच्छता मार्गे प्रारब्ध सहर्षेण वैश्वानरेण सह जल्पो यदुत–कुमार । कृतकृत्योऽहमिदानीम्, मयोक्त→कथम्? स प्राह–यदेषा परिणीता कुमारेण हिसा, केवलमेतावदधुनाऽह प्रार्थये→यद्येषा कुमारस्य सततमनुरक्ता भवति । मयाऽभिहित→क पुनरेवभवनेऽस्या उपायो भविष्यति ? वैश्वानर प्राह→सापराध निरपराध वा प्राणिन मारयता कुमारेण न मनागपि घृणा[धना मु] यितव्य, अयमस्या खल्वनुरक्तीभवनोपाय । मयाऽभिहित→किमनयाऽत्यन्तमनुरक्तया भविष्यति? वैश्वानर प्राह→कुमार। मत्तोऽपि महाप्रभावेय, यतो मयाऽधिष्ठित पुरुषोऽतितेजस्वितया परेषा केवल त्रासमात्र

जनयति, अनया पुनर्हिंस्याऽत्यन्तमनुरक्तयाऽऽलिङ्गितमूर्तिर्महाप्रभावतया दर्शनमात्रादेव जीवितमपि मारयति, तस्मादभिन्नावेकत्वेऽपि कुमारेण। मयाऽभिहितमेवं करोमि। वैश्वानरेणोक्तं→'महाप्रसाद' इति । ततो मार्गे गच्छन्नहं शशकसूकरशबर भल्लवर–सारङ्गादीनामटव्यजीवाना शतसहस्राणि मारयामि स्म, ततः प्रहृष्टा हिंसा, संपन्ना मय्यनुकूला । ततः क्रन्दन्ते मद्दर्शनेन जीवा, मुञ्चन्ति प्राणानपि केचित्, ततः संजातो मे वैश्वानरकथितहिंसाप्रभावे प्रत्यय, प्राप्ता वय कनकचूडविपयाभ्यर्णे ।

## प्रवरसेनेन सह युद्धम्

तत्रास्ति विपमकूटो नाम पर्वतः, तस्मिंश्च कनकचूडमण्डलोपद्रवकारिणोऽम्बरीषनामानश्चरटा प्रतिवसन्ति, ते च कदर्थिता. पूर्वं बहुश कनकचूडेन, तत कनकशेखरमागच्छन्तमवगम्य ि ल्स्तैर्मार्गे, प्रत्यासन्नीभूतमस्मद्बल, ततः कलकल कुर्वन्त.समुत्थिताश्चरटा·समालग्नमायोधन, ततश्च निपतितशरजालभिन्न कुम्भस्थलाभोगनिर्गच्छदच्छाच्छमुक्ताफल स्तोमसपूरिताशेषभूपीठदेशं क्षणात् तथाविदलितभटमस्तकासंख्यराजीववृन्दानुकारिणा रक्तौघनीरेण दण्डास्त्रसच्छत्र संघातहसेन तुल्य तडागेन सजातमुच्चैर्महायुद्धमस्माकमिति । तत समुदीर्णतया चरटवर्गस्य सजाता परिभग्नप्राया कनकशेखरादय । अत्रान्तरे प्रवरसेनाभिधानेन चरटनायकेन सार्धं समापतित ममायोधननिति । तत सज्ञितोऽह वैश्वानरेण, भक्षितं मया तत्क्रूरचित्ताभिधान वटक, तत प्रवृद्धो मेऽन्तस्ताप, सजातो भृकुटितरङ्गभङ्गुरो ललाटपट्ट·, समाचित स्वेदबिन्दुनिकरेण शरीरं, स च प्रवरसेनोऽत्यन्तकुशलो धनुर्वेदे, निर्व्यूढसाहस करवालेऽतिनिपुण सर्वास्त्रप्रयोगेषु, गर्वोद्धुरो विद्यावलेन, प्रबलवीर्यो देवताऽनुग्रहेण, तथापि सन्निहितपुण्योदयमाहात्म्यान्मे न लगन्ति स्म तदीयशिलीमुखा, न प्रभवन्ति स्म तदीयशस्त्राणि, न वहन्ति स्म तस्य विद्या, अकिञ्चित्करीभूता देवता, मम तु चेतसि परिस्फुरित→अहो प्रियमित्रवटकस्य प्रभावातिशयो यदस्य तेजसा ममाय रिपुर्दृष्टिमपि धारयितु न पारयति । ततो मया (तथा) वैश्वानरवटकप्रभावाधिष्ठितेन स प्रवरसेनश्चरटनायको विच्छिन्नकार्मुक प्रतिहतशेषान्यशस्त्र सन् गृहीतचमत्कुर्वद्भास्वरकरवाल स्यन्दनादवतीर्य स्थितो भूतले प्रस्थितो मदभिमुखम् । अत्रान्तरे पार्श्ववर्तिन्या विलोकितोऽह हिंसया, जातो गाढतरं रौद्रपरिणाम, मुक्तो मया कर्णान्तमाकृष्य निशितोऽर्धचन्द्र, छिन्न तेन तस्याऽऽगच्छतो मस्तक, समुल्लसितोऽस्मद्बले कलकल, निपातिता ममोपरि देवै कुसुमवृष्टि, वृष्ट सुगन्धोदक, समाहता दुन्दुभय, समुद्घोषितो जयजयशब्द । ततो हतनायकत्वाद्विषण्ण चरटबल, अवलम्बितप्रहरण गत मे शरण, प्रतिपन्न मया, निवृत्तमायोधन, सजात सन्धि, प्रतिपन्न सर्वचरटैर्मम भृत्यभाव । मया चिन्तित→अहो हिसाया माहात्म्यप्रकर्ष, यदनया विलोकितस्यापि ममैतावानुन्नतिविशेष सपन्न इति । सन्मानितास्तेऽपि कनकशेखरादिभि ।

## उभयोरुभाभ्या विवाह

दत्त प्रयाणक, सप्राप्ता वय कुशावर्त्तपुरे, समानन्दित कनकशेखरकुमारागमनेन कनकचूडराज, तुष्टो मद्दर्शनेन। ततो विधापितस्तेन महोत्सव, पूजित प्रणयिवर्ग । ततो गणित विमलाननारतवत्योर्विवाहदिन, समागत पर्यायेण, कृतमुचितकरणीयम्। ततो दीयमानैर्महादानैर्विधीयमानैर्जनसन्मानैर्बहुविधकुलाचारै सपाद्यमानैरभ्यर्हितजनोपचारेर्गान–वादनपानखादनविमर्देन निर्भरीभूते समरते कुशावर्त्तपुरे परिणीता कनकशेखरेण विमलानना मया रतवतीति । ततो विहितेपूचितकर्तव्येषु निवृत्ते विवाहमहानन्दे गते दिनत्रयेऽदृष्टपूर्वतया कुशावर्त्तस्यातिरमणीयतया तत्प्रदेशाना, कुतूहलपरतया यौवनस्य, समुत्पन्नतयाऽस्मासु विश्रम्भभावस्य गृहीत्वाऽस्मदनुज्ञा नगरावलोकनाय निर्गते भ्रमणिकया सपरिकरे विमलाननारतवत्यौ।

## कलत्रयोरपहार समरसेनद्रुमविभाकरै सह युद्धम्

ततोऽनेकाश्चर्यदर्शनेनानन्दपूरितहृदये सप्राप्ते ते चूतचूचुक नामोद्यान, प्रवृत्ते क्रीडितु, वय तु कनकचूडराजास्थाने तदा तिष्ठाम यावदकाण्ड एव प्रवृत्त कोलाहल, पूत्कृत दासचेटीभि, किमेतदितिसभ्रान्त उत्थितमास्थान, हृते विमलाननारतवत्त्यो केनचिदिति प्रादुर्भूत प्रवाद, तत सन्नद्धमस्मद्बल, लग्न तदनुमार्गेण, ततो मार्गखिन्नतया परसैन्यस्य, सोत्साहतयाऽस्मदनीकस्य, स्तोकभूभाग एव समवष्टब्धा परचमूरस्मत्पताकिन्या, श्रुतमस्माभिर्विभाकरनाम बन्दिभिरुद्घुष्यमाणम्। तत सर्वैरेव चिन्तितमस्माभि –अये। स एष कनकपुरनिवासी प्रभाकरबन्धुसुन्दर्योस्तनयो विभाकरो यस्मै प्रभावत्या दत्ता विमलानना पूर्वमासीदिति निवेदित दूतेन । ततश्चैषोऽस्मान् परिभूय हरत्येते वध्वौ दुष्टात्मेति भावयतो मे विहिता वैश्वानरेण

संज्ञा, ततो भक्षित मया क्रूरचित्ताभिधान वटक, मजातो भासुर परिणाम । ततो मयाऽभिहितं 'अरेरे पुरुषाधम विभाकर! परदारहरणतस्कर! क्व यासि? पुरुषो भव पुरुषो भव' इति, ततस्तदाकर्ण्य गङ्गाप्रवाह इव त्रिभि स्रोतोमुखैर्वलितमभिमुख परवल, आविर्भूतास्तदधिष्ठायकास्त्रय एव नायका । ततो मया कनकचूडराजेन कनकशेखरेण च त्रिभिरपि योद्धुकामैर्यथासमुख वृत्तास्ते । इतश्च योऽसा कन्यागमनसूचनार्थं कनकचूडराजसमीपे समागत पूर्वमासीन्नन्दराजदूत स तत्रावसरे मत्सकाश वर्तते । ततोऽभिहितोऽसौ मया—अरे विकट! जानीपे त्व कतमा खल्वेते त्रयो नायका ? विकट प्राह—देव! सुष्ठु जानामि, य एप वामपार्श्वेऽनीकस्य सम्मुखो भवत एप कलिङ्गाधिपति समरसेनो नाम राजा, एतद्बलेनैव हि प्रारब्धमिदमनेन विभाकरेण, यतो महावलतया विभाकरपितु प्रभाकरस्याय स्वामिभूतो वर्तते। य पुनरेप मध्यमसैन्ये वर्ततेऽभिमुख कनकचूडनरपते अय विभाकरस्यैव मातुलो वङ्गाधिपतिर्द्रुमो नाम राजा । यस्त्वेष दक्षिणभागवर्तिनि वले नायकोऽभिमुख कनकशेखरस्य, सोऽय विभाकर एव । यावदेव कथयति विकट तावत्समालग्नमायोधनम्।

## युद्धवर्णनम्

तच्च कीदृशम्—शरजालतिरस्कृतदृष्टिपथ,पथरोधसमाकुलतीव्रभटम्। भटकोटिविपाटितकुम्भतट,तटविभ्रमहस्तिशरीरचितम्॥१॥
रचितप्रथितोरुसुहस्तिघट, घटनागतभीरुकृतार्तरवम् । रवपूरितभूधरदिग्विवर वरहेतिनिवारणखिन्ननृपम् ॥२॥
नृपभिन्नमदोद्धुरवैरिगण, गणसिद्धनभश्चरघुष्टजयम् । जयलम्पटयोधशतैश्चटुल, चटुलाश्वसहस्रविमर्दकरम् ॥३॥
करसृष्टशरोघविदीर्णरथ, रथभङ्गविवर्द्धितवोलवलम् । वलशालिभटेरितसिंहनद, नदभीषणरक्तप्रवहम् ॥४॥

ततश्चेदृशे प्रवृत्ते महारणे दत्त परे कृतभीषणनादे समरभर, भग्नमस्मद्बल, समुल्लसित परवले कलकल, केवल न चलिता वय पदमपि पराङ्मुख, त्रयोऽपि नायका समुत्कटतया निकटतरीभूता परे। अत्रान्तरे पुन सञ्ज्ञितोऽह वैश्वानरेण, भक्षित मया क्रूरचित्ताभिधान वटक, जातो मे भासुरतर परिणाम, तत साक्षेपमाहूतो मया समरसेनो, चलितोऽसौ ममोपरि मुञ्चन्नस्त्रवर्षं, केवल सन्निहिततया पुण्योदयस्य न प्रभवन्ति स्म तानि मे शस्त्राणि । ततो विलोकितोऽह हिंसया, जातो मे दारुणतरो भाव, तत प्रहिता मया परविदारणचतुरा शक्ति, विदारित समरसेनो, गत पञ्चत्व, भग्न तद्बल, चलितोऽह द्रुमाभिमुख, स च लग्न एव योद्धु कनकचूडेन । ततो मयाऽभिहितो—रे ! किमत्र भवति हन्तव्ये तातेनायासितेन? न खलु गोमायुकेसरिणोरनुरूपमायोधन, ततस्त्वमारादागच्छेति । ततो वलितो ममाभिमुख द्रुमनरेन्द्र, निरीक्षितोऽह हिंसया, ततो दूरादेव निपातितमर्धचन्द्रेण मया तस्योत्तमाङ्ग, भग्न तदीयसैन्य, विहितो मयि सिद्धविद्याधरादिभिर्जयजयशब्द ।

## कनकशेखरस्य महानुभावता

इतश्च कनकशेखरेणापि सहापतितो योद्धु विभाकर, शरवर्षच्छेदानन्तर मुक्तानि तेन कनकशेखरस्योपरि आग्नेयपन्नगादीन्यस्त्राणि, निवारितानि वारुणगारुडादिभि प्रतिशस्त्रै कनकशेखरेण, ततोऽगिलतासहाय समवतीर्ण स्यन्दनाद्विभाकर, कीदृश रथस्थस्य भूमिस्थेन सह युद्धमिति मत्वा कनकशेखरोऽपि स्थितो भूतले । ततो दर्शितानेककरणविन्यासमभिवाञ्छितमर्मप्रहार प्रतिप्रहारवञ्चनासार सजात द्वयोरपि वृहतीं वेला वलकरवालयुद्ध, तत समाहत्य स्कन्धदेशे पातित कनकशेखरेण विभाकरो भूतले, गतो मूर्च्छां, समुल्लसित कनकशेखरवले हर्षकलकल, ततो निवार्य त वायुदानसलिलाऽभ्युक्षणादिभिराश्वासितो विभाकर कनकशेखरेण । अभिहितश्च—साधु भो नरेन्द्रतनय! साधु, न मुक्तो भवता पुरुषकार, नाङ्गीकृतो दीनभाव, समुज्ज्वालिता पूर्वपुरुषस्थिति, लेखितमात्मीय शशधरे नामक, तदुत्थाय पुनर्योद्धुमर्हति राजसूनु । ततोऽहो अस्य महानुभावता, अहो गम्भीरता अहो पुरुषातिरेक, अहो वचनातिरेक इति चिन्तयता विभाकरेणाभिहित—आर्य! अलमिदानी युद्धेन, निर्जितोऽह भवता न केवल खड्गेन, कि तर्हि? चरितेनापि । तत परमवन्धुवत् स्वय निवेशितो विभाकर स्वकीयस्यन्दने कनकशेखरेण, समाह्लादितो मधुरवचनै, उपसहृतमायोधन, गत पदातिभाव सर्वमपि परसैन्य कनकशेखरस्य, दृष्टे भयातिरेकप्रकम्प्यमानगात्रयष्टी विमलाननारतवत्यो, समानन्दिते पेशलवाक्यै, स्थापिते निजभर्तृस्यन्दनयो कनकचूडेन ।

## अवाप्तजययोर्नगरप्रवेश

ततो लब्धजयतया हर्षपरिपूर्णा वय कुशावर्त्तपुरे प्रवेष्टुमारब्धा ।
कथम् ?— पुरत कुञ्जरारूढो, राजा देवेन्द्रसन्निभ । ददद्दान यथाकामं, प्रविष्टो निजमन्दिरे ॥१॥

तत्र प्रमुदिताशेपलोकलोचनवीक्षित । पुर प्रविश्य स्वे गेहे, गत कनकशेखर ॥२॥
ततो रतवतीयुक्त, स्यन्दनस्थ शनै शनै । यावद् गच्छामि तत्राह, निजावासकसम्मुखम् ॥३॥
तावदेते समुल्लापा, प्रवृत्ता पुरयोपिताम् । जयश्रिया परीताङ्गे, मयि सस्पृहचेतसाम् ॥४॥
जगत्यप्रतिमल्लोऽपि, येनासौ विनिपातित । द्रुम समरसेनश्च, स सोऽय नन्दिवर्धन ॥५॥
अहो धैर्यमहो वीर्यमहो दाक्ष्यमहो गुणा । अस्य नून न मर्त्योऽय, देवोऽय नन्दिवर्धन ॥६॥
इय रत्नवती धन्या, याऽस्य भार्या महात्मन । धन्या वयमपि ह्येष, सा दृष्टिपथ गत ॥७॥
अथवा सर्वमेवेदमहो धन्यतम पुरम् । अचिन्त्यसाहसाढचेन, यदनेन वि भूषितम् ॥८॥
ततस्तास्तादृशीर्वाच, शृण्वतो मम मानसे । महामोहात्समुत्पन्नो, वितक ऽभूद् भृशम् ॥९॥
ममायमीदृशो लोके, प्रवादोऽत्यन्तदुर्लभ । य सजातो महानन्दहेतुस्त्रतिर रक ॥10॥
तस्या(त्रा)स्य कारण तावद्वयस्यो हितकारक । एप वैश्वानरोऽस्त्येव, न त्र सन्देहगोचर ॥११॥
तथापि प्रियया नून, ममेद हन्त हिसया । सर्वं सपादित मन्ये, कृतमालोकन यया ॥१२॥
अहो प्रभावो हिसाया, अहो मय्यनुरक्तता । अहो कल्याणकारित्वमहो सर्वगुणाढचता ॥१३॥
यादृशी वर्णिता पूर्वं, वरमित्रेण मे प्रिया । एपा वैश्वानरेणोच्चैस्तादृश्येव न सशय ॥१४॥
तस्याऽगृहीतसङ्केते। वृत्तान्तस्याऽत्र कारणम् । स मे पुण्योदयो नाम, वयस्य परमार्थत ॥१५॥
केवलम्—तदा न लक्षयाम्येवमह पापहतात्मक । यथा पुण्योदयाज्जात, ममेद सर्वमञ्जसा ॥१६॥
ततश्च—एवविधविकल्पेनाह वैश्वानरहिसयो । अत्यन्तमनुरक्तात्मा, न जानामि स्म किञ्चन ॥१७॥
इतश्च हट्टमार्गेण, मामकीनरथस्तदा । प्राप्तो राजकुलाऽभ्यर्णे, कृतलोकचमत्कृति ॥१८॥

## कनकमञ्जरीप्रणय

अथाऽस्ति सु(व्र)ह्मनाथस्य, दुहिता जयवर्मण । प्रिया कनकचूडस्य, देवी मलयमञ्जरी ॥१९॥
तस्याश्च भुवनाभोगसर्वसौन्दर्यमन्दिरम् । अस्ति मन्मथमञ्जूषा, कन्या कनकमञ्जरी ॥20॥
सा स्यन्दनस्थ गच्छन्त, वातायनसुसस्थिता । मा दृष्ट्वा पञ्चवाणस्य, शरगोचरमागता ॥२१॥
कुतूहलवशेनाऽथ, वीक्षमाणेन सर्वत । गवाक्षे लीलया दृष्टिर्मया तत्र निपातिता ॥२२॥
तत कनकमञ्जर्या, लोललोचनमीलिता । क्षण सा मामिका दृष्टिश्चलति स्म न कीलिता ॥२३॥
साऽपि ता मामिका दृष्टि, पिबन्ती रितमितेक्षणा । स्वेदकम्पनरोमाञ्चैर्व्यक्तकामा क्षण स्थिता ॥२४॥
मम तस्याश्च सानङ्ग [सानन्द मु] दृष्टिसयोगदीपितम् । मदीयसारथिर्भाव, तेतलिरतमलक्षयत् ॥२५॥

ततश्चिन्तित तेतलिना—अये । रतिमकरकेतनयोरिवाऽतिसुन्दरोऽयमनयोरनुरागविशेप, केवल महाजनसमक्षमेव-मनिमेषाक्षतया निरीक्षमाणस्यैना हीनसत्त्वतया लाघवमस्य सपत्स्यते, रत्नवत्याश्च कदाचिदीर्ष्या सपद्यते(द्येत प्र) ततो न मे युक्तमुपेक्षितुमिति तत काकली कृत्वा चोर्दितस्तेतलिना स्यन्दन । ततोऽह लावण्यामृतपङ्कमग्नामिव, कपोलपुलक-कण्टकलग्नामिव, मदनशरशलाकाकीलितामिव तदीयसौभाग्यगुणस्यूतामिव कनकमञ्जरीवदनकमलावलोकनात् कथञ्चिद् दृष्टिमाकृष्य तस्यामेव निक्षिप्तहृदय प्राप्त क्रमेण निजमन्दिरम् ।

## नन्दिवर्धनस्य विरहावस्था

तत्र च शून्यमनस्को विधाय दिवसोचित कर्तव्यमारुढोऽहमुपरितनभूमिकायाम् । तत प्रस्थाप्य समस्त परिजनमेकाकी निपण्ण शय्याया, तस्या चापरापरै कनकमञ्जरीगोचरैर्वितर्ककल्लोलैर्विधुरितचेतोवृत्तिर्न जानामि स्माऽह—यदुत किमागतोऽस्मि? कि गतोऽस्मि? कि तत्रैव स्थितोऽस्मि? किमेककोऽस्मि? कि परिजनवृतोऽस्मि? कि सुप्तोऽस्मि? कि वा जागर्मि? कि रोदिमि? कि वा न रोदिमि? कि दु खमिदम्? कि वा सुखमिद? किमुत्कण्ठकोऽय? कि वा व्याधिरय? किमुत्सवोऽय? कि वा व्यसनमिदम्? कि दिनमिदम्? कि वा रजनीयम्? कि मृतोऽस्मि? कि वा जीवामि? इति, क्वचिदीपल्लब्धचेतनः पुनश्चिन्तयामि—अये। क्व गच्छामि? कि करोमि? कि शृणोमि? कि पश्यामि? किमालपामि? कस्य कथयामि? कोऽस्य मे दुःखस्य प्रतीकारो भविष्यति? इति । एव च पर्याकुलचेतस निपिद्धाशेपपरिजनस्याऽपरापरपार्श्वेण शरीर परावर्तयतो

महानारकस्यव तीव्रदु खेनालब्धनिद्रस्येव लङ्घिता सा रजनी, समुद्गतोऽशुमाली, गतस्तथेव तिष्ठतो मेऽर्धप्रहर।

## तेतलिकृतपरिहास

अत्रान्तरे समागतस्तेतलि, अतिवल्लभतया मे न वारित केनापि प्राप्तो मत्समीप, कृतमनेन पादपतन, निषण्णो भूतले, विरचितकरमुकुलेन चाभिहितमनेन→देव। नीचजनसुलभेन चापलेन किञ्चिद्देव विज्ञापयिष्यामि तच्चार्वचारु वा सोढुमर्हति देव । मयाऽभिहित→भद्र तेतले। विश्रब्ध वद, किमियत्या *कूर्चशोभया?* तेतलिनाऽभिहित→यद्येव, ततो मया देव । परिजनादाकर्णित, यथा रथादवतीर्य देवो न ज्ञायते किमत्र कारण सोद्वेग इव, निषिद्धाशेषपरिजन सचिन्त शयनीये विवर्तमानस्तिष्ठति । इतश्च स्यन्दनाऽश्वाना त[् तृ मु]प्ति कारयतो लङ्घितोऽतीतदिनशेष, ततो रात्रो समुत्पन्ना मे चिन्ता यदुत–कि पुनर्देवस्योद्वेगकारण भविष्यति? ततस्तदलक्षयतश्चिन्ताविधुरस्य जाग्रत एव मे विभाता रजनी, ततो यावदुत्थाय किलेहागच्छामि तावद् वृहत्तम प्रयोजनान्तरमापतित तेनातिवाह्येयती वेलामहमागत, इत्यतो निवेदयतु देव प्रसादेन शरीरकुशलवार्तामात्रायत्तजीविताय किङ्करापसदायाऽस्मै जनाय यदस्य व्यतिकरस्य कारणमितिब्रुवाण पतितो मच्चरणयोस्तेतलि। ततो मया चिन्तित→*अहो अस्य मयि भक्तिप्रकर्ष, अहो वचनकोशल, तयुज्यत एवास्मे सद्भाव कथयितु, तथापि वामशीलयता* मदनविकारस्य मयाऽभिहित→भद्र तेतले । न जाने किमत्र कारणम्? केवल यत प्रभृति हट्टमार्गमतिक्रम्य समानीतस्त्वया रथो राजकुलाभ्यर्णे, धारितस्तत्र कियन्तमपि क्षण, तदारात्सर्वाणि मे विलीयन्तेऽङ्गानि, प्रवर्धतेऽन्तस्ताप, ज्वलतीव भुवन, न सुखायन्ते जनोल्लापा, आविर्भवति रणरणक, समुद्भूतालीकचिन्ता, शून्यमिव हृदयम् । ततोऽहमस्य दु खस्याऽलब्धपरित्राणोपाय खल्वेव स्थित इति । तत सहर्षेण तेतलिनाभिहित→देव। यद्येव ततो विज्ञात मयाऽस्य दु खस्य निदानमापध च, न विषाद कर्तव्यो देवेन, मयाऽभिहित कथम्? तेतलि प्राह–समाकर्णयत। निदान तावदस्य दु खस्य चक्षुर्दोष । मयोक्त→कस्य सम्बन्धी? तेतलि प्राह→न जाने किमसो लक्षिता न वा देवेन? मया पुनर्बृहतीं वेला निरूपिता तत्र राजकुलपर्यन्तवर्तिनि प्रासादे वातायने वर्तमाना काचिद् वृहद्दारिका देवमर्धतिरश्चीनेनेक्षणयुगलेन साभिनिवेशमङ्गप्रत्यङ्गतो निरूपयन्ती, तन्निश्चितमेतत्तस्या एव सम्बन्धी चक्षुर्दोषोऽय, यतो देव। अतिविषमा विषमशीलाना दृष्टिर्भवति । ततो मया चिन्तित→वष्ट खल्वेष तेतलि, वुद्धोऽनेन मदीयभाव, विलोकिता सा चिरमनेन अत पुण्यवानय, यतश्च वदत्येष यथा लब्ध मया तवास्य दु खस्य भेषजमिति तत सपादयिष्यति नून ता मदनज्वरहरणमूलिका कन्यकामेष मे, तस्मात्प्राणनाथो ममाय वर्तत इति विचिन्त्य समारोपितो वलात्पर्यङ्के तेतलि । अभिहितश्च→साधु भो साधु । सुष्ठु विज्ञात भवता मदीयरोगनिदान, इदानीमापधमस्य निवेदयतु भद्र । तेतलिनाऽभिहित→देव । इदमत्र चक्षुर्दोषे भेषज यदुत–निपुणवृद्धनारीभि कार्यता सम्यग् लवणावतारणक, विधीयता मन्त्रकुशलैरपमार्जन, लिख्यन्ता रक्षा, निवध्यन्ता कण्ड(कट प्र)कानि, अनुशील्यन्ता भूतिकर्माणि । अन्यच्च–शाकिन्यपि किल प्रत्युच्चारिता न प्रभवतीति कृत्वा गत्वा निष्ठुरवचनेर्गाढ निर्भर्त्स्यता सा दारिका यदुत हे वामलोचने । निरीक्षितस्त्वया विषमदृष्ट्या देव, ततस्त्व ज्ञाता, वुद्धा, तिष्ठसि यदि च देवस्य शरीरे, मनागपि स्खलित भविष्यति ततो नास्ति मे (ते) जीवितम्' इति । एव क्रियमाणे देव। नियमादुपशाम्यत्येष चक्षुर्दोष, तदिदमस्य भेषज विज्ञातमिति । ततो विहस्य मयाऽभिहित→भद्र तेतले। पर्याप्त परिहासेन, निवेद्यता यद्यवधारित कश्चिद्भवता निश्चित (तो) मद्दु खविगमोपाय ? तेतलि प्राह–देव। किमलब्धदेवदु खप्रतीकारा एव देवपादोपजीविन कदाचिदपि देवस्य पुरत सोद्वेगे सति देवे सहर्ष जल्पितुमुत्सहन्ते? तस्मान्मा कुरुत विषाद सिद्धमेव देवसमीहित, मया हि देवोद्वेगनिरासार्थमेवेष परिहासो विहित ।

## कपिञ्जलोदितवृत्तान्तोक्ति

मयाऽभिहित→वर्णय, तर्हि कथ सिद्धमस्मत्समीहितम्? तेतलि प्राह–देव। विज्ञापितमिदमादावेव मया यथा मम प्रत्युषस्येव देवसमीपमागच्छतो वृहत्तम प्रयोजनान्तरमापतित, तेन लङ्घितो ममाय दिनार्धप्रहर इति । तद्देवसमीहितसिद्धयर्थमेव प्रयोजनान्तर, कथमन्यथा वृहत्तमत्वमस्योपपद्येत? यतोऽस्ति मम परिचिता मलयमञ्जरीसम्बन्धिनी कपिञ्जला नाम वृद्धगणिका, सा मम शयनादुत्तिष्ठत पुरत प्रविश्य मद्भवने→वयस्य । त्रायध्व त्रायध्वमिति महता शब्देन पूत्कृतवती। ततोऽनुपलब्धभयकारणेन मयाऽभिहित→भद्रे कपिञ्जले। कुतस्ते भयम्? तयाऽभिहित मीनकेतनादिति । मयाऽभिहित कपिञ्जले। अश्रद्धेयमिद, यतोऽहमेव तर्कयामि यदुत→कुङ्कुमरागपिङ्गलपलित[त मु]चिताज्वालावलीभासुर कटकटायमानास्थि–पञ्जरशिवाशब्दभैरव सकुचितवलीतिलकजालपिच्छलतातिभीषण उल्लम्बितशवाकारलम्बमानातिस्थूलस्तनभयानक

अतिरौद्रमहाश्मशानविभ्रम त्वदीयशरीरमिदमुपलभ्य नून काम कातरनर इवाराटीर्दत्त्वा दूरत प्रपलायते तत कुतस्ते भयमिति? कपिञ्जलयाऽभिहित–अये। अलीकदुर्विदग्ध। न लक्षितस्त्वया मदीयोऽभिप्राय तेनैव ब्रवीषि, अत समाकर्णय यथा मे मदनाद्भयमिति । मयाऽभिहित→तर्हि निवेदयतु भवती । सा प्राह→अस्ति तावद्विदितैव भवतो मलयमञ्जरी नाम मम स्वामिनी । तस्याश्चास्ति कनकमञ्जरी नाम दुहिता । अत्रान्तरे तेतलिना कनकमञ्जरीनामग्रहणादेव स्पन्दित मे दक्षिणलोचनेन, स्फुरितमधरेण, उच्छ्वसित हृदयेन, रोमाञ्चितमङ्गेन, गतमिवोद्वेगेन ।

## कनकमञ्जरीपरिस्थितिवर्णनम्

ततो मया चिन्तित→नून सैषा मम हृदयदयिता कनकमञ्जरीत्युच्यते । सहर्षेण चाभिहित→ततस्तत । ततो लक्षितमदीयभावेन अहो प्रियनामोच्चारणमन्त्रसामर्थ्यमिति विचिन्त्य तेतलिनाऽनुसन्दधानेन कपिञ्जलावचनमिदमभिहित→सा च मदीय तन्यपानेन सवर्धिता, तेन मम सर्वस्वमिव, शरीरमिव, हृदयमिव, जीवितमिव सा कनकमञ्जरी स्वरूपादव्यतिरेकिणी वर्तते । अधुना पीडचते सा वराकी मकरध्वजेन ततो यत्तस्या मीनकेतनाद्भय तत्परमार्थतो ममैव भयमिति । तदिदमाकर्ण्य धा(वा)रयतस्तेतलेराकृष्य करवालमरेरे मन्मथहतक। मुञ्च मुञ्च मे प्रिया कनकमञ्जरी, पुरुषो वा भव दुरात्मन्। नास्त्यधुना ते जीवितमिति ब्रुवाणोऽहमुत्थित शयनीयतलाद्वेगेन । तेतलिनाऽभिहित→देव। अलमनेनाऽऽवेगेन, न खलु सदये देवे कनकमञ्जर्या मदनहतकादन्यस्माद्वा सकाशाद्भयगन्धोऽपि, कथानक चेदमतस्तच्छेषमप्याकर्णयतु देव । ततस्तद्वचनेनाह पुन प्रत्यागतचेतनो मनाग् विलक्षीभूतो निषण्ण शय्यातले । तेतलि प्राह→ततो मयाऽभिहित→भद्रे कपिञ्जले । कि पुनर्निमित्तमासाद्य तस्या कनकमञ्जर्या प्रभवति मदनहतक । कपिञ्जलयाऽभिहित→आकर्णय, अस्ति तावदतीते दिने सपन्न वधूहरणविड्वर, सजातो देवस्य कनकचूडस्य परै सह महासग्राम, ततो लब्धजयपताकेषु नगर प्रविशत्सु कनकचूडकनकशेखरनन्दिवर्धनेषु कुतूहलवशेनाह गेहान्निर्गत्य स्थिता हट्टमार्गे, प्रविष्टेषु गता स्वामिनी भवन, आरूढा चोपरितनभूमिकाया, तत्र च वातायने वर्तमाना राजमार्गाभिमुखनिसारितवदनकमला निष्पन्दमन्दरितमितशून्यदृष्टिका चित्रविन्यस्तेव, शैलघटितेव, निष्पन्नयोगेव, परमयोगिनी व्युपरताशेषाङ्गप्रत्यङ्गचलनचेष्टा दृष्टा मया कनकमञ्जरी । ततो हा किमेतदितिविचिन्त्य सम्भ्रम पुत्रि। कनकमञ्जरीति पुन पुनस्तामहमाहूतवती न च दत्त मे मन्दभाग्यायास्तया प्रत्युत्तरम् ।

इतश्च तस्मिन्नवसरे तत्रासीत्कन्दलिका नाम दासदारिका, ततस्ता प्रति मयाऽभिहित→भद्रे कन्दलिके । केन पुनर्हेतुना वत्साया कनकमञ्जर्या इयमेवविधाऽवस्था सजातेति? कन्दलिकयाऽभिहित–अम्ब। न सम्यग् लक्षयामि, केवल यत प्रभृति राजमार्गेऽवतीर्णो नन्दिवर्धनकुमार, पतितो दृष्टिगोचरे भर्तृदारिकाया, तत आरभ्येय प्रमुदितेव, लब्धरत्नेव, अमृतसिक्तेव, महाभ्युदयप्राप्तेव अनाख्येय किमपि रसान्तरमनुभवन्ती मया दृष्टाऽऽसीत् । यदा त्वतीतोऽसौ दृष्टिगोचरात् तदेयमीदृशीमवस्था प्राप्तेति । ततस्तदाकर्ण्य मरिष्यतीयमकृतप्रतीकारेति सचिन्त्य शोकविह्वलतया विहितो मया हाहारव।

## कनकमञ्जर्या उपचारारम्भ

तदाकर्णनेन समागता मलयमञ्जरी, तत सापि किमेतत्कपिञ्जले । किमेतदिति वदन्ती निरीक्ष्य कनकमञ्जरी विलपितुमारब्धा । ततो बृहत्तमतया बोलस्य[दोहलस्य मु] जननीवल्लभतया हृदयस्य, स्वभ्यस्ततया विनयस्य मनाक् सजातचेतना सपन्ना कनकमञ्जरी मोटितमनया शरीरक, प्रवृत्ता जृम्भितु, ततस्ता स्वकीयोत्सङ्गे निधाय मलयमञ्जर्याऽभिहित–वत्से। कनकमञ्जरि। कि ते शरीरके बाधते? कनकमञ्जर्याऽभिहित→अम्ब। नाहमन्यत्किञ्चिल्लक्षयामि, केवल दाहज्वरो मे शरीर बाधते, ततो यावदाकुला वय कुर्मस्तस्या शरीरस्य मलयजरसेन सेचन, प्रेरयाम कर्पूरजलबिन्दुवर्षीणि तालवृन्तानि, प्रयच्छामोऽङ्गे हिमसेकशीतला जलार्द्रा (काषायी), समर्पयामो मुहुर्मुहु कर्पूरपूरितानि नागवल्लीदलबी[वी मु]टकानि, समाचरामोऽन्यामप्यनेकाकारा शीतक्रिया, तावद्गतोऽस्त वासरेश्वर, समुद्गतो निशीथिनीनाथ, परिप्लावित विमलचन्द्रिकया नभस्तलम् । ततो मयाऽभिहिता मलयमञ्जरी→स्वामिनि। सघर्ममिद स्थान, अत प्रकाशे निसार्यता राजदुहिता । तयाऽभिहित→ एव क्रियता, ततो हिमगिरिविशालशिलाविभ्रमे सुधाधवलप्रकाशहर्म्यतले कथञ्चिद्धार्यमाणा नीता कनकमञ्जरी, विरचित तत्रातिशीतलनलिनीदलपल्लवशयनीय, तत्र ता निवेश्य विहितानि भुजयुगले मृणालनालवलयानि, स्थापितो वक्षस्थले सिन्दुवारहार, समुपनीता स्पर्शनार्थ प्रक्षेपमात्रेण महासरोवरस्यापि स्त्यानभावसम्पादका शीतवीर्या महामणय, लगति च तत्र प्रदेशे स्वत एव बलिनामपि रोमहर्षदन्तवीणासञ्जननो गन्धवाहन । ततो मलयमञ्जर्याऽभिहित→[illegible] कनकमञ्जरि।

किमपगताऽधुना भवत्या दाहज्वरबाधा, कनकमञ्जरी प्राह→नहि नहि अम्ब। प्रत्युताऽधुना मम मति (मृति प्र) यदुत अनन्तगुणा सा वर्तते, यत प्रज्वलितखादिराङ्गारपुञ्जायते मा प्रत्येष शशधरहतक, ज्वालाकलापायते चन्द्रिका, विस्फुलिङ्गायते तारकानिकर, दहति मामेष नलिनीदलस्रस्तर, प्लोषयन्ति सिन्दुवारहारादय, किम्बहुना? हतशरीरकमपि मेऽधुना पापाया दाहात्मकतया वह्निपिण्डायते । ततो दीर्घं निश्वस्य मलयमञ्जर्याऽभिहित→भद्रे कपिञ्जले । जानासि वत्साया कि पुनरीदृशदाहज्वरकारणम्? मया तु कर्णे स्थित्वा निवेदित तस्यास्तत्कन्दलिकावचनम् । मलयमञ्जर्याऽभिहित→यद्येव तत कि पुनरत्र प्राप्तकालम्? अत्रान्तरे समुत्थितो राजमार्गे शब्दो यदुत—सिद्धमेवेद प्रयोजन, केवल वेलाऽत्र विलम्बते। तत सहर्षया मयाऽभिहित—स्वामिनि। गृहीत शब्दार्थ? सा प्राह—बाढ गृहीत । मयाऽभिहित→यद्येव तत सिद्धमेव वत्साया कनकमञ्जर्या समीहित, स्पन्दते च मम वामलोचन अतो नात्र सन्देहो विधेय । मलयमञ्जरी प्राह→कोऽद्यापि सन्देह? सिध्यत्येवेदम् ।

अत्रान्तरे कनकमञ्जर्या एव ज्येष्ठा भगिनी मणिमञ्जरी नाम, सा समारुह्य हर्म्यतल सहर्षा निषण्णाऽस्मत्समीपे, मयाऽभिहित—वत्से। मणिमञ्जरि! निर्दुःखसुखतया कठोरा त्वमसि । सा प्राह→कथम्? मयोक्त या त्वमेवमस्मासु विषादवतीषु सहर्षा दृश्यसे । मणिमञ्जर्याऽभिहित→अथ कि क्रियताम्? न शक्यते गोपयितु महन्मे हर्षकारणम् । मयोक्त→आख्याहि वत्से। कीदृशमिति। मणिमञ्जर्योक्त→गताऽहमास तातसमीपे, निवेशिता तातेन निजोत्सङ्गे, तदा च तातस्य कनकशेखर पार्श्ववर्ती वर्तते । ततस्त प्रति तातनाऽभिहित→पुत्र । येनानेन नन्दिवर्धनेन महाबलावपि तो समरसेनद्रुमौ लीलया विनिपातितौ, स नैष सामान्य पुरुष, न चास्य सुकृतस्य वय जीवितदानेनापि निष्क्रय गच्छाम, तदिदमत्र प्राप्तकाल—जीवितादपि वल्लभतरे ममैते मणिमञ्जरीकनकमञ्जर्यौ, दत्ता चेय पूर्वमेवास्येव महत्तमसहोदराय शीलवर्धनाय, इय तु कनकमञ्जरी साम्प्रतमस्मै नन्दिवर्द्धनाय दीयतामिति । कनकशेखरेणोक्त→चारु मन्त्रित तातेन, तात एवोचित जानीते, ततो दातव्येवेति स्थापितस्ताभ्या सिद्धान्त, समुत्थिताऽह तातोत्सङ्गात्, प्रवृत्ता चेहागन्तु, चिन्तित च मया→अहो मे धन्यता अहो मे अनुकूलता दैवस्य, अहो सुपर्यालोचितकारिता तातस्य, अहो विनय कनकशेखरस्य, भविष्यत्येव प्रियभगिन्या सह मम यावज्जीवमवियोग, ललिष्यावहे नानाविधम् । एव च चिन्तयन्त्या ममाऽऽविर्भूत स्फुटबहिर्लिङ्गो हर्ष । तदिद मे हर्षकारणमिति । मलयमञ्जर्याऽभिहित→कपिञ्जले। पश्य कालहीनो निमित्तस्य सवाद । मयोक्त→किमाश्चर्यम्? यतो देवीयमुत्पातुका भाषा भवति, केवल वत्से। कनकमञ्जरि। मुञ्चेदानी विषाद, अवलम्बस्व धैर्य, सिद्धमधुना न समीहित, व्यपगत भवत्या दाहज्वरकारण, प्रतिपादिताऽसि देवेन हृदयनन्दनाय नन्दिवर्धनाय । तत सजाताश्वासाऽपि हृदये कुटिलशीलतया मदनस्य विधाय मदभिमुख विषमभृकुटि कनकमञ्जर्याऽभिहित→आ भवतु मात। किमेवमलीकवचनैर्मां प्रतारयसे? शिरोऽपि ममाऽधुना स्फुटति भग्नमनेनासवद्धप्रलापेन, मलयमञ्जर्याऽभिहित→वत्से। मामेव वोच, सत्यमेवेद नान्यथा वत्सया सभावनीय, तत कुतो ममेयन्ति भाग्यानीति शनैर्वदन्ती स्थिताऽधोमुखी कनकमञ्जरी । ततस्ता निजपतिभक्तस्त्रीकथानिकाकथनव्याजेन विनोदयन्तीभिरस्माभिरतिवाहिता रजनी, न चाद्याप्युपशाम्यति तस्या परिदहनम् ।

मया चिन्तित→यावत्क्रमेण सपत्स्यते नन्दिवर्धनदर्शन तावन्मरिष्यतीय राजदुहिता, अत पश्यामि तावत्तेतलि, वल्लभोऽसो कुमारस्य, शक्नोति तं विज्ञापयितु कदाचित्तत सपद्यतेऽस्या परित्राणमद्यैव कुमारदर्शनेनेतिविचिन्त्य समागताऽह त्वत्समीपे, तदिद निमित्तमासाद्य तस्या प्रभवति मीनकेतन इत्येतदाकर्ण्य वयस्य प्रमाणम् । मयाऽभिहित→यद्येव ततो यद्यपि वश्येन्द्रियो देवो महासत्त्वतया च तृणमिव स्त्रैणमाकलयति तथाप्येव विज्ञपयामि यथाऽभ्युद्धरति निजदर्शनेन राजदुहितर, केवल रतिमन्मथे कानने भवतीभि स्थातव्यम् । ततो महाप्रसादोऽनुगृहीताऽस्मीति वदन्ती पतिता मच्चरणयो कपिञ्जला, गता स्वभवन, अहमपीहागत, तदिद देव। मया भवद्भैषजमवाप्तम् । मयाऽभिहित—साधु तेतले। साधु त्वमेव वक्तु जानीषे, तत समारोपितस्तस्य वक्षःस्थले मयाऽऽत्मीयो हार, परिहिता (परिधापिता प्र) भुजयो कटककेयूरादय । तेतलि प्राह→देव। अत्र तुच्छकिङ्करजने देवकीयोऽयमतिप्रसादोऽनुचित इवाऽऽभासते । मयाऽभिहित→आर्य। प्राणप्रदेऽपि सद्वैद्ये कि किञ्चिदनुचितमस्ति? तन्न कर्तव्योऽत्र भवता सक्षोभ, त्व ममेदानी जीवितादव्यतिरिक्तो वर्तसे ।

अत्रान्तरे समागतो द्वारि विमलो नाम महाराजमहत्तमो, निवेदितो मे प्रतिहार्या, स्थित पृथगासने तेतलि, प्रविष्टो महत्तम, कृतोचिता प्रतिपत्ति । अभिहितमनेन→कुमार । देवेन प्रहितो युष्मत्समीपेऽनेनार्थेन—यथा 'अस्ति मम जीवितादु—

पोष्टतमा कनकमञ्जरी नाम दुहिता, सा ममोपरोधात् कुमारेण स्वय पाणिग्रहणेनाऽऽह्लादनीया' । ततो निरीक्षित मया तेतलिवदनम्, तेनाभिहित→देव। अनुवर्तनीयो महाराजो देवस्य, अतो मान्यतामिय तस्य प्रथमप्रणयप्रार्थना । मयाऽभिहित—तेतले। त्वमत्र प्रमाणम्। विमल प्राह→कुमार। महाप्रसाद, ततो निर्गतो विमल ।

## रतिमन्मथे सबन्ध

तेतलिनाऽभिहित→देव। गम्यतामिदानी तत्र रतिमन्मथे कानने, मा उन्मनीभूत्सा राजदुहिता, अल कालहरणेन, मयाऽभिहितमेव भवतु । ततस्तेतलिसहाय एव गतोऽह तत्रोद्याने, दृष्ट तदपहसितनन्दनवन कानन, ततश्चम्पकवीथिकासु, कदलीगुपिलेषु, अतिमुक्तकलतावितानेषु, केतकीषण्डेषु, मृद्वीकामडपेषु, अशोकवनेषु, लवलीगहनेषु, नागवल्ल्यारामेषु, नलिनसरोवरोपान्तेषु, विचरितमितश्चेतश्च भूयो भूय कनकमञ्जरीदर्शनलोलुपतया, न च दृष्टा सा कुरङ्गलो ना । ततो मया चिन्तित→हन्त। प्रतारितोऽहमनेन तेतलिना, विमलव्यतिकरोऽपि नून तेतलेरेव मायाप्रपञ्च, कुतस्तद्दर्शनसम्पादकानि भाग्यानि मादृशाम्? अत्रान्तरे श्रुतो मया तरुलतागहनमध्ये कलनूपुरध्वनि । ततोऽपसृत्य तेतलिसमीपान्निरूपित तद्गहन मया, दृष्टा च तमालतरोरधस्ताद्वर्तमाना स्वर्गात्परिभ्रष्टेवामराङ्गना, स्वभवनान्निष्कासितेव नागकन्यका, रतिरिव मदनविरहकातरा सशोका कनकमञ्जरी, विलोकितमनया तरलतारया दृष्ट्या दिक्चक्रवाल, न दृष्ट कोऽपि सत्त्व, ततोऽभिहित तया, 'हे भगवत्यो वनदेवता। प्रतीतमेवेद भवतीना—यत्किल प्रतिपन्न तेतलिना तस्य जनस्याऽऽनयन, दत्तोऽत्र रतिमन्मथे कानने सङ्केत इत्युपप्रलोभ्याऽहमिहानीता तया जरन्मार्जार्या, अधुना किलाऽसौ जनो न दृश्यत इति त गवेषयामीत्यभिधाय मामेकाकिनी विमुच्य सा न जाने कुत्रचिद्गता? तदेव प्रतारिताऽहमिन्द्रजालरचनाचतुरया कपिञ्जलया, तदल मे जीवितेन प्रियविरहा—नलदग्धाया आप्तजनेनाऽपि वञ्चिताया मन्दभाग्याया, केवल प्रसादाद्भगवतीना जन्मान्तरेऽपि स एव जनो भर्ता भूयाद्' इति वदन्त्या वल्मीकमारुह्य निबद्धस्तमालतरुशाखाया पाशक, निर्मिता तत्र शिरोधरा, प्रवृत्ता मोक्तु शरीरम् । अत्रान्तरे सुन्दरि। मा साहस मा साहसमितिब्रुवाण प्राप्तोऽह वेगेन, धृत वामभुजेनाश्लिष्य मध्यदेशे निपतच्छरीरक, छिन्नो दक्षिणकरेणासिपुत्रिकया पाशक, आश्वासिता पवनदानेन । अभिहिता च→देवि । किमिदमसमञ्जसमारब्धम्? ननु स्वाधीनोऽय जनस्ते वर्तते, तन्मुञ्च विषाद, तत सा तथैव स्थिता घुर्णमानविलोलविलोचना मा निरीक्षमाणा, तत्क्षणमनेकरससभारगर्भनिर्भर सुपरिस्फुट मदनचिह्न योगिनामपि वाग्गोचरातीत स्वरूप धारयन्ती मया विलोकिता, कथम्? एकाकिनीति भीता, स एवायमिति सहर्षा, कुत इति साशङ्का, स्वरूपोऽयमिति ससाध्वसा, स्वयमागतेति सलज्जा, विजने प्राप्तेति दिक्षु निक्षिप्ततरलतारिका, दत्तसङ्केतेति विश्वस्ता, दृष्टमिदमनेन मदीयमाचरणमिति सवैलक्ष्या, लक्ष्मीरिव क्षीरोदमन्थनोत्थितगात्रा विशदस्वेदप्लावितदेहतया, कदम्बकुसुममालिकेव परिस्फुटपुलकोद्भेदसुन्दरतया, पवनप्रेरिततरुमञ्जरीव प्रकम्पमानसर्वाङ्गतया, आनन्दसाग मवगाहमाना स्तिमितनिष्पन्दलोचनतया। तत साऽनभिव्यक्तैरक्षरैर्मुञ्च मुञ्च कठोरहृदय। मुञ्च, न कार्यमनेन जनेन जनस्येति वदन्ती मदीयभुजमध्याद्बहिर्मुख निष्पतितुमारब्धा । ततो निवेशिता मया ललितकोमले दूर्वाविताने, निषण्ण स्वयमभ्यर्ण एव तदभिमुख, ततोऽभिहित मया→सुन्दरि। मुञ्च लज्जा, परित्यज कोप, न खल्वाज्ञाकारी किङ्करजनोऽय कोपस्य गोचरो भवितुमर्हति । एव च वदति मयि सा कनकमञ्जरी किञ्चिद्वक्तुकामापि न वक्तु शक्नुवती केवल विलसद्दशनकिरणरञ्जिताधरबिम्बा कपोलमूलस्फुरितसूचितान्त स्मिता वामचरणाङ्गुष्ठेन भूतल लिखन्ती स्थितेषदधोमुखी । मयाभिहित→अलमत्र सुन्दरि। विकल्पितेन। यत→हृदयाज्जीविताद्देहात्सकाशादतिवल्लभाम् । नाथोऽत्र त्वा विहायान्यो, नास्ति मे भुवनत्रये ॥१॥

अद्यप्रभृति निर्मिथ्य, तव पद्मविलोचने। । क्रीत सद्भावमूल्येन, दासोऽह पादधावक ॥२॥

कठोरहृदयो नाऽह, कठोरोऽत्र विधि परम् । यो मे दर्शनविच्छेद, कुर्यात्ते वक्त्रपङ्कजे ॥३॥

एतच्च मामक वाक्यमाकर्ण्य प्रीतमानसा । मया निरीक्षिता बाला, भजन्ती सा रसान्तरम् ॥४॥

कथम्—क्षणेनामृतसिक्तेव, क्षिप्तेव सुखसागरे । प्राप्तराज्याभिषेकेव, तोषादन्येव सा स्थिता ॥५॥

इतश्च मामन्विष्यमाणा नानास्थानेषु पर्यटन्ती प्राप्ता तमुद्देश कपिञ्जला, दृष्टस्तेतलि । अभिहितमनया→स्वागत वयस्य। क्व पुन कुमार? इति । तेतलिनाऽभिहित→अत्र तरुलतागहने प्र[illegible], ततश्चलिते द्वे अपि ते [illegible]स्मदभिमुख, दृष्टमावयोर्मिथुन, सजातो हर्षाऽतिरेक । कपिञ्जलयाऽभिहित—'नमस्तस्मै [illegible]य, येनेद युगलमत्यन्तमनुरूप सयो[illegible] । तेतलि प्राह—कपिञ्जले । नून रतिमन्मथयोरिवानयोर्योगेनेदमुद्यानमद्यैव यथार्थ [illegible] था। व्यर्थकमेवास्य [illegible]तिमन्म[illegible]

पूर्वमासीत्, ततोऽस्मन्निकटदेशे प्राप्ते तेतलिकपिञ्जले, समुत्थिता ससम्भ्रमेण कनकमञ्जरी । कपिञ्जलयाऽभिहित→वत्से! निषीदाऽल सम्भ्रमेण, ततोऽमृतपुञ्जक इव दूर्वावितान निषण्णानि स्नेहनिर्भरसहासविश्रम्भजल्पे। स्थितानि वय कियन्तमपि क्षणम् ।

## कनकमञ्जरीगमने कुमारावस्था

अत्रान्तरे समागतो योगन्धरो नाम कन्यान्तपुरकञ्चुकी, तेन च विधाय प्रणाम सत्वरमाहूता कनकमञ्जरी । कपिञ्जलयाऽभिहित–भद्र! किमितीदमाऽऽकारणम् ? योगन्धर प्राह–श्रुतेयमपटुशरीरा रात्रौ देवेन, तत प्रभाते स्वयमेव गवेषिता स्वस्थाने न चोपलब्धा, तत पर्याकुलीभूतो देव, समादिष्टोऽहमनेन 'यथा यत कुतश्चिद्वत्सा गृहीत्वा शीघ्रमागच्छ,' इति, तदिदमाह्वानकारणम् । ततस्तदाकर्ण्याऽलङ्घनीयवचनस्तात इति मन्यमाना मुहुर्मुहुर्मां वलिततार विलोकयन्ती सालस्य प्रस्थिता सह कपिञ्जलया कनकमञ्जरी, क्रमेणातिक्रान्ता दृष्टिगोचरात् । तेतलिनाऽभिहित→देव । किमिदानीमिह स्थितेन? ततोऽह 'तदेव कृतककोप वदन, तदेव मुञ्च मुञ्च कठोरहृदय! मुञ्च' इति वचन, तच्च विलसद्दशनकिरणरञ्जितमधरविम्ब, तदेव च हर्षातिरेकसूचकममलकपोलविस्फुरित, तच्च सद्भावसमर्पक सलज्ज चरणाङ्गुष्ठेन भूमिलेखन, तदेव चाभिलाषातिरेकसन्दर्शक तिरश्चीनेक्षणनिरीक्षण' तस्या कनकमञ्जर्या सम्बन्धि तीव्रतरमदनदाहज्वरप्रवर्धकमपि प्रकृत्या महामोहवशेन तदुपशमार्थममृतवुद्ध्या स्वचेतसि पुन पुनश्चारयन् प्राप्त स्वभवन, कृत दिवसोचित कर्तव्यम् ।

## गोधूल्या लग्नम्

अपराह्ने समायाता कन्दलिका, तयाऽभिहित–कुमार! देव समादिशति→यथा 'निरूपित मया सावत्सरैर्विवाहदिन, अद्यैव गोधूल्या शुध्यति' इति । तदाकर्ण्य निमग्न इवाह रतिसमुद्रे, दापित कन्दलिकायै पारितोषिक, स्तोकवेलाया समायाता गृहीतकनककलशा वारनार्य, निर्वर्तित मे स्नपनक, विहितानि कौतुकानि, ततो दापितानि महादानानि, मोचितानि बन्धनानि, पूजिता नगरदेवता, सन्मानिता गुरव, विधापिता हट्टशोभा, शोधिता राजमार्गा, पूरित प्रणयिवर्ग, गीतमम्बाजनै, नृत्तमन्तपुरै, विलसित राजवल्लभै । ततो महता विमर्देन प्राप्तोऽह राजभवन, प्रयुक्ता मुसलताडनादय कुलाचारा प्रविष्टोऽह वधूगृहके । तत्र चाऽमरवधूरप्युपहसन्ती रूपाऽतिशयेन, रतिमपि विशेषयन्ती मदनहरविलासै, ईषल्लम्बाधरा चक्रवाकमिथुनविभ्रमेण स्तनकलशयुगलेन, सुनिविष्टनासिकावशा, रक्ताशोककिसलयाकाराभ्या कराभ्या कोकनदपत्रनेत्रा, करिकराकारधरेणोरुदण्डद्वयेन, विस्तीर्णनितम्वविम्वा, त्रिवलीतरङ्गभङ्गुरेण मध्यभागेन कृष्णस्निग्धकुटिलकेशा, स्थलकमलयुगलानुकारिणा चरणद्वयेन, कुण्डमिव मदनरसस्य, राशिरिव सुखाना, निधानमिव रते, आकरो रूपानन्दरत्नाना, मुनीनामपि मनोहारिणीमवस्थामनुभवन्ती, महामोहतिरोहितविवेकलोचनेन मया दृष्टा कनकमञ्जरी हृष्टचेतसा पुलकितशरीरेण, कृत प्रधानसावत्सरवचनेन पाणिग्रहण, भ्रान्तानि मण्डलानि, प्रयुक्ता आचारा, विहिता लोकोपचारा, वृत्तो महता विमर्देन विवाहयज्ञ । प्रविष्टोऽहमपहसितसुरभवने कनकमञ्जरीसनाथे वासभवने, अवगाहित सुरतामृतसागर, एव च प्रवर्धमानाऽनुरागयोरावयोर्गतानि कतिचिद्दिनानि ।

## वैश्वानरहिंसाप्रभावितकुमारचेष्टा

इतश्च विभाकरस्य कृत व्रणकर्म, प्रगुणीभूत शरीरेण, जातो मया सहाऽस्य स्नेहभाव, समुत्पन्नो विश्रम्भ । अन्यदा विधाय वहुमान प्रहित सपरिकरोऽसौ स्वस्थाने कनकचूडराजेन, येऽपि तेऽम्बरीषनामानश्चरटा वीरसेनप्रभृतयो हते प्रवरसेने प्रतिपन्नभृत्यभावा मया सह पूर्वमागता तेऽपि कृतसन्माना मया विसर्जिता गता स्वस्थाने । ततोऽह विगतचिन्तासन्तापरताभ्या रत्नवतीकनकमञ्जरीभ्यामानन्दमहोदधिमवगाहमान स्थितस्तत्रैव कियन्तमपि काल, अस्यापि च व्यतिकरस्य परमार्थत स एव पुण्योदय कारण, मम तु महामोहवशेन तदा प्रतिष्ठित हृदये यदुत–अहो हिंसावैश्वानरयो प्रभावातिशय, अनयोर्हि माहात्म्येन मयेय निरुपमाऽऽनन्दाऽमृतरसकूपिका कनकमञ्जरी लब्धेति । यत कथित तेतले कपिञ्जलया कनकचूडराजादाकर्णित मणिमञ्जरीवचन यथा–यतोऽनेन नन्दिवर्धनकुमारेण महावलावपि द्रुमसमरसेनौ लीलया विनिपातितौ, तस्मादस्मै युक्तेय दातु कनकमञ्जरीति । तौ च द्रुमसमरसेना मया हिंसावैश्वानरप्रभावादेव विनिपातितौ, तस्मात्परमार्थतो हिंसावैश्वानराभ्यामेव ममेय कनकमञ्जरी सपादितेति । ततो जात मे गाढतर हिंसावैश्वानरस्नेहप्रतिवद्धमन्त करण, ततो वैश्वानरवचनेन ते क्रूरचित्ताभिधानैर्वटकै प्रतिदिनमुपयुज्यमानैर्जनित चण्डत्व, सपादितमसहनत्व, विहिता रौद्रता, निर्वर्तितो भासुररौद्रभाव, गताऽङ्गाङ्गीभाव क्रूरता, जातोऽह स्वरूप तिरोधाय साक्षादिव वैश्वानर । ततो नापेक्षे वटकोपयोग,

कि तर्हि? सततप्रज्वलितोऽहमाक्रोशामि हितभाषिणं, ताडयामि निष्कारणमेव परिजन, । हिसया तु पुन पुनराश्लिष्यमाणस्य मे सजातमाखेटकव्यसनं, तत प्रतिदिन निपातयामि स्माऽहमनेकजन्तुसघात, दृष्टं तन्मदीयचेष्टित कनकशेखरेण । चिन्तितमनेन – अहो किमिदमीदृशमस्याऽसमञ्जस चरितम् ?

## कनकशेखरसूचितदोषद्वयम्

तथाहि–रूपवान् कुलज शूर, कृतविद्यो महारथ । तथाप्यय ममाभाति, न किञ्चिन्नन्दिवर्धन ॥१॥
यतोऽसौ (ऽय प्र) हिसयाऽऽश्लिष्टो, युक्तो वैश्वानरेण च । परोपतापनिरतो धर्माद्दूरेण वर्तते ॥२॥
अतो नोपेक्षितु युक्तो, ममाऽय हितकारिण । वचने यदि वर्तेत, स्यादस्मै हितमुत्तमम् ॥३॥
केवलस्य च मे वाक्य, कदाचिन्न करोत्ययम् । ताताऽभ्यर्णे पुन प्रोक्त, कुर्यात्तत्तातलज्जया ॥४॥
तदेन तातसहित, शिक्षयामि तथा कृते । हिसावैश्वानरौ हित्वा, स्यादेष गुणभाजनम् ॥५॥

तत कृतो गृहीतार्थ कनकशेखरेण राजा । अन्यदा प्रविष्टोऽह राजास्थाने, विहितप्रतिपत्तिर्निविष्टोऽह नरेन्द्रसमीपे, तत श्लाघितोऽहं कनकचूडराजेन । कनकशेखरेणाऽभिहित→तात । एवविध एवाऽय नन्दिवर्धन स्वरूपेण, केवलमिदमेकमस्य विरूपक–यदेष सता गर्हिते कुससर्गे वर्तते । नृपतिराह कीदृशोऽस्य कुससर्ग? कनकशेखरेणाऽभिहित–अस्त्यस्य स्वरूपोपतापहेतु सर्वानर्थकारणं वैश्वानरो नाम बालवयस्य, तथा विद्यतेऽस्य श्रूयमाणाऽपि जगतस्त्रासकारिणी महापापहेतुर्हिंसा नाम भार्या, ताभ्या च युक्तस्याऽस्येक्षुकुसुमस्येव निष्फलेव शेषगुणधवलता। नृपतिराह→यद्येव तत स्तयो पापयोस्त्याग एव श्रेयान् नाश्रयणम् ।

तथाहि–वयस्य स विधातव्यो, नरेण हितमिच्छता । इहाऽमुत्र च य श्रेयान्, न लोकद्वयनाशक ॥१॥
तथा–सा भार्या विदुषा कार्या, या लोकाह्लादकारिका । धर्मसाधनहेतुश्च, न पुनर्दुष्टचेष्टिता ॥२॥

## नन्दिवर्धनस्य धृष्टता

एव च वदतोस्तयोर्वचनेन सतत ज्वलमानोऽपि वह्निरिव सर्पिषा गाढतर प्रज्वलितोऽह, ततो मया व्याधूनितमुत्तमाङ्ग आस्फोटित करतलेन भूमिपृष्ठ, विमुक्त प्रलयनिर्घाताकारो हुङ्कार, आलोकितमुग्रचलत्तारिकया दृष्ट्या तयोरभिमुख अभिहितश्च राजा→अरे मृतक। मदीयजीवित वैश्वानर हिसा च पापतया कल्पयसि, न लक्षयसि कस्य प्रसादात्त्वयेद राज्य समासादित, कि तर्हि? मदीयवैश्वानरमन्तरेण भवत पित्राऽपि स समरसेनो द्रुमो वा निहन्तुं शक्येत? कनकशेखर पुनरेवमभिहित →अरे वृषल। कि मत्तोऽपि पण्डिततरस्त्वमसि? येनैव मा शिक्षयसि, ततस्तदवलोक्याऽऽकर्ण्य च मदीयवचन विस्मितोऽसौ राजा, कृत कनकशेखरेण स्मेर मुखम् । मया चिन्तित→अये। नैतौ मा गणयत, तत समाकृष्टा चमत्कुर्वाणा क्षुरिका । अभिहित च→अरे गेहेनर्दिनौ। दर्शयामि भवतो स्वकीयवैश्वानरवीर्यं, प्रहरणहस्तौ भवत, तत समुत्खातक्षुरिक, ललमानजिह्व यममिव मामवलोक्य दूरीभूत राजक, न चलितौ राजकनकशेखरौ तत सन्निहिततया पुण्योदयस्य, महाप्रतापतया राजकनकशेखरयोर्भवितव्यतावशेन चादत्त्वैव प्रहार निर्गतोऽहमास्थानाद्, गत स्वभवन, तत प्रभृत्यपकर्णितोऽह कनकचूडकनकशेखराभ्या, मयाऽपि दृष्टौ तौ शत्रुरूपौ, विच्छिन्न परस्पर लोकव्यवहारोऽपीति।

## वङ्गपतिकृतजयस्थलाक्रमण नन्दिवर्धनस्य च तत्र गमनम्

अन्यदा समागतो जयस्थलाद्दारुको (णक प्र) नाम दूत, प्रत्यभिज्ञातो मया, निवेदितमनेन यथा→कुमार। महत्तमै प्रहितोऽहम्। मया चिन्तित–अये । किमिति महत्तमै प्रहितोऽय, न पुनस्तातेन। ततो जाताऽऽशङ्केन पृष्टोऽसौ मया अपि कुशल तातस्य? दारुक (णक प्र) प्राह→कुशल, केवलमस्ति वङ्गाधिपतिर्यवनो नाम राजा, तेन चागत्य महाबलतया समन्तान्निरुद्ध नगर, स्वीकृतो बहिर्विषय, दापितानि स्थानकानि, भग्न पर्याहार, न चास्ति कश्चित्तन्निराकरणोपाय, तत क्षीरसागरगम्भीरहृदयोऽपि मनागाकुलीभूतो देव, विषण्णा मन्त्रिण, उन्मनीभूता महत्तमा, त्रस्ता नागरका, किम्बहुना? न जाने किमत्र भविष्यति? इति वितर्केण सजात सर्वमपि दैवशरण तन्नगर, ततो मन्त्रिमहत्तमै कृतपर्यालोच स्थापित सिद्धान्तो यदुत–नन्दिवर्धनकुमार एव यदि परमेन यवनहतकमुत्सादयति, नापर पुरुष इति । ततो मतिधनेनाभिहित– ज्ञाप्यतामिदमेवस्थितमेव देवाय । बुद्धिविशालेनाभिहित→नैवेद देवाय ज्ञापनीयम् । मतिधन प्राह→कोऽत्र दोष ? बुद्धिविशालेनाऽभिहित–[illegible]लतया देवस्य कदाचिदेवविधसङ्कटे नन्दिवर्धनाऽऽगमन न प्रतिभासते(सेत), तस्माद्देवस्याऽज्ञापनमेव श्रेय । । –साधु

साधु उपपद्यमान मन्त्रित बुद्धिविशालेन, मतिधन। किमत्राऽन्येन विकल्पेन? प्रेष्यता कुमाराऽऽह्वानाय प्रच्छन्न एव दूत येन सर्वत्र शान्ति सपद्यते। मतिधनेनाऽभिहित→एव भवतु। तत सर्वरोचकेन प्रहितोऽहमिति। तदिद दूतवचनमाकर्ण्योल्ल–सितो वैश्वानर, भविष्यति मम चास्तरोऽवसर इति प्रहसिता हिसा। मयाऽभिहित→अरे! ताडयत प्रस्थानभेरिं, सज्जीकुरुत चतुरङ्गसेनां तथा कृत नियुक्ते। तत सर्वबलेन चलितोऽह, नाख्यात कनकचूडकनकशेखरयो, केवल कनकमञ्जरीवत्सलतया प्रवृत्ता मणिमञ्जरी, ततोऽनवरतप्रयाणके प्राप्ता वय जयस्थलाऽऽसन्ने। अभिहितो मया वैश्वानरो यदुत–वयस्य! सततप्रवृत्ता ममाऽधुना तेजस्विता नाऽपेक्षते वटकोपयोग, तत्किमत्र कारणमिति? वैश्वानरेणाऽभिहित–कुमार! निष्कृत्रिमभक्तिग्राह्या वयं, अतुला च ममोपरि कुमारस्य भक्ति, मद्वीर्यप्रभवाणि चेतानि क्रूरचित्तानि वटकानि भक्तिमतामेव पुसा शरीरे प्रचरन्ति, तेन प्रचारितानि कुमारस्य शरीरे, गतानि तन्मयता, किम्बहुना? मद्रूप एवाऽधुना वीर्येण कुमारो वर्तते। अन्यच्च–कुमार! मदीयवचनाऽनुभावादेवेयमपि हिसाऽधुना कुमारस्य प्रतिपन्ना सात्मीभाव, नात्र सन्देहो विधेय। मयाऽभिहित–अद्यापि सन्देह ?।

## यवनराजस्य पराजयो मृतिश्च

ततो यावदेतावानावयोर्जल्प सपद्यते स्म तावद्दर्शनवीथिमवतीर्णं परबल, दृष्टमनेनाऽस्मदनीक, ततस्तत्सनद्धमागतमभिमुख, तत सलग्नमायोधनम्। तच्च कीदृशम् ?–

रथौघघर्घरारव, गजेन्द्रगर्ज(र्जि प्र)दारुणम्। महाश्वहेषितोद्धुर, पदातिशब्दभीषणम्। ॥१॥
क्षणेन च तत्किभूत सपन्नम् ?→विदीर्णचक्रकूबर, विभिन्नमत्तकुञ्जरम्। विनाथवाजिराजित, पतत्पदातिमस्तकम्। ॥२॥
प्रजातसैन्यतानव, प्रनष्टदेवदानवम्। असिग्रहप्रवर्धक, प्रनृत्तसत्कवन्धकम्। ॥३॥

ततोऽभिभूता यवनराजसेनयाऽस्मत्पताकिनी, समुल्लसितस्तद्बले कलकल। ततो वलितोऽहमेककस्तदभिमुख, समापतितो मया सह योद्धु स्वयमेव यवनराज, रणरभसेन चातीव मिलितौ स्यन्दनौ। तत स्थित्वाऽह कूबराग्रे चरण दत्त्वा पतितस्तत्स्यन्दने, त्रोटित स्वहस्तेन यवनराजस्य मस्तकम्।

तत प्रादुर्भवत्तोपलसज्जयजयारवम्। अस्मद्बल परावृत्य, समायात मदन्तिकम् ॥१॥
अन्यच्च तदा–देवदानवगन्धर्वा, वर्णयन्त पराक्रमम्। मम गन्धोदक पुष्पैर्मिश्र मुञ्चन्ति मस्तके ॥२॥
ततश्च तत्परानीक, क्षणेन हतनायकम्। जात मे किङ्करं सर्वमाज्ञानिर्देशकारकम् ॥३॥
निर्गत्य नगरात्तातो, हर्षेण सह बन्धुभि। समागत समीप मे, नगर च सबालकम् ॥४॥

## मातापित्रोर्मिलन पौरजनकृतहर्षोत्सवश्च

ततो रथादवतीर्य पतितोऽह तातपादयो, गृहीत्वाऽसदेशयोरूर्ध्वीकृत्याऽऽनन्दोदकवर्षेण स्नपयता समालिङ्गितोऽहं तातेन चुम्बितो मुहुर्मुहुर्मूर्धदेशे। ततो दृष्टा मयाऽम्बा, कृतं तस्या पादपतन, समालिङ्गितोऽहमम्बया, चुम्बितो मस्तके, अभिहितश्चानन्दाश्रुपरिपूर्णलोचनया गद्गदया गिरा यथा→पुत्र! वज्रशिलासम्पुटघटितमेतत्ते जनन्या सम्बन्धि हतहृदय यत्तवापि विरहे न शतधा विदीर्णं, निसारितानि च वयममुष्माद्गर्भवासादिव नगररोधकाद्भवता, अतो ममापि जीवितेन चिर जीवेति। ततो लज्जितोऽह स्थितो मनागधोमुख, समारूढानि सर्वाण्यपि रथवरे।

ततश्च–हृष्टा वैरिविमर्दैन, तुष्टा मत्सङ्गमेन च। ते राजलोका सर्वेऽपि, तदा किं किं न कुर्वते ? ॥१॥
तथाहि–केचिद्ददति दानानि, केचिद् गायन्ति भाविता। उद्दामतूर्यनिर्घोषे, केचिन्नृत्यन्ति निर्भरम् ॥२॥
केचित्कलकलायन्ते, केचिदुत्कृष्टनादिन। काश्मीरचन्दनक्षोदे, केचित्केलिपरायणा ॥३॥
केचिद्वस्त्राणि वर्षन्ति, तथाऽन्ये हासपूर्वकम्। हरन्ति पूर्णपात्राणि, वलमाना परस्परम् ॥४॥
तुष्टो नागरको लोको, वलान्ते कुब्जवामना। कृतोर्ध्वबाहवो नृत्ता, सर्वेऽन्तपुरपालका ॥५॥
एवं महाप्रमोदेन, प्रविश्य नगर तत। स्थित्वा राजकुले किञ्चिद्गतोऽह निजमन्दिरे ॥६॥
दिवसोचितकर्तव्य, तत्र सपाद्य सर्वथा। अनेकाद्भुतविस्तारदर्शनप्रीतमानस ॥७॥

## कुमारस्य मृगयाव्यसनेनोद्विग्न पितृवर्ग

सम कनकमञ्जर्या, रजन्या शयने स्थित। अथैव चिन्तयामि स्म, महामोहवशंगत ॥८॥
अहो वैश्वानरस्योच्चे, प्रभावोऽय महात्मन। ममेयमीदृशी जाता, यत कल्याणमालिका ॥९॥

आगतोऽह तदुत्साहाज्जाता तेजस्विता परा । तोषितौ जनकौ लोके, लब्धा जयपताकिका ॥10॥
अहो प्रभावो हिसाया, या विलोकनलीलया । करोत्येषा विशालाक्षी, मङ्क्षु वैरिविमर्दनम् ॥११॥
नात परतर मन्ये, प्रभावे वृद्धिकारकम् । यथेय मम हिसेति, प्रत्यक्षफलदायिनी ॥१२॥
ततो गाढतर रक्तोऽह वैश्वानरहिसयो । सिद्धान्त हृदयेनैव, स्थापयापि विशेषत ॥१३॥
एते मे परमौ बन्धू, एते परमदेवता (ते प्र) । एते एव हिते मन्ये, सर्वमत्र प्रतिष्ठितम् ॥१४॥
एते य श्लाघयेद्धन्य, स मे बन्धु स मे सुहृत् । एते यो द्वेष्टि मूढात्मा, स मे शत्रुर्न सशय ॥१५॥
न पुनरतद्विजानामि, महामोहपरायण । यथा पुण्योदयाज्जात, ममेद सर्वमञ्जसा ॥१६॥
हिसावैश्वानराऽऽसक्त, पुण्योदयपराङ्मुख । ततोऽह धर्ममार्गस्य, दूराद् दूरतर गत ॥१७॥
ततश्च–रात्रिशेषे समुत्थाय, पापर्द्धौ बद्धमानस । ताताम्वादीनदृष्ट्वैव, गतोऽटव्यामह तत ॥१८॥
अनेकसत्त्वसम्भार, मारयित्वा गते दिने । सन्ध्याया पुनरायात, प्रविष्टो भवने निजे ॥१९॥
अथाऽसौ विदुर प्रोक्तस्तातेनाऽऽकुलचेतसा । मत्समीपे कुमारोऽद्य, कि नायात? निरूपय ॥20॥
विदुरेणोक्त प्रभातेऽह, स्मृत्वा मैत्री चिरन्तनीम् । दर्शनार्थं कुमारस्य, गतस्तस्यैव मन्दिरे ॥२१॥
तत परिजनेनोक्त, यथाऽऽखेटककाम्यया । रात्रावेव गतोऽटव्या, कुमारो नास्ति भो । गृहे ॥२२॥

ततो मयाऽभिहित–किमद्यैव कुमारो गत पापर्द्धिवुद्ध्या? कि वा प्रतिदिन गच्छति? इति। परिजन प्राह→भद्र। यत प्रभृतीय हिसा परिणीता कुमारेण, तत आरभ्य प्रतिदिन गच्छति, नान्यथा धृति लभते, किम्बहुना? जीवितादपि वल्लभोऽयमधुना आखेटक कुमारस्येति । मया चिन्तित अहो हता दैवेन वय मन्दभाग्या । तदिदमाभाणकमायात यदुत–*'यत्करभस्य पृष्ठे न माति तत्कण्ठे निवध्यते'* इति । तथाहि वैश्वानरपापमित्रयोगेनैव कुमारस्य गाढमुद्वेजिता वय यावतेयमपरा कृत्येवास्य भार्या सपन्नेति, तत्कि पुनरत्र विधेयमिति चिन्तयतो मे गत दिन, तदिद कुमारस्य युष्मत्समीपेऽनागमनकारणमिति । तातेनाभिहित–विदुर। महापापहेतुरिद मृगयाव्यसन, न च सेवितमस्मद्वशजैर्नरपतिभि, अतो यद्यस्य निमित्तभूतेय भार्या कुमारस्याऽपसार्यते तत सुन्दर भवति । विदुर प्राह→देव। वैश्वानरवन्निरुपक्रमेय लक्ष्यते। अथवा श्रूयते पुनरप्यायातोऽत्र नगरे स जिनमतज्ञो नैमित्तिक, तत स एवाहूय प्रष्टु युक्तो यदत्र कर्तव्यमिति । तातेनाभिहित→आकारय तर्हि त नैमित्तिकम् । विदुरेणोक्त→यदाज्ञापयति देव ।

## जिनमतज्ञदर्शितोपाय चारुतादेवीवर्णनम्

ततो निर्गतो विदुर, समागत स्तोकवेलाया गृहीत्वा जिनमतज्ञ, ततो विधाय तस्य प्रतिपत्तिमाख्यात तातेन प्रयोजन, ततो निरूपित बुद्धिनाडीसञ्चारतो नैमित्तिकेन । अभिहित च यथा→महाराज। एक एवाऽत्र परमुपायो विद्यते, स यदि सपद्येत तत स्वयमेव प्रलीयेत कुमारस्येयमनर्थकारिणी हिसाभिधाना भार्या । तातेनाभिहित→कीदृश स? इति कथयत्वार्य ।

जिनमतज्ञेनाऽभिहित→यत्तदा (पृष्ठाङ्क 71 to73) वर्णित समक्षमेव भवता, यथा–अरित रहित सर्वोपद्रवैर्निवासस्थान समस्तगुणाना, कारण कल्याणपरम्पराया, दुर्लभ मन्दभागधेयैश्चित्तसोन्दर्य नगर, तत्र च यो वर्णित यथा→अरित हितकारी लोकाना, कृतोद्योगो दुष्टनिग्रहे, दत्ताऽवधान शिष्टपरिपालने, परिपूर्ण कोशदण्डसमुदयेन शुभपरिणामो नाम राजा । तस्य राज्ञो यथासौ क्षान्तेर्जनयित्री निष्प्रकम्पता नाम महादेवी, तदा वर्णिता तथैव तस्याऽन्याऽपि द्वितीयाऽस्ति हितकारिणी लोकाना, निकषभूमि सर्वशास्त्रार्थाना, प्रवर्तिका सदनुष्ठानाना, दूरवर्त्तिनी पापाना चारुता नाम राज्ञी ।

तथाहि–तावदुखानि ससारे, लभन्ते सर्वजन्तव । स्वर्गापवर्गमार्गं च, न लभन्ते कदाचन ॥१॥
यावत्सा चारुता देवी, तैर्न सम्यग् निषेव्यते । यदा पुनर्निषेवन्ते, ता देवी ते विधानत ॥२॥
लब्ध्वा कल्याणसन्दोह, तदा यान्ति शिव नरा । अत सा चारुता देवी, *लोकाना हितकारिणी* [युग्मम्] ॥३॥
ससारसागरोत्तारकारणानि महात्मनाम् । लोके लोकोत्तरे वाऽपि, यानि शास्त्राणि कानिचित् ॥४॥
तेषु सर्वेषु शास्त्रेषु, वर्णिता परमार्थत । उपादेयतया देवी, सा प्राज्ञैस्तत्त्वचिन्तकै· [युग्मम] ॥५॥
तेन सा *निकषस्थान, शास्त्राणामिह* गीयते । ता विना सर्वशास्त्रार्थोऽसद्बुद्धिप्रकरायते ॥६॥

दान शील तपो ध्यान, गुरुपूजा शमो दम । एवमादीनि लोकेऽत्र, चारुकर्माणि भावत ॥७॥
प्रवर्तयति सा देवी, स्वबलेन महात्मनाम् । तेन सा [1]*सदनुष्ठानजनकेति* निरुच्यते [युग्मम्] ॥८॥
कामक्रोधभयद्रोहमोहमात्सर्यविभ्रमा । शाठ्यपैशुन्यरागाद्या, ये लोके पापहेतव ॥९॥
तेषा तया सहाऽवस्था, नास्त्येव भुवनत्रये । अत सा चारुता देवी, *पापाना दूरवर्तिनी* ॥10॥

## दयाप्रभावकथनम्

तस्याश्च शुभपरिणामसम्बन्धिन्याश्चारुताया महादेव्या आह्लादहेतुर्जगत, सुन्दरा रूपेण, वल्लभा बन्धूना, कारणमानन्दपरम्पराया, सतत मुनीनामपि हृदयवासिनी विद्यते दया नाम दुहिता ।

तथाहि–सर्वे चराचरा जीवा, भुवनोदरचारिण । दुख वा मरण वाऽपि, नाभिकाङ्क्षन्ति सर्वदा ॥१॥
ततश्च–सा दया द्वयमप्येतद्वारयत्येव देहिनाम् । तेन सा *भुवनाह्लादकारण* परिकीर्तिता ॥२॥
मुख शशधराकार, [2]माभीर्दानाख्यमुत्तमम् । सद्दानदुखत्राणाख्यौ, दयाया पीवरौ स्तनौ ॥३॥
विस्तीर्णं जगदानन्द, शमाख्य जघनस्थलम् । यद्वा नास्त्येव तद्देहे, किञ्चिदङ्गमसुन्दरम् ॥४॥
*रूपेण सुन्दरा* प्रोक्ता, तेन सा मुनिपुङ्गवै । यथेष्टा बन्धुवर्गस्य, तथेदानी निगद्यते ॥५॥
क्षान्ति शुभपरिणामश्च, चारुता निष्प्रकम्पता । शौचसन्तोषधैर्याद्या, दयाया बान्धवा मता ॥६॥
तेषा तु सतताह्लादकारिणी हृदि सस्थिता [हृदयस्थिता मु] । तेना*तिवल्लभा* प्रोक्ता, *बन्धुवर्गस्य* सा दया ॥७॥
सुरेषु मर्त्यलोके च, मोक्षे च सुखपद्धति । दयापरीतचित्ताना, वर्तते करवर्तिनी ॥८॥
*आनन्दपद्धतेर्हेतुस्तेन* सा कन्यका मता । अत एव *सुसाधूना, हृदये* सा *प्रतिष्ठिता* ॥९॥
अथवा–दया हितकरी लोके, दया सर्वगुणावहा । दया हि धर्मसर्वस्व, दया दोषनिषूदनी ॥10॥
दयैव चित्तसन्तापविध्यापनपरायणा । दयावता न जायन्ते, नून वैरपरम्परा ॥११॥
कि चात्र बहुनोक्तेन? गुणसम्भारगौरवम् । वहन्ती पद्मपत्राक्षी, सा दया केन वर्ण्यताम् ? ॥१२॥
तदत्र परमार्थोऽय, महाराजाय कथ्यते । हिसाया प्रलयोपायो, नापरोऽत्र निरीक्ष्यते ॥१३॥
यदैष ता दया धीर, कुमार परिणेष्यति । तदाऽस्य स्वयमेवैषा, दुष्टा भार्या विनङ्क्ष्यति ॥१४॥
यतः–इय दाहात्मिका पापा, सा पुनर्हिमशीतला । ततोऽनयोर्विरोधोऽस्ति, यथाऽग्निजलयो सदा ॥१५॥

## दयालाभोपाय

ततस्तातेनाऽभिहित→आर्य! कदा पुनरेष नन्दिवर्धनकुमारस्ता दयाकन्यका परिणेष्यति? जिनमतज्ञेनाऽभिहित→यदा शुभपरिणामो दास्यति । तात प्राह→स एव तर्हि कदा दास्यति? जिनमतज्ञेनाऽभिहितं–यदा कुमार प्रति प्रगुणो भविष्यति। तातेनाभिहित→कस्तर्हि तस्य प्रगुणीभवनोपाय ? जिनमतज्ञ प्राह→कथित पूर्वमेवेद मया भवता यथा त शुभपरिणामनरेश्वरं यदि पर कर्मपरिणाममहाराज प्रगुणयितु समर्थो, नापर, यतस्तदायत्तोऽसौ वर्तते, तस्मात्किमत्र बहुना? यदा स कर्मपरिणाम–महानरेन्द्र कुमार प्रति सप्रसादो भविष्यति तदा स्वयमेव शुभपरिणामेनास्मै कुमाराय दयादारिका दापयिष्यति, कि चिन्तया? अन्यच्च–लक्षयाम्येवाऽह निमित्तबलेन कुमारस्य भव्यतामपेक्ष्य युक्तिबलेन च यदुत–नियमेन क्वचित्काले सप्रसादो भविष्यत्येन कुमार प्रति कर्मपरिणामो, नात्र सन्देह, ततश्च तस्मिन् काले आपृच्छ्य महत्तमभगिनी लोकस्थितिं, पर्यालोच्य सह कालपरिणत्या निजभार्यया, कथयित्वाऽऽत्मीयमहत्तमाय स्वभावाय, सभाल्य च खर [स्वर मु] मधुरवचनैरस्यैव नन्दिवर्धनकुमारस्य सम्बन्धिनी समस्तभवान्तरानुयायिनी प्रच्छन्नरूपामन्तरङ्गभार्यां भवितव्यता, दीपयित्वा नियतियदृच्छादीना कुमारवीर्यं, स्थापयित्वा दयादारिकादानस्य योग्योऽयमिति सर्वसमक्ष सिद्धान्तपक्ष ततो दापयिष्यत्येव स कर्मपरिणाममहाराजो दयादारिका कुमाराय, निसन्दिग्धमेतद्, अतो मुञ्चत यूयमाकुलताम् । तात प्राह→तत्किमधुनाऽस्माक प्राप्तकालम्? जिनमतज्ञेनोक्त→मौनमवधीरणा च । तातेनाऽभिहित→आर्य! किमात्मपुत्रोऽस्माभिरवधीरयितु शक्यते? जिनमतज्ञ प्राह→तत्किमत्र क्रियताम्? यदि हि बहिरङ्गोऽयमुपद्रव कुमारस्य स्यात्, ततो न युज्येत कर्तुं तत्र भवतामवधीरणा, अय पुनरन्तरङ्ग उपद्रवो वर्तते, ततस्तमवधीरयन्तोऽपि भवन्तो नोपालम्भमर्हन्ति । ततो यदादिशत्यार्य इति वदता तातेन परिपूज्य प्रहितो नैमित्तिक।

---

1 जनयतादिति जनका 'आशिष्यकन्' इत्यकनि नित्वान्नेकार । 2 'माभीर्दान' = अभयदानम् ।

## नन्दिवर्धनस्य यौवराज्ये स्थापन स्फुटवचनदूतागमन च

गतानि कतिचिद्दिनानि । समुत्पन्नेय तातस्य बुद्धि यथा→स्थापयामि यौवराज्ये नन्दिवर्धनकुमार, ज्ञापित महत्तमानां, प्रतिपन्नमेतै, गणित प्रशस्तदिन, कृताऽभिषेकसामग्री, समाहूतोऽह, विरचित भद्रासन, मीलिता सामन्ता, समागता नागरका, सविधापितानि [सनिधापितानि मु] माङ्गलिकानि, प्रकटितानि रत्नानि, प्रत्यासन्नीभूतान्यन्त पुराणि । अत्रान्तरे प्रविष्टा प्रतीहारी, कृत तया पादपतन, विरचित करपुटकुड्मल, निवेशित ललाटपट्टे, गदितमनया→देव । अरिदमननृपते सम्वन्धी स्फुटवचनो नाम महत्तम प्रतीहारभूमौ तिष्ठति, एतदाकर्ण्य देव प्रमाणम् । तातेनाभिहित→शीघ्र प्रवेशय, प्रवेशित प्रतीहार्या, विहिता प्रतिपत्ति, अभिहित स्फुटवचनेन—'महाराज! श्रुतो मया वहिरेव कुमारस्य यौवराज्याभिषेकव्यतिकर, तेनाहं शुभमुहूर्तोऽयमितिकृत्वा स्वप्रयोजनसिद्धये त्वरिततर प्रविष्ट' । तातेनाभिहित→सुन्दरमनुष्ठितं, निवेदयतु स्वप्रयोजनमार्य । स्फुटवचन ाह—'अस्ति तावद्विदित एव भवादृशा शार्दूलपुराधिपति सुगृहीतनामधेयो देवोऽरिदमन । तस्याऽस्ति विनिर्जितरतिरूपा रतिचूला नाम महादेवी । तस्याश्चाऽचिन्त्यगुणरत्नमञ्जूषा मदनमञ्जूषा नाम दुहिता, तया च लोकप्रवादेनाकर्णित नन्दिवर्धनकुमारचरित, ततो जातस्तस्या कुमारेऽनुरागाऽतिरेक, निवेदित स्वाभिप्रायो रतिचूलायै, तयाऽपि कथितो देवाय, ततस्ता मदनमञ्जूषा कुमाराय प्रदातु युष्मत्समीपे प्रहितोऽह देवेन, अधुना महाराज प्रमाणम् ।' ततो निरीक्षित तातेन मतिधनवदनम्, मतिधन प्राह→देव । महापुरुषोऽरिदमन, युक्त एव देवस्य तेन सार्धं सम्वन्ध, ततोऽनुमन्यतामिद तस्य वचन, कोऽत्र विरोध ? तातेनाभिहित—एव भवतु ।

## स्फुटवचनकुमारयोर्विवाद कुटुम्बसहारश्च

अत्रान्तरे मयाऽभिहित→अहो कियद् दूरे तत्तावकीन शार्दूलपुरमित स्थानात् । स्फुटवचन· प्राह→सार्धयोजनशते। मयाऽभिहित→मैव वोच। स्फुटवचन प्राह→तर्हि यावद् दूरे तत्कथयतु स्वयमेव कुमार । मयाऽभिहित→गव्यूतेनोने सार्धयोजनशते। स्फुटवचन प्राह—किमेतत्? मयाऽभिहित—श्रुतमस्माभिर्वालकाले। स्फुटवचन प्राह→न सम्यगवधारित कुमारेण, मयोक्त→त्वया कथमवधारितम्? स्फुटवचन प्राह—गणित मया पद पदेन । मयाऽभिहित सुनिर्णीतमिदमस्माभि· प्याप्तप्रवादात् । स्फुटवचनेनोक्त→कुमार । विप्रतारित केनाऽपि, न चलतीद मदीय प्रमाण तिलतुषत्रिभागमात्रेणापि । ततो मामेष दुरात्मा लोकमध्येऽलीक करोतीति चिन्तयतो मे जृम्भित वैश्वानरेण, प्रहसित हिंसया, प्रयुक्ता योगशक्ति, कृतो द्वाभ्यामपि मदीयशरीरेऽनुप्रवेश । तत सजातोऽह साक्षादिव प्रलयज्वलन, समाकृष्ट दिनकरकरनिकरकराल करवालम् । अत्रान्तरे चिन्तित पुण्योदयेन यदुत→पूर्णो ममाऽधुनाऽवधि, पालितो भवितव्यतानिर्देश, न योग्योऽयमिदानीं नन्दिवर्धनकुमारो मत्सम्वन्धस्य, तस्मादपक्रमणमेव मेऽधुना श्रेय इत्यालोच्य नष्ट पुण्योदय । मया कुर्वतो हाहारव तावतो जनसम् दायस्याऽग्रत एव अविचार्य कार्याकार्यमेकप्रहारेण कृतो द्विदल स्फुटवचन। ततो हा पुत्र! हा पुत्र! किमिदमकार्यमनुष्ठितमितिव्रुवाण समुत्थित सिंहासनात्तात, चलितो मदभिमुख वेगेन, मया चिन्तित—अयमप्येतद्रूप एव, यो दुरात्मा मयाऽपि कृतमिदमकार्यमित्यारटति, तत समुदीर्णखड्गो चलितोऽह ताताऽभिमुख, कृतो लोकेन कोलाहल, ततो मया न स्मृत जनकत्व, न लक्षिता स्नेहनिर्भरता, न गणित परमोपकारित्व, नालोचितो महापापागम । सर्वथा वैश्वानरहिंसावशीभूतचित्तेनाऽवलम्ब्य कर्मचाण्डालता तथैव रटतस्तातस्य त्रोटितमुत्तमाङ्ग, ततो हा जात । हा जात! मा साहस, मा साहस, त्रायध्व लोकास्त्रायध्वमिति विमुक्तकरुणाऽऽक्रन्दरवा आगत्य लग्ना ममाऽम्बा करे करवालोद्दालनार्थम्, मया चिन्तितं→इयमपि पापा मम वैरिणीव वर्तते, यैव शत्रूच्छेदपरेऽपि मयि लकशकायते, तत कृता साऽपि द्वेधा करवालेन, ततो हा भ्रात! हा कुमार! हा आर्यपुत्र! किमिदमारव्धमिति पूत्कुर्वाणानि शीलवर्धनो, मणिमञ्जरी, रत्नवती च लग्नानि त्रीण्यपि मम भुजयोरेककालमेव निवारणार्थम् । मया चिन्तित→एतत् कालोचित नूनममीषा सर्वेषामपि दुरात्मना, ततो गाढतर परिज्वलितोऽह, नीतानि त्रीण्यप्येकैकप्रहारेणाऽन्तकसदनम् । अत्रान्तरेऽमु व्यतिकरमाकर्ण्य हा आर्यपुत्र! किमिद किमिदमिति प्रलपन्ती प्राप्ता कनकमञ्जरी । मया चिन्तित—अये एषाऽपि पापा मद्वैरिणामेव मिलिता यैव विक्रोशति, अहो हृदयमपि मे वैरिभूत वर्तते, तत्किमनेन? अपनयाम्यस्या अपि वन्धुवत्सलत्व, ततो विगलिते प्रेमावन्धे, विस्मृता तद्विरहकातरता, न स्फुरितानि हृदये विश्रम्भजल्पितानि, अपहस्तिता रतिसुखसन्दोहा, न पर्यालोचितस्तस्या सम्वन्धी निरुपम स्नेहाऽनुवन्ध, सर्वथा वैश्वानरान्धवुद्धिना हिंसाक्रोडीकृतहृदयेन मया विदलिता करवालेन वराकी कनकमञ्जरी। अत्रान्तरे सरभेण गलित मे कटीतटात्परिधान, विलुलित भूमौ, निपतितमुत्तरीय क्षितितले, जातोऽहं

यथाजात, गत्कलीभूता केशा, सपन्न साक्षादिव वेताल, ततस्तथाभूत मामवलोक्य दूरवर्तिभि प्रेक्षकडिम्भरूपैर्हसद्भिरट्टहासेन कृता किलिकिलिका, तत सुतरा प्रज्वलितोऽह, चलितस्तन्मारणार्थं वेगेन, ततो मे भ्रातरो, भगिन्य, स्वजना, सामन्ताश्च लग्ना सर्वेऽप्येककाल निवारणार्थं, तत कृतान्त इव समदर्शितया समस्तानपि निर्दलयन्नह गत कियन्तमपि भूभाग, ततो भूरितया लोकस्य वनकरीव श्रमे पातयित्वा गृहीत कथञ्चिदह, उद्दालित मण्डलाग्र, बद्ध पश्चाद्बाहुबन्धेन, ततो रटन्नसभ्यवचनानि प्रक्षिप्तोऽपवरके, दत्ते कपाटे । तत्र च प्रज्वलन्ननुनयवचने, प्रलपन्नश्राव्यभाषया, ददान कपाटयोर्मस्तकास्फोटान्, क्षामो बुभुक्षया, पीडित पिपासया, दन्दह्यमानश्चित्तसन्तापेनाऽलभमानो निद्रा, महाघोरनारक इव तथाबद्ध एव स्थितो मासमात्र काल, अवधीरित परिजनेन ।

## नगरज्वालनम्

अन्यदाऽत्यन्तक्षीणतया समागता ममार्धरात्रे क्षणमात्र निद्रा, तत प्रसुप्तस्य छिन्न मे मूषकैर्बन्धन, जातोऽह मुत्कल उद्घाटिते कपाटे, निर्गतो बहिर्देशे, निरूपित राजकुल यावन्न कश्चिच्चेतयते । ततो मया चिन्तित–सर्वमेवेद राजकुल नगर च मम वैरिभूत वर्तते, येनाऽहमेव परिक्लेशित पापेन । ततो विजृम्भितो ममान्तर्वर्ती वैश्वानर, सहर्षया हुङ्कारित हिसया, दृष्ट मया प्रज्वलिताग्निकुण्ड, चिन्तित हृदये→अयमत्र वैरिनिर्यातनोपाय यदुत–गृहीत्वा शराव, भृत्वाऽङ्गाराणा ततो राजकुलस्य, नगरस्य च अपरापरेषु इन्धनबहुलेषु स्थानेषु स्तोकस्तोकास्तान्प्रक्षिपामि, तत स्वयमेव भस्मीभविष्यतीद द्वयमपि दुरात्मकमिति । तत कृत सर्वं तथैव तन्मया, लग्न समन्तात्प्रदीपनक, निर्गतोऽहमपि दह्यमान कथचिद्भवितव्यताविशेषेण, प्रवृत्तो जनाऽऽक्रन्दरव, धावन्ति स्म लात लातेति ब्रुवाणा परबलशङ्कया सुभटा । तत क्षीणतया शरीरस्य, परस्परानुविद्धतया शरीरमनसोर्विगलित धैर्यं, समुत्पन्न मे भय, पलायितोऽटवीसमुख, पतितो महारण्ये, विद्ध कण्टके, स्फोटित कीलके, परिभ्रष्टो मार्गात्, प्रस्खलितो विषमोट्टङ्कात्, निपतितोऽधोमुखो निम्नदेशे, चूर्णितान्यङ्गोपाङ्गानि न शक्नोम्युत्थातुम् ।

## अटव्या चौराधीन

अत्रान्तरे समागताश्चौरा, दृष्टस्तैस्तथावस्थितोऽह, अभिहितममीभि परस्पर→अरे । महाकायोऽय पुरुषो, लप्स्यते परकूले बहुमूल्य, तद् गृहीत्वा नयाम स्वस्वामिमूलमेनम् । तदाकर्ण्य समुल्लसितो ममान्तर्निमग्नो वैश्वानर, स्थितोऽहमुपविष्ट । ततस्तेषामेकेनाऽभिहित→अरे । विरूपकोऽस्याभिप्राय, तत शीघ्र बध्नीत यूयमेन, अन्यथा दुर्ग्रहो भविष्यति, ततो गाढतर [गाढ मु] हत्वा धनु शाखाभिर्नियन्त्रितोऽह पश्चान्मुखीकृत्य बाहू, ददतो गालीर्बद्ध मे वक्त्रकुहर, तत समुत्थापितोऽह परिहित जरच्चीवरखण्ड, खेटितो ददद्भिर्गाढप्रहारान्, नीत कनकपुरप्रत्यासन्ना भीमनिकेतनाभिधाना भिल्लपल्ली, दर्शितो रणवीरस्य पल्लीपते, अभिहितमनेन→अरे । पोषयत तावदेन, येन पुष्टो विक्रेतु नीयते, ततो यदाज्ञापयति देव इति वदता नीतोऽहमेकेन चौरेण स्वभवने, छोटित वदन, त्रोटित बन्धन, कृता मुत्कलो, लग्नोऽह चकारादिभि, कुपितश्चौरो, हतोऽह दण्डादिभिर्नवर समर्पितोऽय मम स्वामिनेति मत्वा न मारितोऽहमनेन, केवल दापित कदशन, ततो बुभुक्षाक्षामकुक्षितया सजात मे दैन्य, तदेव कदन्न भक्षयितुमारब्ध, न पूरितमुदर, सजातश्चित्तोद्वेग, गतानि कतिचिद्दिनानि, पृष्टोऽसो रणवीरेण चोर, कीदृशोऽसौ पुरुषो वर्तत इति । स प्राह→देव । न कथञ्चित्तस्य बलमारोहतीति, तत क्षपितोऽहमेव तेन भूयास कालम् ।

## कनकपुरे बन्दीतया गमनम्

अन्यदा समायात कनकपुराच्चोराणामुपरि दण्ड, नष्टास्तस्करा, लूषिता सा पल्ली, गृहीता बन्द्यो, नीता कनकपुर, गतोऽहमपि तन्मध्ये, दर्शिता बन्द्यो विभाकरनृपते । ततो मामवलोक्य चिन्तितमनेन→अये । किमिदमाश्चर्यम्? यदेष पुरुषोऽस्थिचर्मशेषतया दवदग्धस्थाणुकल्पोऽपि नन्दिवर्धनकुमाराकार धारयति, ततो निरूपितोऽह नखाग्रेभ्यो वालाग्राणि यावत्। तत स्थित तस्य हृदये→नन्दिवर्धनकुमार एवाय, केवल कथ तस्येह सभव ? अथवा विचित्राणि विधेर्विलसितानि, तद्वशगाना हि प्राणिना कि वा न सभवति ?

तथाहि–य एकदा नताशेषभूपमौल्यर्चितक्रम । वचने वचने लोकैर्जय देवेति भण्यते ॥१॥
स एव विधिना राजा, तस्मिन्नेव भवेऽन्यदा । रोराकार विधायोच्चैर्नानाकार विडम्ब्यते ॥२॥

## विभाकरदर्शितस्नेहस्तन्मारण च

तस्मात्स एवाय, नास्त्यत्र सन्देह । तत स्मृतमित्रभावेन गलदानन्दोदकप्रवाहक्षालितकपोलेन सिंहासनादुत्थाय समालिङ्गितोऽह विभाकरेण । तत किमेतदिति विस्मित राजमण्डल, ततो निवेश्यात्मीयार्धासनेऽभिहितोऽहमनेन→वयस्य! कोऽय वृत्तान्त ? तत कथित विभाकराय मयाऽऽत्मचरितम् । विभाकर प्राह—हा कष्ट, न सुन्दरमनुष्ठित भवता, यदिदमतिनिर्घृण जननीजनकादिमारणमाचरितम् । तत अयमपीह जन्मन्येव क्लेशो भवतस्तस्यैव फलविपाक, तच्छ्रुत्वा विस्फुरितौ ममान्तर्गतौ हिंसावैश्वानरौ, चिन्तित मया यथा—अयमपि मे वैरिरूप एव यो मत्कर्तव्यमप्यसुन्दर मन्यते, ततो जातो मे तन्मारणाभिप्राय, तथापि दुर्बलतया देहस्य, महाप्रतापतया विभाकरस्य, सन्निहिततया बहुराजवृन्दस्य, अतिनिकटवर्तितया प्रहरणस्य न दत्तो मया प्रहार, केवल कृत काल मुख, लक्षितो विभाकरेण मदीयोऽभिप्राय यथा—न सुखायतेऽस्य मदीयोऽय जल्प, तत् किमनेन सतापितेन? ततो विहित प्रस्तुतकथाविक्षेप, ज्ञापित सामन्तमहत्तमादीना यथा—एष नन्दिवर्धनकुमारो मम शरीर जीवित सर्वस्व बन्धुर्भ्राता, पूज्यो(पुण्यो)ऽद्य जातोऽहमस्य दर्शनेन, अत कुरुत प्रियसमागममहोत्सवमिति । तैरभिहित—यदाज्ञापयति देव, तत प्रवर्तितो महानन्द, स्नापितोऽह विधिना, परिधापितो दिव्यवस्त्राणि, भोजित परमान्नै, विलेपित सुरभिविलेपनेन, भूषितो महालङ्कारै, दत्त स्वयमेव विभाकरेण मनोहारि ताम्बूल, मया त्वहमनेनेदमभिहितो यथा—न सुन्दरमनुष्ठित भवतेति, ततो मारयिष्याम्येन वैरिणमिति रौद्रवितर्कपरम्परादोदूयमानचेतसा न किञ्चिच्चेतित । उत्थाय भोजनमण्डपादुपविष्टा वयमास्थानशालाया, मतिशेखरेण मन्त्रिणाऽभिहित—कि विदित कुमारेण? यथा देवभूय गत सुगृहीतनामधेयो देव **प्रभाकर**, ततो धूनिता मया कन्धरा, कृत विभाकरेण साश्रुलोचनयुगल, अभिहित च—वयस्य! ताते परोक्षेऽधुना युष्माभिस्तातकार्यमनुष्ठेय, तदिद राज्यमेते वयमेताश्च तातपादप्रसादलालिता प्रकृतय प्रतिपन्ना किङ्करभाव वयस्यस्य यथेष्ट नियोज्यन्ताम् । ततो वैश्वानरवैगुण्यादवस्थितोऽह मौनेन, लङ्घितो दिवसो, प्रदत्त प्रादोषिकमास्थान, तदन्ते विसर्जितराजमण्डलो निवार्य प्रियतमाप्रवेश मया सहाऽतिस्नेहनिर्भरतया महार्हायामेकस्यामेव शय्याया प्रसुप्तो वासभवने विभाकरनरेन्द्र, ततो भद्रेऽगृहीतसङ्केते! तदा मया वैश्वानरहिंसाभ्या विधुरितहृदयेन स तथाविधोऽतिस्निग्धमुग्धविश्रब्धो विभाकर समुत्थाय विनिपातित पापेन, निर्गतश्चाऽह परिधानद्वितीय स्वकर्मत्रासेन, पलायितो वेगेन, निपतितोऽटव्या, सोढानि नानाविधदुःखानि ।

## कनकशेखरमारणचेष्टा

प्राप्तो महता क्लेशेन कुशावर्ते, विश्रान्तो बहि कानने, दृष्ट कनकशेखरपरिकरेण, निवेदित[त मु]कनकचूडकनकशेखरयो, चिन्तितमाभ्या→भवितव्यमत्र कारणेन यदेकाकी नन्दिवर्धन इति । तत समागतो कतिचिदाप्तपुरुषपरिवारो मत्समीप, विहितमुचित, स्थितो मया सहोत्तारके कनकशेखर, पृष्टमेकाकिताकारणम् । मया चिन्तित→अस्याऽपि न प्रतिभासिष्यते मदीयचरित, तत्किं कथितेन ? ततो मयाऽभिहित→अलमनया कथया । कनकशेखर प्राह—कि मह्यमपि न कथ्यते? मयोक्त→नेति (नहि प्र) । कनकशेखरेणोक्त→कुमार! अवश्यतया कथनीयमितरथा न भवति मे चित्ते निर्वाण, ततो मया(दा)ऽऽदिष्टमयमुल्लङ्घयतीति चिन्तयतो मेऽन्तर्गतौ प्रज्वलितो हिंसावैश्वानरो, समाकृष्टा कनकशेखरकटीतटात्कृतान्त-जिह्वाभासुराऽसिपुत्रिका, समुद्गीर्ण कनकशेखरमारणाय प्रहार । तत किमेतदिति प्राप्ता वेगेन कनकचूडादय, प्रादुर्भूत कोलाहल, स्तम्भितोऽह कनकशेखरगुणाऽऽवर्जितया यथासन्निहितया देवतया, समुत्क्षिप्त पश्यतामेव तेषा गगनमार्गेण, नीतस्तद्विषयसन्धिदेशे ।

## देवताप्रभावोऽम्बरीषाणा मध्ये पतन च

क्षिप्तस्तेषामम्बरीषाभिधानाना वीरसेनादीना चरटाना मध्ये, दृष्टस्तैस्तथैवोद्गीर्णप्रहारो गृहीतक्षुरिक, प्रत्यभिज्ञातोऽमीभि, पतिता पादयोरभिहित च तै→देव! कोऽय वृत्तान्त ? न शकित मया जल्पितु, विस्मिताश्चरटा, आनीतमासन, न शकित मयोपवेष्टु, ततो गता दैन्यमेते, तत्करुणयोत्तम्भितोऽह देवतया, चलितान्यङ्गानि, हृष्टास्ते वराका, निवेशितोऽहमासने, पुनरपि पृष्ट प्रस्तुतव्यतिकर । मया चिन्तित→अहो यत्र यत्र व्रजामस्तत्र तत्र वयमेते परतप्तिपरायणैरलीकवत्सलैर्लोकैरासितु न लभामहे, ते त्वलब्धप्रतिवचना पुन पुनर्मां पृच्छन्ति स्म, ततो विस्फुरितो मे हिंसावैश्वानरौ, निपातिता कतिचिच्चरटा, जात कलकल, ततो बहुत्वात्तेषा गृहीता मम हस्तादसिपुत्रिका, बद्धोऽहमात्मभयेन । अत्रान्तरे गतोऽस्त दिनकर, विजृम्भित (समुल्लसित प्र) तिमिर, समालोचित चरटै यथा—पूर्ववैरिक एवायमस्माक नन्दिवर्धनो येन हत प्रवरसेनोऽधुनापि घातिता

एतेनैते प्रधनपुरुषा, तथापि प्रतिपन्नोऽस्माभिरेष स्वामिभावेन, प्रख्यापितो लोके, विज्ञातमेतद्देशान्तरेषु ततोऽस्य मारणे महानयशस्कार सपद्यते, नैष वह्निवत्पुद्गलके कथञ्चिद्धारयितु शक्य, तस्माद् दूरदेश नीत्वा त्याग एवाऽस्य श्रेयानिति स्थापित सिद्धान्त। ततो नियन्त्रितोऽह गन्त्र्यामारटश्च निवद्धो वस्त्रेण वदनदेशे, युक्तौ मनपवनगमनौ वृषभौ, प्रस्थापिता कतिचित्पुरुषा, खेटिता गन्त्री, गता रजन्येव द्वादश योजनानि, तत प्रापितोऽहमनवरतप्रयाणकै शार्दूलपुर त्यक्तो मलविलयाभिधाने वहिष्कानने, गता स्वस्थान सगन्त्रीकास्ते मनुष्या ।

### शार्दूलपूरस्य बहिरुद्याने केवल्यागमनम्

स्तोकवेलाया–अकाण्ड एव विजृम्भित सुरभिपवन, विमुक्त सहजोऽपि वैरानुवन्ध पशुगणे, भुवनश्रियेव तत्समाध्यासितं कानन, समवतीर्णा समकमेव सर्व ऋतव, प्रमुदिता विहङ्गमगणा, मनोहरमनुत्तालताल रण्टित मधुकरावलीभि, विगतताप विशेषतस्तम्‌देशमुद्योतयितुमारब्धो दिनकर, तथा ममापि मनाग्गलित इव चित्तसन्ताप । तदनन्तर च देहभूषणप्रभाप्रवाहेण द्योतयन्तो दिक्चक्रवाल समागतास्तत्र देवा, शोधित तैर्भूतल, वृष्टमतिसुरभिगन्धोदक, विमुक्त पञ्चवर्णमनोहारिकुसुमप्रकर, विरचित विशालमतिरमणीय मणिकुट्टिम, विहित तस्योपरि कनककमल, विस्तारितमुपरिष्टादेव दूष्यवितान, अवलम्बितास्तत्र मौक्तिकाऽवचूला । तत समुत्सुकैस्तैर्देवैरवलोकितमार्ग कल्पद्रुम इव यथेष्टफलदायितया, कनकगिरिरिव स्थिरतया, क्षीरनीरधिरिव गुणरत्नाकरतया, शशधर इव शीतलेश्यतया, दिनकर इव सप्रतापतया, चिन्तामणिरिव दुर्लभतया, स्फटिक इव निर्मलतया, भूभाग इव सर्वसहिष्णुतया, गगनतलमिव निरालम्बनतया, गन्धकरटीव वरकरिभि परिकरित स्वप्रतिविम्बकैरिव वहुविधविनेयै समागत केवलज्ञानदिवाकरो विवेको नामाचार्य । समुपविष्ट कनककमले, प्रणिपत्य विहितकरकुड्मला[मुकुला मु]निषण्णा परिषत्, प्रारव्ध व्याख्यानम् । अत्रान्तरे भगवत प्रताप सोढुमशक्नुवन्तौ मदीयशरीरान्निर्गतौ हिसावैश्वानरौ, दूरदेशे स्थितौ मा प्रतीक्षमाणौ।

### अरिदमननृपकृतवन्दनादिविधि

अथारिदमनो राजा, मुनि विज्ञाय लोकत । सपुरो निर्गतस्तस्य, मुनेर्वन्दनकाम्यया ॥१॥
तथा मदनमञ्जूषा, या दत्ता मम कन्यका । साऽपि तत्र समायाता, सहिता रतिचूलया ॥२॥
विहाय पञ्च चिह्नानि, भक्तिनिर्भरमानस । राजा कृतोत्तरासङ्ग, प्रविष्ट सूर्यवग्रहे ॥३॥
पञ्चाङ्गप्रणिपातेन, पादयोर्न्यस्तमस्तक । प्रणम्य सूरिं नौति स्म, ललाटे कृतकुड्मल ॥४॥
कथम्?– अज्ञानतिमिरोच्छेदकर! नाथ! दिवाकर! । नमस्ते रागसन्तापनाशकारिनिशाकर! ॥५॥
स्वपाददर्शनेनाऽद्य, नाथ ! कारुण्यसागर ! । भवता भवनिर्णाश! पूतपापा कृता वयम् ॥६॥
अद्यैव ननु जातोऽस्मि, राज्येऽद्यैव प्रतिष्ठित । अद्यैव पटुकर्णोऽस्मि, पश्याम्यद्येव चक्षुषा ॥७॥
यदद्याऽखिलसन्तापपापाऽजीर्णविरेचनम् । भाग्यससूचक मन्ये, सपन्न तव दर्शनम् ॥८॥
एवं सस्तुत्य राजेन्द्र, सूरिं सूदितकल्मषम् । प्रणम्य शेषसाधूश्च, निषण्ण शुद्धभूतले ॥९॥
स्वर्गाऽपवर्गपुण्यस्य[पण्यस्य मु]सत्यकार इवाखिलै । गुरुभिर्मुनिभिश्चोच्चैर्धर्मलाभ कृतो नृपे ॥10॥
तत कृतप्रणामेषु, शेषलोकेषु भावत । प्रयुक्तलोकयात्रेण, गुरुणाऽऽरम्भि देशना ॥११॥

### धर्मदुर्लभताया देशना

कथम् ?–भो भव्या! भवकान्तारे, पर्यटद्भिरनाहतम् । अत्यन्तदुर्लभो ह्येष, धर्म सर्वज्ञभाषित ॥१२॥
यत.–अनादिरेष ससार, कालोऽनादि प्रवाहत । जीवाश्चानादिका सर्वे, दृश्यन्ते ज्ञानचक्षुषा ॥१३॥
न चैते प्राप्नुवन्तोऽमुं, धर्मं सर्वज्ञभाषितम् । कदाचिदपि पूर्वं तु, तेनैते भवभाजनम् ॥१४॥
अथाऽवाप्तो भवेज्जैनो, धर्मोऽमीभि कदाचन । तत कुतो भवोऽमीषाम्? क्व तार्णं वह्निमीलके ? ॥१५॥
तस्मात्सुनिश्चित राजन्नेतन्नास्त्यत्र संशय । नेवाऽवाप्त पुरा धर्मो, जन्तुभिर्जिनदेशित ॥१६॥
एवं च स्थिते–यदाऽनादो भवेऽमीषा, मत्स्यानामिव सागरे । सदा दोलायमानाना, जीवाना दुखसङ्कुले ॥१७॥
स्वकर्मपरिणामेन भव्यत्वपरिपाकत । मनुष्यत्वादिसामग्र्या, तथा कालादियोगत ॥१८॥
धन्य सकलकल्याणजनकोऽचिन्त्यशक्तिक । यत्र क्वचिद्भवेज्जीवेऽनुग्रह पारमेश्वर ॥१९॥

स तदा लभते जीवो, दुर्भेदग्रन्थिभेदत । अशेषक्लेशनिर्णाशि, जैनेन्द्र तत्त्वदर्शनम् [चतुर्भि कलापकम्] ॥20॥
ततोऽसौ गृहिधर्मं वा, प्राप्नुयाज्जिनभाषितम् । लभते साधुसद्धर्मं, सर्वदु खविमोचकम् ॥२१॥
सा चेयती भवेत्कस्य, सामग्रीय सुदुर्लभा । राधावेधोपमानेन, धर्मप्राप्ति प्रकीर्तिता ॥२२॥
तदत्र लब्धे सद्धर्मे, कुरुध्व यत्नमुत्तमम् । अलब्धस्य तु लाभार्थं, घटध्वमिह हे जना । ॥२३॥

## जयस्थलीयप्रश्न

अत्रान्तरे चिन्तित नरेन्द्रेण→केवलज्ञानदिवाकरो भगवानय, नास्त्यस्य किञ्चिदज्ञेय, अत पृच्छामि भगवन्तमात्मीय सशय, अथवा पश्यत्येव भगवान्मदीय सन्देह जिज्ञासा वा, अत कथयतु ममानुग्रहेण। ततो भगवता सूरिणा भव्य–जनबोधनार्थमभिहितो नरेन्द्र→महाराज । वाचा पृच्छ, नृपतिनाऽभिहित–भदन्त । येय मदीयदुहिता मदनमञ्जूषा, अस्या पद्मनृपतिसुतनन्दिवर्धनकुमाराय दानार्थं प्रहितो मया जयस्थले स्फुटवचनो नाम महत्तम , गत कियानपि कालो, न निवृत्तोऽसौ, तत प्रहिता मया तद्वार्त्तोपलम्भार्थं पुरुषा , तैश्चागत्य निवेदित यथा→देव । तज्जयस्थल सर्वं भस्मीभूत दवदग्धस्थलमात्रमधुना वर्तते, छिन्नमण्डल च तत्, तेन न विद्यन्ते प्रत्यासन्नाऽन्यान्यग्रामनगराणि, अरण्यप्राय सोऽधुना देशो वर्तते, तथा वार्त्तामात्रमपि नास्माभिरुपलब्ध, कथ तत्तथाभूत सजातमिति । ततो मया चिन्तित–हा कष्टमहो कष्ट, कि पुनरत्र कारणम्? किमकाण्ड एव तत्रोत्पाताङ्गारवृष्टिर्निपतिता? कि वा पूर्वविरुद्धदेवेन भस्मीकृत नगरम्? उत मुनिना केनचित्कोपाग्निना दग्धम्? आहोस्वित् क्षेम(त्र)वह्निना चौरादिभिर्वा? ततश्चाऽविज्ञातपरमार्थ ससन्देह शोकापन्नश्च स्थितोऽहमेतावन्त काल, अधुना भगवति दृष्टे सजात शोकापनोद, स सन्देह पुनरद्यापि मे नापगच्छति, तमपनयतु भगवानिति ।

## आचार्यकृतसमाधानम्

भगवताऽभिहित→महाराज। पश्यसि त्वमेन पर्षद प्रत्यासन्न नियन्त्रित पश्चाद्बाहुबन्धेन निबद्धवक्त्रविवर तिरश्चीन पुरुषम्? नृपतिनाऽभिहित→सुष्ठु पश्यामि । भगवानाह→महाराज । एतेन भस्मीकृत नगरम् । नृपतिराह→भदन्त । कोऽय पुरुष ? भगवानाह→महाराज। स एवाऽय तव जामाता नन्दिवर्धनकुमार । नृपतिराह→कथ पुनरनेनेदमीदृश व्यवसितम्? किमिति वाऽयमेवविधाऽवस्थोऽधुना वर्तते? तत कथितो भगवता स्फुटवचनविरोधादिकश्चरटमनुष्यपरित्यागपर्यवसान सर्वोऽपि नरपतये मदीयवृत्तान्त । तमाकर्ण्य विस्मितो राजा परिषच्च । नृपतिना चिन्तित→कि छोटयाम्यस्य वदनम्? करोमि मुत्कल बाहुयुगल, अथवा नहि नहि, निवेदितमेवास्य चरित भगवता, तदेष मुत्कलोऽस्माकमपि केनचिद–काण्डविड्वरसम्पादनेन धर्मकथाश्रवणविघ्नहेतु स्यात्, तस्मात्तावदय यथान्यासमेवास्ता, पश्चादुचित करिष्याम, अस्थान चैष करुणाया यस्येदृश चरित, तदधुना तावदपर भगवन्त सन्देह प्रश्नयाम । ततोऽभिहित नृपतिना–भदन्त। नन्दिवर्धनकुमारोऽस्माभिरेवगुण समाकर्णित→

यदुत–वीरो दक्ष स्थिर प्राज्ञो, महासत्त्वो दृढव्रत । रूपवान्नयमार्गज्ञ, सर्वशास्त्रविशारद ॥१॥
गुणाना निकषस्थान, प्रख्यातपरपौरुष । अतोऽनेन महापाप, कथ चेष्टितमीदृशम् ? ॥२॥
सूरिणाऽभिहित राजन्नास्य दोषस्तपस्विन । तादृग्गुणगणोपेत, स्वरूपेणैष वर्तते ॥३॥
राजाऽऽह ननु कस्याऽय, दोषो? नाथ। निवेद्यताम् । यद्येवमात्मरूपेण, निर्दोषो नन्दिवर्धन ॥४॥

## हिंसावैश्वानरकदर्थितकुमारचेष्टाकथनम्

ततो गुरुणाऽभिहित–यदेतद्दृश्यते दूरवर्त्ति कृष्णरूप मानुषद्वय, अस्यैव समस्तोऽपि दोष , ततो नरपतिना विस्ता(फा)रित मदभिमुखमीक्षणयुगल, निरूपित बृहती वेला तन्मानुषद्वय, गदित चानेन→भगवन्। एकोऽत्र मनुष्यो द्वितीया नारीति लक्ष्यते। भगवताऽभिहित→सम्यगवधारित महाराजेन । नृपतिराह→भदन्त। कोऽय मनुष्य ? भगवताऽभिहित→एष महामोहस्य पौत्रको द्वेषगजेन्द्रस्य सूनुरविवेकितानन्दनो वैश्वानरोऽभिधीयते, अस्य हि जननीजनकाभ्या प्रथम क्रोध इति नाम प्रतिष्ठित, पश्चात्स्वगुणैरस्य परिजनसकाशादिद द्वितीय वैश्वानर इति प्रियनामक सपन्नम् । नृपतिराह→तर्हि नारी केयम्? भगवताऽभिहित–एषा द्वेषगजेन्द्रप्रतिबद्धस्य दुष्टाभिसन्धिनरेन्द्रस्य निष्करुणताया महादेव्या दुहिता हिंसोच्यते । नृपतिनाऽभिहित→ अनेन नन्दिवर्धनकुमारेण सहाऽनयो क सम्बन्ध ? भगवानाह→अस्यान्तरङ्गे एते मित्रभार्ये भवत , अनयोश्च समर्पितहृदयोऽय न गणयति स्वकमर्थाऽनर्थं, नापेक्षते धर्माधर्म, न लक्षयति भक्ष्याभक्ष्य, नाकलयति पेयापेय, न जानीते वाच्यावाच्य, नावग[illegible]म्यागम्य, न बुध्यते

हिताहितविभागम् । ततो विस्मर्यन्ते [विस्मरन्ति मु] स्वभ्यस्ता अपि समस्ता गुणा , क्षणमात्रेण परावर्तते नि शेषदोषपुञ्जतयाऽस्याऽऽत्मा । ततो महाराज । नन्दिवर्धनेनाऽनेन बालकाले कदर्थिता निरपराधा दारका , खलीकृत कलोपाध्यायस्ताडितो हितोपदेशदायकोऽपि विदुर । तथा तरुणेन सता घातिता प्राणिसघाता , विहिता महासङ्ग्रामा, जनितो जगत्सन्ताप , परमोपकारिणो बान्धवावपि मारयितुमारब्धौ, तिरस्कृतौ कनकचूडकनकशेखरौ, तदारात्पुनर्यदनेनाऽऽचरितं स्फुटवचनेन सहाकाण्डभण्डनं तन्मारण च, तथा जननीजनकसहोदरभगिनीप्रियभार्यादिव्यापादान नगरदहन स्नेहनिर्भरमित्रभृत्यनिपातन च तन्निवेदितमेव युष्माकम् । स एष महाराज। समस्तोऽप्यनयोरेव पापयोर्हिंसावैश्वानरयोरस्य भार्यावयस्ययोर्दोषसघातो, न पुन स्वयमस्य तपस्विनो नन्दिवर्धनकुमारस्य दोषगन्धोऽप्यस्ति, तथाहि–अय स्वरूपेण स्थानमनन्तज्ञानस्य, भाजनमनन्तदर्शनस्य, पात्रमनन्तवीर्यस्य, निलयनमनन्तसुखस्य, कुलभवनमपरिमितगुणाना, न चेदृशमात्मस्वरूपमद्याप्येष वराको लक्षयति । तेनाऽनयो पापभार्यावयस्ययो स्वस्पविपर्यासकारिणोर्वशे वर्तते । तथा च वर्तमानोऽयमेवविधामनन्तदु खहेतुभूतामनर्थपरम्परामासादयति।

## पुण्योदयभावाऽभावकृतवैचित्र्यम्

नृपतिनाऽभिहित–भदन्त। स्फुटवचनव्यतिकरात् पूर्वमस्माभि श्रुतमासील्लोकवार्त्तया यदुत–'अनेन नन्दिवर्धन–कुमारेणोत्पद्यमानेनाऽऽनन्दित पद्मराजकुल, वर्धित कोशदण्डसमृद्ध्या, तोषित नगर, वर्धमानेन पुनराह्लादिता प्रकृतयो, विस्तारितो गुणप्राग्भार , प्रतापेन वशीकृत भूमण्डल, निर्जिता शत्रव , गृहीता जयपताका, समुल्लसितो यश पटह , सिंहायितं भूतले, अवगाहित सुखाऽमृतसागर , तत् किं तदाऽस्य नास्तामेतौ पापभार्याव्यस्यौ ? यदिमौ दु खपरम्पराकारणभूतौ ? इति। भगवताऽभिहित–>महाराज। तदाप्यास्तामेतौ, किंतु तदाऽन्यदेव कल्याणपरम्पराकारणमासीत्। नृपतिराह–>किं तत् ? भगवतोक्त–>पुण्योदयो नाम सहचर , स हि विद्यमान स्वकीयप्रभावेण सर्वेषामेषामनन्तरोक्ताना पद्मराजकुलानन्दजननादीना प्रयोजनविशेषाणा सपन्न कारण, केवल महामोहवशान्न लक्षितोऽनेन नन्दिवर्धनेन तदीय प्रभाव , पुण्योदयमाहात्म्यजातमपि कल्याणकदम्बक हिंसावैश्वानरप्रतापजनित ममैतदित्येवमेष मन्यते स्म, ततोऽयमविशेषज्ञ इति मत्वा विरक्तोऽसौ पुण्योदय , नष्टो गृहीत्वैका दिश स्फुटवचनव्यतिकराऽवसरे, ततस्तद्विकलस्यास्य नन्दिवर्धनकुमारस्येदमनर्थकदम्बकमाभ्या हिंसावैश्वानराभ्या सपादितमिति । नृपतिराह भदन्त। कियान्पुन कालोऽस्य हिंसावैश्वानराभ्या सह सम्बन्धस्य ? भगवताऽभिहित–>अनादिपरिचितावस्येमौ हिंसावैश्वानरौ, केवलमत्र पद्मराजगृहे निवसतोऽस्याविर्भूताविमौ, पूर्वं तिरोहितौ स्थितौ। नृपतिराह–किमनादिरूपोऽय नन्दिवर्धनकुमार ? भगवानाह–बाढम् । नृपतिराह–>तत्किमित्यय पद्मराजपुत्रतया प्रसिद्ध ?भगवानाह–>मिथ्याभिमानोऽयमस्य, यदुत–पद्मराजपुत्रोऽह, अतो नात्राऽऽस्था विधेया । नृपतिनोक्त–>भदन्त। तत्परमार्थत कुतस्त्योऽयमवधार्यताम् ? भगवताऽभिहित–असव्यवहारनगरवास्तव्य कुटुम्बिकोऽय ससारिजीवनामा कर्मपरिणाममहाराजादेशेन लोकस्थितिनियोगमुररीकृत्य स्वभार्यया भवितव्यतया ततो नगरान्निःसारितोऽपरापरस्थानेषु पर्यटन् धार्यत इत्यवधारणीयम् ।

## सर्वससारिजीवाना प्राय समानव्यतिकर

नृपतिराह–>भदन्त। कथमेतदिति सप्रपञ्चामस्य वक्तव्यता श्रोतुमिच्छामि । भगवानाह–>महाराज । आकर्णय । तत कथितो भगवता समस्तोऽपि विस्ता[स्त मु]रेण मदीयव्यतिकर , तत क्षुण्णतया भगवद्दर्शनेऽरिदमनस्य, विमलतया बोधस्य, प्रत्यायकतया भगवद्वचनस्य, लघुकर्मतया जीवस्य, प्रत्यासन्नतया महाकल्याणस्य परिस्फुरितमस्य हृदये–अये। भगवता विमलकेवलालोकेनोपलभ्याऽस्य नन्दिवर्धनकुमारस्य सम्बन्धी भवप्रपञ्चोऽयमनेन व्याजेन प्रतिपादित । ततोऽभिहितमनेन–>भदन्त। यथैव मयाऽवधारित तथैवेदमुतान्यथेति । भगवानाह–>महाराज । तथैव, मार्गानुसारिणी हि भवतो बुद्धि , तत्कुतस्तत्राऽन्यथाभाव ? नृपतिनाऽभिहित–>भदन्त। तत्किमस्यैव नन्दिवर्धनकुमारस्याय वृत्तान्त ? किं वाऽन्येषामपि प्राणिनाम् ? इति, भगवानाह–>महाराज। सर्वेषा ससारोदरविवरवर्तिनामसुमतामेष व्यतिकर प्रायेण समानो वर्तते, तथाहि–स्थिता सर्वेऽप्येतेऽनादिक काल प्रायोऽसाव्यवहारिकजीवराशिमध्ये, तत्र च निवसतामेतेषामेत एव क्रोधमानमायालोभास्रवद्वारादयोऽन्तरङ्ग परिजन , यावन्तश्चागमप्रतिपादितानुष्ठानबलेन जीवा सिध्यन्ति तावन्त एवासाव्यवहारिकजीवराशिमध्यादागच्छन्तीति केवलिवचन, ततो निर्गताश्चैतेऽपि सर्वे जीवा , विडम्बिता भूयास कालमेकेन्द्रियेषु, विनाटिता विकलेन्द्रियेषु, विगोपिता पञ्चेन्द्रियतिर्यग्योनिजेषु, कदर्थिता नानाविधाऽनन्तदु खै , कारिता बहुविधरूपाणि सततमपरापरभवप्रायोग्यकर्मजालविपाकोदयद्वारेण भवितव्यतया, भ्रमिताश्चाऽरघट्टघटीयन्त्रन्यायेन सूक्ष्मबादरपर्याप्तकापर्याप्तकपृथिव्यप्तेजोवायुवनस्पतिद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियसञ्ज्ञ्यसञ्ज्ञिपञ्चेन्द्रिय–

तिर्यग्योनिजखचरजलचरस्थलचरादिभेदविवर्तेन सर्वस्थानेषु प्रत्येकमनन्तवारा । तत कैश्चिज्जीवै कथञ्चिन्महासागरपतितैरिव रत्नद्वीप, महारोगभराक्रान्तैरिव महाभेषज, विषमूर्च्छितैरिव महामन्त्रो, दारिद्र्याभिभूतैरिव चिन्तामणि प्राप्यतेऽतिदुर्लभोऽय मनुष्यभव, तत्रापि महानिधिग्रहण इव वेताला भृशमाविर्भवन्त्येते हिसाक्रोधादयो दोषा, यैरभिभूतास्तिष्ठन्तु तावदेते प्रवलमहामोहनिद्राघूर्णितमानसा नन्दिवर्धनमङ्गुला(प्रमुखा)वराकसत्त्वा, किन्तर्हि? येऽपि जिनवचनप्रदीपेन जानन्त्यनन्तमपि भवप्रपञ्च, लक्षयन्ति मनुष्यभवदुर्लभता, बुध्यन्ते ससारसागरतारक धर्मं, वेदयन्ते स्वसवेदनेन भगवद्वचनाऽर्थं, निश्चिन्वन्ति निरुपमानन्दस्य परमपद तेऽपि बालिशा इव प्रवर्तन्ते परोपतापेषु, भवन्ति गर्वाऽऽध्माता, कुर्वन्ति परवञ्चनानि, रज्यन्ते द्रविणोपार्जनेषु, व्यापादयन्ति सत्त्वसघात, भाषन्तेऽलीकवचनानि, आददते परधन, गृध्यन्ति विषयोपभोगेषु, आचरन्ति महापरिग्रह, भजन्ते रजनीभोजनानि, तथा मुह्यन्ति शब्देषु, मूर्छन्ति रूपेषु, लुभ्यन्ति रसेषु, तृष्यन्ति गन्धेषु, आश्लिष्यन्ति स्पर्शेषु, द्विषन्ति चाऽनिष्टशब्दादीन्, भ्रमयन्ति पापस्थानेषु, सततमन्तकरण न नियन्त्रयन्ति, भारती उच्छृङ्खलयन्ति काय भज्यन्ते दूरेण तपश्चरणात्, ततोऽय मनुष्यभवो मोक्षाऽऽक्षेपकारणभूतोऽपि तेषामधन्यतया न केवल न किञ्चिद् गुणलवलेशमात्रमपि साधयति, कि तर्हि? यथाऽस्य नन्दिवर्धनस्य तथैव प्रत्युताऽनन्तदु खपरम्पराऽऽकुलससारकारणता प्रतिपद्यते, तथाहि–प्राप्तोऽय मनुष्यभवोऽनादौ ससारे पूर्वमनन्तवारा न च सद्धर्माऽनुष्ठानविकलेनाऽनेन किञ्चित्साधित, अत एवाऽस्माभि पूर्वं भगवद्धर्मस्याऽत्यन्तदुर्लभता प्रतिपादिता ।

## जैनधर्मदौर्लभ्य विराधकस्य मौर्ख्यम् च

तथाहि–पद्मरागेन्द्रनीलादिरत्नसङ्घातपूरितम् । लभ्यते भवन राजन्! न तु जैनेन्द्रशासनम् ॥१॥
समृद्ध कोषदण्डाभ्यामेकच्छत्रमकण्टकम् । सुप्रापमीदृश राज्य, न तु धर्मो जिनोदित ॥२॥
सपूर्णभोगसम्प्राप्तिप्रीणितेन्द्रियमानसम् । सुलभ नृप! देवत्व, न मत पारमेश्वरम् ॥३॥
ससारे परमैश्वर्यकारण भूप! लभ्यते । इन्द्रत्वमपि जीवेन, न धर्मो जिनदेशित (न तु धर्मोजिनोदित प्र) ॥४॥
एते हि भावा राजेन्द्र! ससारसुखकारणम् । सद्धर्मस्तु मुनीन्द्रोक्तो, निर्वाणसुखकारणम् ॥५॥
निर्वाणसुखससारसुखयोश्च परस्परम् । चिन्तारत्नस्य काचेन, यावत्तावद् गुणान्तरम् ॥६॥
एव च ज्ञातमाहात्म्यै, ससारे ब्रूहि तत्त्वत । ईदृक्षधर्मसम्प्राप्तिर्भूप! केनोपमीयताम् ? ॥७॥
एवं स्थिते–एन ससारविस्तार, विलङ्घ्य कथमप्यद । मानुष्य प्राप्य दुष्प्राप, राधावेधोपम जन ॥८॥
यो जैनमपि सप्राप्य, शासन कर्मनाशनम् । हिसाक्रोधादिपापेषु, रज्यते मूढमानस ॥९॥
स हारयति काचेन, चिन्तामणिमनुत्तमम् । करोत्यङ्गारवाणिज्य, दग्ध्वा गोशीर्षचन्दनम् [युग्मम्] ॥10॥
भिनत्ति नाव मूढात्मा, लोहार्थं स महोदधौ । सूत्रार्थ दारयत्युच्चैर्वैडूर्य रत्नमुत्तमम् ॥११॥
प्रदीपयति कीलार्थं, देव! द्रोणी महत्तमाम् । रत्नस्थाल्या पचत्याम्लखलक मोहदोषत ॥१२॥
सौवर्णलाङ्गलाऽग्रेण, लिखित्वा वसुधा तथा । अर्कवीज वपत्येष, चूतार्थ मूढमानस ॥१३॥
छित्त्वा कर्पूरखण्डानि, कोद्रवाणा समन्तत । वृति विधत्ते मूढोऽयमहसश्रुतिक[1] किल ॥१४॥
यत.–हिसाक्रोधादिपापेषु, जन्तोरासक्तचेतस । सद्धर्मोऽय जिनेन्द्रोक्तो, दूराद्दूरेण गच्छति ॥१५॥
सद्धर्मरहितश्चासौ, पापपूरितमानस । न मोक्षमार्गलेशेन, कथञ्चिदपि युज्यते ॥१६॥
ततो जानन्नपि बलात्, पुनर्भीमे भवोदधौ । निर्वोल[2] याति मोहान्धो, यथाऽय नन्दिवर्धन ॥१७॥

## नन्दिवर्धनस्य बोधाऽभाव

नृपतिनाऽभिहित–>भगवन्! तस्य नन्दिवर्धनस्य किमियताऽपि प्रपञ्चेन कथ्यमाने स्वसवेदनससिद्धेऽपि निजचरिते सजात प्रबोध ? भगवताऽभिहित–>महाराज! न केवलमस्य प्रतिवोधाऽभाव, कि तर्हि ? मयि कथयति प्रत्युताऽस्य महानुद्वेगो वर्तते । नृपतिराह–किमभव्योऽयम्? भगवतोक्त–>नाभव्य, कि तर्हि ? भव्य एव, केवलमधमस्यैव वैश्वानरस्य दोषो यन्मदीयवचन न प्रतिपद्यते, यतोऽयमनन्तोऽनुवन्धोऽस्येतिकृत्वा, अनन्तानुबन्धीतितृतीयनाम्ना मुनिभिर्गीयते, ततोऽत्र विद्यमाने न सुखायते मदीयवचन, उत्पादयत्यरति, जनयति कलमलक, तत कुतोऽस्य तपस्विन प्रवोध ? पर्यटितव्यमद्याप्यनेन

1 =पण्डितमन्य । 2 =निर्विवाद = निर्विरोध इत्यर्थे क्रियाविशेषणम् ।

नन्दिवर्धनेनाऽस्य वैश्वानरस्य प्रसादादपरापरस्थानेषु दु खमनुभवताऽनन्त काल, प्राप्तव्या च वेरपरम्परा। नृपतिराह–भदन्त! महारिपुरेषोऽस्य वैश्वानर । भगवतोक्त–पर्याप्तमियत्या महारिपुतया ।

## सर्वजीवाना कुटुम्बत्रयम्

नृपतिराह→किमस्यैवाय वयस्य ? कि वाऽन्येषामपि जन्तूनाम्? भगवानाह→यदि महाराज! स्फुट प्रश्नयसि ततस्तथा ते कथयामि यथा पुन प्रष्टव्यमिद न भवति। नृपतिराह–अनुग्रहो मे, भगवताऽभिहित→इह सर्वेषा जीवानां प्रत्येक त्रीणि त्रीणि कुटुम्बकानि, तद्यथा→क्षान्तिमार्दवाऽऽर्जवमुक्तिज्ञानदर्शनवीर्यसुखसत्यशौचतप सन्तोषादीनि यत्र गृहमानुषाणि तदिदमेक कुटुम्बकम् । तथा क्रोधमानमायालोभरागद्वेषमोहाऽज्ञानशोकभयाऽविरतिप्रभृतयो यत्र बान्धवा तदिद द्वितीय कुटुम्बकम् । तथा शरीर तदुत्पादको स्त्रीपुरुषावन्ये च तथाविधा लोका यत्र सम्बन्धिन तदिद तृतीय कुटुम्बक, कुटुम्बत्रितयद्वारेण चाऽसंख्याता स्वजनवर्गा भवन्ति, तत्र यदिदमाद्य कुटुम्बकमेतज्जीवाना स्वाभाविकमनाद्यपर्यवसित, हितकरणशीलमाविर्भाव–तिरोभावधर्मकमन्तरङ्ग च वर्तते, मोक्षप्रापक च, यत प्रकृत्यैवेद जीवमुपरिष्टान्नयति। यत्पुनरिद द्वितीय कुटुम्बकमेतज्जीवानामस्वा–भाविक, तथाऽप्यविज्ञातपरमार्थेर्जन्तुभिर्गृहीत तद्गाढतर स्वाभाविकमिति । तदनाद्यपर्यवसितमभव्याना, अनादि सपर्यवसित केषाञ्चिद्भव्याना, एकान्तेनाऽहितकरणशीलमाविर्भावतिरोभावधर्मकमन्तरङ्ग च वर्तते ससारकारण च, यत प्रकृत्यैवेद जीव–मधस्तात्पातयति । यत्पुनरिद तृतीय कुटुम्बकमेतज्जीवानामस्वाभाविकमेव, तथा सादि सपर्यवसितमनियतसद्भाव च, यथा भव्यतया हिताहितकरणशीलमुत्पत्तिविनाशधर्मक बहिरङ्गं च वर्तते, तथाभव्यतया, ससारकारणं मोक्षकारण वा भवति, यतो बाहुल्येन द्वितीयकुटुम्बकस्याऽवष्टम्भकारकमिद अत ससारकारण, यदि पुन कथञ्चिदाद्य कुटुम्बकमनुवर्तते ततो जीवस्येदमप्याद्यकुटुम्बकपोषणे सहाय स्यात्, ततश्च मोक्षकारणता प्रतिपद्यते[द्येत मु] । तदेव स्थिते महाराज! यदिद द्वितीय कुटुम्बकमस्य मध्ये सर्वेषा ससारिजीवानामेष वैश्वानरो वयस्यस्तथेयमपि हिसा भार्या विद्यत एव, नाऽत्र सन्देहो विधेय नृपतिराह→भदन्त! यदीदमाद्य कुटुम्बक स्वाभाविक हितकरणशील मोक्षकारण च तत्किमितीम जीवा गाढ नेदमाद्रियन्ते? यदि चेद द्वितीयकुटुम्बकमस्वाभाविकमेकान्तेनाहितकरणशील ससारकारण च तत्किमितीमे जीवा गाढतरमिद पोषयन्ति? भगवानाह–महाराज! आकर्णयात्र कारण–एतदाद्य कुटुम्बकमनेन द्वितीयकुटुम्बकेनाऽनादौ ससारे सकलकालमभिभूतमास्ते, ततो भयात्तिरोभाव गतस्य तस्य न सपन्न कदाचिदभिव्यक्त दर्शन, ततो न लक्षयन्त्येते वराका जीवास्तत्सम्बन्धिन गुणकलाप, तेन न तस्योपरि गाढमादर कुर्वन्ति, विद्यमानमपि तदविद्यमान मन्यन्ते, तस्य गुणानपि वर्णयन्तमस्मदादिक न गणयन्ति, एतत्पुनर्द्वितीय कुटुम्बकमनादौ ससारे शत्रुभूतस्याऽऽद्यकुटुम्बकस्य निराकरणादवाप्तजयपताक लब्धप्रसरतया वल्गमान प्रायेण सकलकालमाविर्भूतमेवाऽऽस्ते । तत संपद्यते तेन सहामीषा जीवानामहर्निश दर्शन, ततो वर्धते प्रेमाऽऽवन्ध, समुत्पद्यते चित्तरति, सजायते विश्रम्भ, प्रदुर्भवत्यनेन सह प्रणय, ततोऽस्य द्वितीयकुटुम्बकस्य सततमनुरक्तमानसा खल्वेते जीवा न पश्यन्ति दोषसघात, समारोपयन्त्यस्याऽसन्तमपि गुणसन्दोह, तेनेद गाढतरमेते पोषयन्ति, इदमेवैक परमबन्धूभूतमस्माकमिति मन्यन्ते, अस्य च दोषप्रकाशकमस्मदादिक शत्रुबुद्ध्या गृह्णन्ति । नृपतिराह भदन्त! सुन्दर भवति, यद्येते तपस्विनो जीवा अनयो कुटुम्बकयोर्गुणदोषविशेषमवगच्छेयु । भगवानाह→किमत पर सुन्दरतरम्? एतावन्मात्रमेव हि नि शेषकल्याणानि वाञ्छता परमार्थत पुरुषेण कर्त्तव्य यदुत–अनयो प्रथमद्वितीययो कुटुम्बकयोर्गुणदोषविशेषपरिज्ञानमिति । तथाऽस्माभिरपि जीवाना धर्मकथाभिरेतावन्मात्रमेव सपादनीय, केवलमेते जीवा स्वयोग्यतामन्तरेण नानयोर्विशेष कथञ्चिदपि ज्ञापयितु शक्यन्ते, तेनाऽयोग्येषु वयमपि *गजनिमीलिका* कुर्म । यदि पुन सर्वेऽपि जीवा अनयो कुटुम्बकयोर्गुणदोषविशेषमवगच्छेयुस्तदाऽऽदित एव ससारोच्छेद स्यात्, ततो निराकृत्येद द्वितीय कुटुम्बक सर्वेऽपि जीवा मोक्ष गच्छेयुरिति । नृपतिराह→यद्येवमशक्यानुष्ठान सर्वेषा जीवानामनयोर्गुणदोषविशेषज्ञापन तत्किमनया चिन्तया? अस्माभिर्विज्ञातस्तावद्भगवत्पादप्रसादेनाऽनयो कुटुम्बकयोर्गुणदोषविशेष, तत सिद्ध न समीहितम्

यत–परोपकार कर्तव्य, सत्या शक्तौ मनीषिणा । परोपकाराऽसामर्थ्ये, कुर्यात्स्वार्थे महादरम् ॥१॥

## साधूनामतिनिर्घृणकर्म

भगवानाह→न परिज्ञानमात्र त्राणम् । नृपतिराह यदन्यदपि विधेय तदादिशन्तु भगवन्त । भगवतोक्त→अन्यदत्र विधेय–श्रद्धानमनुष्ठान च, तच्चा(त्रा प्र)स्त्येव भवत श्रद्धान, अनुष्ठान च पुनर्यदि शक्नोषि, तत सिध्यत्येव समीहित,

नाऽत्र सन्देह , केवल तत्रातिनिर्घृण कर्म समाचरणीयम् । नृपतिराह→भदन्त। कीदृशं तत्कर्म? भगवानाह–यदेते साधव सततमनुशीलयन्ति । नृपतिराह→यदनुशीलयन्त्येते तच्छ्रोतुमिच्छामि । भगवतोक्त–आकर्णय–

अनादिस्नेहसवद्ध, द्वितीय यत्कुटुम्वकम् । योधयन्ति तदाद्येन, घोरचित्ता दिवानिशम् ॥१॥
तथाहि–निर्घुणा यत एवेदमाविर्भूत कुटुम्वकम् । त घातयन्ति ज्ञानेन, महामोहपितामहम् ॥२॥
यस्तन्त्रक समरतस्य, कुटुम्वस्य महावल । राग वैराग्ययन्त्रेण, तमेते चूर्णयन्त्यलम् ॥३॥
अन्यच्च निरनुक्रोशा, रागस्यैव सहोदरम् । द्वेष मैत्रीशरेणोच्चैरेते निघ्नन्ति साधव ॥४॥
क्षमाक्रकचपाटेन, पाटयन्ति सुदारुणा । एते भो। साधव क्रोध, रटन्त स्निग्धवान्धवम् ॥५॥
क्रोधस्य भ्रातर मान, तथैते द्वेषनन्दनम् । हत्वा मार्दवखड्गेन, क्षालयन्त्यपि नो करौ ॥६॥
मायामार्जवदण्डेन, दलयन्ति तपस्विनीम् । लोभ मुक्तिकुठारेण, रौद्राश्छिन्दन्ति खण्डश ॥७॥
तथैते मुनयो भूप। स्नेहाबन्धपरायणम् । काम निष्पीडच हस्तेन, मर्दयन्तीव मत्कुणम् ॥८॥
दहन्ति शोकसम्बन्ध, तीव्रेण ध्यानवह्निना । भय भिन्दन्ति निर्भीका, धैर्यवाणेन वत्सलम् ॥९॥
हास्य रतिर्जुगुप्सा च, तथाऽरति पितृष्वसा । विवेकशक्त्या राजेन्द्र। साधुभिर्दारिता पुरा ॥10॥
अन्यच्च भ्रातृभाण्डानि, पञ्चाक्षाणि सुनिर्घृणा । सन्तोषमुदगरेणोच्चैर्दलयन्ति (न्तीह प्र) सुसाधव ॥११॥
एव ये ये भवन्त्यत्र, कुटुम्बे स्निग्धवान्धवा । तारतान्निपातयन्त्येते, जाताञ्जातान् सुनिर्दया ॥१२॥
वर्धयन्ति बल नित्य, प्रथमे च कुटुम्वके । सर्वेषा स्निग्धवन्धूनामेते राजेन्द्र। साधव ॥१३॥
पुष्टि गतेन तेनोच्चैर्निहत भग्नपौरुषम् । अमीषा बाधक नैव, तद्द्वितीय कुटुम्वकम् ॥१४॥
अन्यच्च पोषक ज्ञात्वा, द्वितीयस्य तृतीयकम् । राजन्नेतै परित्यक्त, सर्वथैव कुटुम्वकम् ॥१५॥
यावत्तृतीय न त्यक्त, तावज्जेतु न शक्यते। द्वितीयमपि कार्त्स्न्येन, पुरूषेण कुटुम्वकम् ॥१६॥
अतो यद्यस्ति ते वाञ्छा, भूप। ससारमोचने । ततोऽतिनिर्घृण कर्म, मयोक्तमिदमाचर ॥१७॥
केवल सम्यगालोच्य, मध्यस्थेनाऽन्तरात्मना । कि शक्येत मया कर्तुम्? कि वा नेदमिति त्वया ॥१८॥
एतेऽतिनिर्घृणा कर्म, कथञ्चिदिदमीदृशम् । कुर्वन्त्यभ्यासयोगेन, नृशसा भूप। साधव ॥१९॥
अन्येन पुनरीदृक्ष, कर्मबन्धुदयालुना । [1]चिन्तयितुमपि नो शक्य, करण दूरत स्थितम् ॥20॥

### द्वितीयत्यागे तृतीयत्यागस्य सफलता

कि तु–योऽय त्यागस्तृतीयस्य, द्वितीयस्य च घातनम् । कुटुम्वकस्य राजेन्द्र। प्रथमस्य च पोषणम् ॥२१॥
एतत्त्रय परिज्ञाय, कृत्वा श्रद्धानमञ्जसा । अनुष्ठाय च वीर्येण, भूयासो मुनिपुङ्गवा ॥२२॥
भवप्रपञ्चान्निर्मुक्ता, सर्वद्वन्द्वविवर्जिता। स्थिता [स्थित्वा मु]स्वाभाविके रूपे, मोदन्ते मोक्षवर्तिन [त्रिभिविशेषकम्] ॥२३॥
तदिद दुष्कर कर्म, कि तु पर्यन्तसुन्दरम् । एव व्यवस्थिते भूप। कुरुष्व यदि रोचते ॥२४॥
नृपतिराह→शिष्ट भगवता पूर्वं, कुटुम्वद्वयमादिमम् । अविच्छिन्न प्रवाहेण, सदाऽनादिभवोदधौ ॥२५॥
तृतीय पुनरुद्दिष्ट, विनाशोत्पत्तिधर्मकम् । तत्कि भवे भवे नाथ। सभवत्यपरापरम्? ॥२६॥
सूरिराह→महाराज। सभवत्यपरापरम् । भवे भवेऽत्र जन्तूना, तत्तृतीय कुटुम्वकम् ॥२७॥
राजाऽऽह→नाथ। यद्येव, ततोऽनादिभवार्णवे । अनन्तानि कुटुम्बानि, त्यक्तपूर्वाणि देहिभि ॥२८॥
सूरिराह→महाराज। सत्यमेतन्न सशय । एते हि पथिकप्राया, सर्वे जीवास्तपरिवन ॥२९॥
ततश्च–अन्यान्यानि कुटुम्बानि, मुञ्चन्तो वासकेष्विव । अपरापरदेहेपु, सचरन्ति पुन पुन ॥३०॥
राजाऽऽह→नाथ। यद्येव, ततोऽत्रापि भवे नृणाम् । कुटुम्वे स्नेहसम्वन्धो, महामोहविजृम्भितम् ॥३१॥
सूरिराह→महाराज। सम्यग्ज्ञातमिद त्वया । महामोह विना को वा, कुर्यादेव सकर्णक ? ॥३२॥
राजाऽऽह–यो न शक्नोति, कर्तुं नाथ। निवर्हणम् । द्वितीयस्य कुटुम्वस्य, कथञ्चिच्छक्तिविभ्रमात् ॥३३॥
तृतीयस्य परित्यागात्तस्य कि जायते फलम् । यथोक्तम् ? यदि वा नेति, तथेद प्रविवेचय ॥३४॥

---

1 चिन्तितुमिति अनित्यत्वाण्णिच चुरादे, नवाक्षरा वा पाद, सवजातोनामपोति वचनादुपजाति[illegible]ा वा ।

सूरिराह→महाराज। यो न हन्ति द्वितीयकम् । तृतीयत्यजन तस्य, नूनमात्मविडम्वनम् ॥३५॥
तृतीय हि परित्यज्य, यदि हन्यान्निराकुल । द्वितीयमेव तत्त्याग, सफलो विफलोऽन्यथा ॥३६॥

### राज्ञोऽतिनिर्घृणकर्मकरणेच्छा

नृपतिनाऽभिहितम्→भदन्त। यद्येव तत –
भवप्रपञ्च विज्ञाय, महाघोर सुदुस्तरम् । अवाप्य मानुप जन्म, ससारेऽत्यन्तदुर्लभम् ॥३७॥
अनन्ताऽऽनन्दसपूर्णं मोक्ष विज्ञाय तत्त्वत । तस्य कारणभूत च, वुद्ध्वा जेनेन्द्रशासनम् ॥३८॥
युष्मादृशेपु नाथेपु, प्राप्तेपु हितकारिपु । कुटुम्वत्रयरूपे च, विज्ञाते परमार्थत ॥३९॥
को नामाऽऽद्यकुटुम्वस्य, पुरुपो हितकामुक । कुर्यान्न पोपण नाथ। वन्धुभूतस्य तत्त्वत ? ॥40॥
विघ्न सर्वसमृद्धीना, सर्वव्यसनकारणम । द्वितीय वा न को हन्ति, शत्रूभूत कुटुम्वकम् ? ॥४१॥
येनाऽत्यक्तेन दु खौघस्त्यक्तेन परम सुखम् । को न त्यजति तन्नाथ। तृतीय वा कुटुम्वकम्? ॥४२॥
सूरिराह महाराज। ज्ञाततत्त्वेन जन्तुना । इदमेवाऽत्र कर्तव्य, त्रय ससारभीरुणा ॥४३॥
राजाऽऽहाऽज्ञाततत्त्वाना, नाथ। मौनीन्द्रशासने । कि विद्यतेऽधिकारोऽत्र? नेति नेति गुरोर्वच ॥४४॥
राज्ञा चिन्तितम्–अये। विज्ञाततत्त्वोऽह, श्रद्धाक्षालितमानस। ततोऽस्ति मेऽधिकारोऽत्र,गुरूक्ते कर्मणि ध्रुवम् ॥४५॥
ततो राजा समुद्भूतवीर्योल्लासो यतीश्वरम् । प्रणम्य पादयोरेव, स प्राह विहिताञ्जलि ॥४६॥
यदादिष्ट भदन्तेन, किल कर्मातिनिर्घृणम् । तदह कर्तुमिच्छामि, नाथ। युष्मदनुज्ञया ॥४७॥
सूरिणोक्त→महावीर्य। युक्तमेतद्भवादृशाम् । अनुज्ञात मयाऽपीद, ज्ञात तत्त्व त्वयाऽधुना ॥४८॥

### विमलाभिप्राय श्रीधरस्य राज्ये स्थापना च

तत सरभसेन नरपतिना विलोकित पार्श्ववर्तिनो विमलमतेर्मन्त्रिणो वदन, आदिशतु देव इति वुवाणोऽसो स्थित प्रह्वतया । नृपतिनाऽभिहित–'आर्य। त्यजनीयो मया राज्यस्वजनदेहादिसङ्ग निहन्तव्या भगवदादेशेन रागादय, पोपणीयान्यहर्निश ज्ञानादीनि, गृहीतव्या भागवती दीक्षा, ततो यदस्य कालोचित तत्तूर्णं कुरुष्व' इति । विमलमतिराह→यदाज्ञापयति देव, किंतु न मयैव केवलेनाऽस्य कालोचित विधेय, कि तर्हि? यान्येतान्यन्त पुराणि, ये चेते सामन्ता, यश्चान्योऽपि राजलोको, या चेय समस्तापि परिपत्तै सर्वैरेवाऽस्य कालस्योचित कर्तव्यम् । राज्ञा चिन्तित–'अये। मयाऽयमादिष्ट किल मम दीक्षाग्रहणकाले यदुचित जिनस्नपनपूजादानमहोत्सवादिक तत् कुरुष्व' इति, तदय किमेवमुल्लपति? अहो गम्भीर कश्चिदभिप्राय, ततोऽभिहितमनेन→आर्य। त्वमेवाऽत्र सर्वाधिकारी, क्षम सर्वेपामुचितकर्तव्याना, तत्किमेतेरपरमुचित कर्तव्यम्? विमलमतिराह→देव। यद्देवपादै कर्तुमारब्ध तदस्माकमेतेपा च सर्वेपामस्य कालस्योचित कर्त्तव्य, नापर, यत समान एवाय न्याय सर्वेपा वर्तते, निवेदतान्येव हि भगवता सर्वेपामेव जीवानामेकेकस्य त्रीणि कुटुम्वकानि, तस्मादेपामप्यस्य कालस्येदमेवोचित, यदुत–प्रथमकुटुम्वक पोप्यते, द्वितीय हन्यते, तृतीय परित्यज्यत इति । नृपतिनाऽभिहित→आर्य। अतिसुन्दरमिद यद्येतेऽपि प्रतिपद्यन्ते । विमलमतिराह→देव। पथ्यमिदमत्यन्तमेतेपा, किमत्र प्रतिपत्तव्यम्? ततस्तदाकर्ण्य तत्र परिपदि जीवा वलादेपोऽस्मान् प्रव्राजयतीतिभावनया भयोत्कर्पेण कम्पिता कातरा, प्रद्विष्टा गुरुकर्मका, प्रपलायिता नीचा, विह्वलीभूता विपयगृध्नव, प्रखिन्ना कुटुम्वादिप्रतिवद्धवुद्धय, प्रह्लादिता लघुकर्मका, अभ्युपगतवन्तस्तद्वचन धीरचित्ता इति, ततस्तैर्लघुकर्मधीरचित्तेरभिहित→यदाज्ञापयति देवस्तदेव क्रियते, क सकर्णक सत्या समग्रसामग्र्यामेववविधसार्थाद् भ्रश्यतीति? तदाकर्ण्य हृष्टो राजा, गता सर्वेऽपि अभ्यर्णवर्तिनि प्रमोदवर्धने चैत्यभवने, स्नापितानि भुवननाथस्य भगवतो विम्वानि, विरचिता मनोहारिणी पूजा, प्रवर्तितानि महादानानि, कारित वन्धनमोचनादिक समस्तमुचितकरणीय, समाहूत श्रीधराभिधानो नगरान्निजतनय, दत्त तस्मै राज्य नरपतिना, प्रव्राजिता प्रवचनोक्तेन विधिना सर्वेऽप्युपरिस्थितलोका भगवता, विहिता भवप्रपञ्चनिर्वेदजननी परमपदाभिलापातिरेकसवर्धनी धर्मदेशना, गता यथास्थान देवादय ।

### नन्दिवर्धनधराधरयोर्युद्ध मृतिश्च

मम पुनरगृहीतसङ्केते। तदमृतकल्पमपि न परिणत तदा भागवत वचन, निकटीभूतौ हिसावैश्वानरो, कृत पुनस्ताभ्या मम शरीरेऽनुप्रवेश, मोचितश्चाह वन्धनात्सर्वजन्तूना वन्धनमोचनार्थं नियुक्तै राजपुरुषै, चिन्तितं च मया→विगोपितोऽहमनेन

लोकमध्ये श्रमणेन, ततो धमधमायमानश्चेतसा किमत्र स्थितेनेति मन्यमान प्रवृत्तो विजयपुराभिमुखं [खो मु]गन्तु, लङ्घित कियानपि मार्ग । इतश्च तत एव विजयपुरात् शिखरिनृपते सूनुर्मत्कल्प एव हिसावैश्वानरदोषेण निर्वासित स्वविषयाज्जनकेन दृष्टो मयाऽरण्ये प्रतिपथिको धराधरो नाम तरुण, पृष्टो मया विजयपुरमार्गं, तत पर्याकुलतया चित्तस्य न श्रुत तेन मद्वचनम् । मया चिन्तित→परिभवबुद्ध्या मामेष न गणयति, तत समुल्लसितौ मे हिसावैश्वानरौ, गृहीता तत्कटीतटादसिपुत्रिका, ततस्तेनापि विस्फुरितहिसावैश्वानरेणैव समाकृष्ट मण्डलाऽग्र, दत्तौ समकमेव द्वाभ्यामपि प्रहारौ, दारिते शरीरे । अत्राऽन्तरे मम तस्य च जीर्णा सा एकभववेद्या गुटिका, ततो वितीर्णे अपरे गुटिके द्वयोरपि भवितव्यतया ।

## षष्ठनरके गमन पीडावर्णन च

इतश्चास्ति पापिष्ठनिवासा नाम नगरी । तस्यामुपर्युपरि सप्त पाटका भवन्ति । तेषु च पापिष्ठाभिधाना एव कुलपुत्रका वसन्ति । तत षष्ठे तमःप्रभाभिधाने पाटके नीतो द्वावपि गुटिकाप्रभावेण भवितव्यतया, स्थापितौ तादृशकुलपुत्रकरूपतया, प्रवृद्ध सोऽधिकतरमावयोर्वैराऽनुबन्ध, स्थितौ परस्परघातमनेकयातनाभिर्विदधानौ द्वाविशति सागरोपमाणि, अवगाहितोऽनन्तमहादुखसागर । ततस्तस्या पर्यन्ते गुटिकादानद्वारेणैवाऽऽनीतौ पञ्चाक्षनिवासनगरे द्वावपि भवितव्यतया, विहितौ गर्भजसर्परूपौ, प्रादुर्भूत पूर्वाऽऽवेधेन परस्पर पुन क्रोधाऽऽवन्ध, युध्यमानयो सपन्न गुटिकाजरण, पुन प्रापितौ तेनैव प्रयोगेण तस्यामेव पापिष्ठनिवासाया नगर्यां धूमप्रभाभिधाने पञ्चमे पाटके भवितव्यतया । तत्रापि परस्पर निर्दलयतोर्गतानि सप्तदश सागरोपमाणि, अनुभूतान्यतितीव्रदुखानि । तत पुनरानीय पञ्चाक्षनिवासनगरे विहितो द्वावपि सिहरूपौ, तत्राऽपि तदवस्थितो वैराऽनुबन्ध[ऽऽवन्ध मु] । ततश्चाऽन्योऽन्य प्रहरतोरपनीय तद्रूप विहित तस्यामेव पुर्यां पङ्कप्रभाख्ये चतुर्थपाटके पापिष्ठरूप भवितव्यतया, तद्गतयो पुनरप्यावयोरनुवर्तते स्माऽसौ रोषात्कर्ष, लङ्घितानि तत्रापीतरेतर निघ्नतोर्दश सागरोपमाणि, सोढानि वाग्गोचराऽतीतानि दुखानि । तत पुनरानीय जनितौ द्वावपि श्येनरूपौ, सलग्न समु[ग्र]मु मु]ल्लसितवैश्वानरयोरायोधन, ततश्चयायित्वा तद्रूप पुनर्नीतौ तस्यामेव पुरि वालुकाप्रभानाम्नि तृतीयपाटके गुटिकाप्रयुक्तिवशेनैव भवितव्यतया, तत्रापि परस्पर शरीरचूर्णन कुर्वतो क्षेत्राऽनुभावजनितानि परमाधार्मिकाऽसुरोदीरितानि चाऽनन्तदुखानि सततमनुभवतोरतिक्रान्तानि सप्त सागरोपमाणि, तदन्ते पुनरानीतौ पञ्चाक्षनिवासनगरे दर्शितौ च नकुलरूपौ भवितव्यतया, न त्रुटितस्तत्रापि परस्पर मत्सरप्रकर्ष, प्रहरतोश्चान्योऽन्य विदीर्णे द्वयोरपि शरीरे, जीर्णे प्राचीनगुटिके, वितीर्णे पुनरपरे, नीतौ पुनस्तस्यामेव नगर्यां शर्कराप्रभाभिधाने द्वितीयपाटके । ततो विहितबीभत्सरूपयोरन्योऽन्य पिषतो परमाधार्मिककदर्थना क्षेत्रजनितसन्ताप च वेदयतोरतीतानि तत्रापि त्रीणि सागरोपमाणि, एव च पापिष्ठनिवासनगर्या पञ्चाक्षनिवासनगरे, ततोऽपि पुनरतस्य गत्यागमन कुर्वता तेन धराधरेण सार्धं वैर खेटयता भद्रे! अगृहीतसङ्केते! विडम्बितानि मया भवितव्यताप्रेरितेन भूयासि रूपाणि । तत पुन कुतूहलवशेनैव तया निजभार्यया जीर्णाया जीर्णाया तस्यामेकभववेद्याऽभिधानाया कर्मपरिणाममहाराजसमर्पिताया गुटिकाया भूयो भूयोऽपरापरा गुटिका योजयन्त्या तदसव्यवहारनगर विहायाऽपरेषु प्रायेण सर्वस्थानेषु *तिलपीडकन्यायेन* भ्रमितोऽहमनन्तकालमिति ।

एव वदति ससारिजीवे प्रज्ञाविशालया चिन्तित—अहो रौद्ररूपोऽसौ क्रोध, दारुणतरा हिसा, तथाहि—तद्वशवर्तिनाऽनेन ससारिजीवेन घोर ससारसागर कथञ्चिदतिलङ्घ्य प्राप्तेऽपि मनुष्यभवे विहित तत्तादृशमतिरौद्र कर्म, न प्रतिपन्न भागवत वचन, हारिता मनुष्यरूपता, निर्वर्तिता वैरपरम्परा, उपार्जिता ससारसागरेऽनन्तरूपा विडम्वना, स्वीकृतो महादुखसन्तान । तदिदमनुभवाऽऽगमसिद्धमनुभवन्तोऽप्येते मनुष्यभावाऽऽपन्ना प्राणिनो न लक्षयन्तीवानयो स्वरूप, आत्मवैरिण इव समाचरन्ति तमेव क्रोध, तामेव हिसा सततमनुवर्तन्ते, तदेतेऽपि वराका लप्स्यन्ते नूनमेवविधामनर्थपरम्परामित्येषा चिन्ता ममाऽन्त करणमाकुलयति।

## पुण्योदयेन सिद्धार्थपुरे मानवजन्मप्राप्ति

ससारिजीव प्राह—तत पुनरन्यदाऽहमगृहीतसङ्केते! नीत· श्वेतपुरे भवितव्यतया विहितश्चाभीररूप, तद्रूपतया वर्तमानस्य मे तिरोभूतोऽसौ वैश्वानर, जातो मनागह शान्तस्प, प्रवृत्ता मे यदृच्छया दानवुद्धि, न चाऽभ्यस्त किञ्चिद्विशिष्ट शील, न चाऽनुष्ठित कश्चित्सयमविशेष, केवल कथञ्चिद् *घर्षणघूर्णनन्यायेन* सपन्नोऽह तदा मध्यमगुण । ततस्तथाभूत मामुपलभ्य जाता मयि प्रसन्नहृदया भवितव्यता, ततश्चाऽऽविर्भावितोऽनया पुनरपि सहचरो मे पुण्योदय । ततोऽभिहितमनया→आर्यपुत्र! गन्तव्य भवता सिद्धार्थपुरे, स्थातव्य तत्र यथासुखासिकया, अय च तवाऽनुचर पुण्योदयो भविष्यति । मयाऽभिहित—यदाज्ञापयति

देवी । ततो जीर्णाया प्राचीनगुटिकाया दत्ता पुनरेकभववेद्या सा ममाऽपरा गुटिका भवितव्यतयेति।

भो भव्या प्रविहाय मोहललित युष्माभिराकर्ण्यताम् एकान्तेन हित मदीयवचन कृत्वा विशुद्ध मन ।
राधावेधसम कथञ्चिदतुल लव्ध्वाऽपि मानुष्यकम् हिंसाक्रोधवशानुगैरिदमहो जीवै पुरा हारितम् ॥१॥
अनादिससारमहाप्रपञ्चे, क्वचित्पुन स्पर्शवशेन मूढै । अनन्तवारा परमार्थशून्यैर्विनाशित मानुषजन्म जीवै ॥२॥
एतन्निवेदितमिह प्रकट ततो भो। ता स्पर्शकोपपरताऽपमति विहाय ।
शान्ता कुरुध्वमधुना कुशलाऽनुवन्धमह्नाय लङ्घयथ येन भवप्रपञ्चम् ॥३॥

इत्युपमितिभवप्रपञ्चाया कथाया
क्रोधहिंसास्पर्शनेन्द्रियविपाकवर्णनस्तृतीय प्रस्ताव

## अप्रमादयन्त्रं मुनीनाम्

यावज्जीवमेते (मुनय) नाचरन्ति तनीयसीमपि परपीडा, न भाषन्ते सूक्ष्ममप्यलीकवचन, न गृह्णन्ति दन्तशोधनमात्रमप्यदत्त, धारयन्ति नव गुप्तिसनाथ व्रह्मचर्य, वर्जयन्ति नि शेषतया परिग्रह, न विदधते धर्मोपकरणशरीरयोरपि ममत्वबुद्धि, नासेवन्ते रजन्या चतुर्भेदमप्याहारजात, आददते प्रवचनोपवर्णित समस्तोपधिविशुद्ध सयमयात्रामात्रसिद्ध्ये निरवद्यमाहारादिक, वर्तन्ते समितिगुप्तिपरिपूरितेनाचरणेन, पराक्रमन्ते विविधाभिग्रहकरणेन, परिहरन्त्यकल्याणमित्रयोग, दर्शयन्ति सतामात्मभाव, न लड्घयन्ति निजामुचितस्थिति, नापेक्षन्ते लोकमार्गं, मानयन्ति गुरूसहति चेष्टन्ते तत्तन्त्रतया, आकर्णयन्ति भगवदागम, भावयन्ति महायत्नेन, अवलम्बन्ते द्रव्यापदादिषु धैर्य, पर्यालोचयन्त्यागामिनमपाय, यतन्ते प्रतिक्षणमसपत्नयोगेषु, लक्षयन्ति चित्तविश्रोतसिका, प्रतिविदधते चानागतमेव तस्या प्रतिविधान, निर्मलयन्ति सततमसङ्गताभ्यासरतलया मानस, अभ्यस्यन्ति योगमार्ग, स्थापयन्ति चेतसि परमात्मानं, निबध्नन्ति तत्र धारणा, परित्यजन्ति बहिर्विक्षेप, कुर्वन्ति तत्प्रत्ययैकतानमन्त करण, यतन्ते योगसिद्धौ, आपूरयन्ति शुक्लध्यान, पश्यन्ति देहेन्द्रियादिविविक्तमात्मान, लभन्ते परमसमाधि, भवन्ति शरीरिणोऽपि सन्तो मुक्तिसुखभाजनम् ।

॥ श्री चिन्तामणिपार्श्वनाथाय नम ॥

॥ त देवदेवमहिय सिरसा वन्दे महावीरम् ॥

मानमृषावादरसनेन्द्रियविपाकवर्णनो नाम

# चतुर्थ प्रस्ताव

## रिपुदारणजन्म

अथ विख्यातसौन्दर्ये, सपुण्यजनसेविते । सिद्धार्थनगरे तत्र, भूपोऽभून्नरवाहन ॥१॥
यस्तेजसा सहस्रांशु, गाम्भीर्येण महोदधिम् । स्थैर्येण शैलराजेन्द्र, जयति स्म महाबल ॥२॥
येन बन्धुषु चन्द्रत्व, शत्रुवशे कृशानुता । प्रदर्शिताऽऽत्मनो नित्य, धनेन धनदायितम् ॥३॥
तस्य रूपयशोवशविभवैरनुरूपताम् । दधानाऽऽसीन्महादेवी, नाम्ना विमलमालती ॥४॥
सा चन्द्रिकेव चन्द्रस्य, पद्मेव जलजन्मन । तस्य राज्ञ सदा देवी, हृदयान्न विनिर्गता ॥५॥
ततोऽगृहीतसङ्केते! तदानीं निजभार्यया । सह पुण्योदयेनाऽह, तस्या कुक्षौ प्रवेशित ॥६॥
अथ सपूर्णकालेन, सर्वाऽवयवसुन्दर । निष्क्रान्तोऽहमभिव्यक्तरूपश्छन्नस्तथेतर ॥७॥
ततो मामुपलभ्याऽसौ, देवी विमलमालती । सजात किल पुत्रो मे, पर हर्षमुपागता ॥८॥
ततो निवेदितो राज्ञे, तुष्टोऽसावपि चेतसा । सजातो नगराऽऽनन्द, कृतो जन्ममहोत्सव ॥९॥
ममापि च समुत्पन्नो, वितर्को निजमानसे । यथाऽहमनयो पुत्रस्तातो मातेति तावुभौ ॥10॥
अथ मासे गते पूर्णे, महानन्दपुरसरम् । तत प्रतिष्ठित नाम, ममेति रिपुदारण ॥११॥

## शैलराजजन्म

नन्दिवर्धनकाले या, ममाऽऽसीदविवेकिता । सा धात्री पुनरायाता, स्तनपायनतत्परा ॥१२॥
इतश्च तेन सा भर्त्रा, निजेन प्रियकामिना । क्वचिद् द्वेषगजेन्द्रेण, सयोग समुपागता ॥१३॥
यदा चापन्नगर्भाऽभूद्देवी विमलमालती । तदैव दैवयोगेन, सजाता साऽपि गर्भिणी ॥१४॥
ततो मज्जन्मकाले सा, प्रसूता दुष्टदारकम् । उन्नामितमहोरस्क, वदनाष्टकधारकम् ॥१५॥
त वीक्ष्य सा विशालाक्षी, पर हर्षमुपागता । ततश्च चिन्तयत्येव, स्तिमितेनाऽन्तरात्मना ॥१६॥
अहो मदीयपुत्रस्य, कूटानि सुगिरेरिव । मूर्धानोऽष्ट विराजन्ते, तदिद महदद्भुतम् ॥१७॥
तत साऽपि गते मासे, निजसूनोर्गुणोचितम् । करोति नाम विख्यात, शैलराज इति स्फुटम् ॥१८॥
इतश्च–सा धात्रि स च तत्सूनुरनादावपि सर्वदा । ममाऽन्तरङ्गोऽभूदेव, तिरोभूततया परम् ॥१९॥
तत पित्रोर्महानन्द दधान सुखलालित । सहैव शैलराजेन, परा वृद्धिमह गत ॥20॥

## उभयोर्मैत्री

अथाऽतीतेषु वर्षेषु, पञ्चषेषु[1] ततो मया । स व्यक्त रममाणेन, शैलराजो निरीक्षित ॥२१॥
अनादिस्नेहमोहेन, त दृष्ट्वा मम मानसे । या प्रीतिरासीत्साऽऽख्यातु, वचनेन न पार्यते ॥२२॥
विलोकयन्त मा वीक्ष्य, स्निग्धदृष्ट्या स दारक । शठाऽऽत्मा चिन्तयत्येव, लब्धलक्ष्य स्वचेतसा ॥२३॥
अये! मामेष राजेन्द्रतनय स्निग्धचक्षुषा । विलोकयति तन्नून, ममाऽय वर्तते वशे ॥२४॥
ततो विस्मेरिताऽक्षोऽसौ,(विस्फारिताक्षोऽसौ प्र )किलाह स्नेहनिर्भर । दर्शयन्निति मे देह, समालिङ्गति मायया ॥२५॥
ततो मे मोहदोषेण, स्फुरित निजमानसे । अहो भावज्ञताऽप्यस्य, त्रैलोक्यमतिवर्तते ॥२६॥
तदिदानी मया नैष, स्निग्धो बन्धुर्विचक्षण । मोक्तव्य क्षणमप्येव, कृतश्चित्ते विनिश्चय ॥२७॥
ततस्तेन सहोद्यानकाननेषु दिने दिने । क्रीडत सतत याति, कालो मे हृष्टचेतस ॥२८॥

1 पञ्च वा षड् वेति पञ्चषा, तेषु ।

न लक्षित मया मोहविह्वलीभूतचेतसा । यथेष शैलराजो मे, परमार्थेन वैरिक ॥२९॥

शैलराजप्रभावजातविकल्पा

ततो दिनेषु गच्छत्सु, मैत्री तेन विवर्धते । तत्प्रभावात्प्रवर्धन्ते, वितर्का मम मानसे ॥30॥
यथा ममोत्तमा जाति, कुल सर्वजनाऽधिकम् । वल भुवनविख्यात, रूप भुवनभूषणम् ॥३१॥
सौभाग्य जगदान्दमैश्वर्यं भुवनातिगम् । श्रुत पूर्वभवाऽभ्यस्त, परिस्फुरति मेऽग्रत ॥३२॥
मघवाऽपि पद स्वीय, यद्यह प्रार्थये तत । ददात्येव न कार्यं मे, लाभशक्तिरिय मम ॥३३॥
ये चाऽन्येऽपि तपोवीर्यधैर्यसत्त्वादयो गुणा । ते मय्येव वसन्त्युच्चैर्विमुच्य भुवनत्रयम् ॥३४॥
यदिवा–यस्येदृशेन मित्रेण, सजातो मम मीलक । तस्य को वर्णयेल्लोके, गुणसम्भारगौरवम् ? ॥३५॥
तथाहि–पुरुषस्य भवेत्तावत्सर्वस्यैकमिहाननम् । अय वक्त्राष्टकेनैव, जयत्येव पर जनम् ॥३६॥
तदेष शैलराजो मे, यस्य प्राप्तो वयस्यताम् । तस्य नास्ति जगत्यत्र, यन्न सपन्नमञ्जसा ॥३७॥
ततोऽवलिप्तचित्तोऽह, ता विकल्पपरम्पराम् । वर्धयन्नात्मन सर्वं, न्यून मन्ये तदा जनम् ॥३८॥
ऊर्ध्वीकृतनिजग्रीवो, नक्षत्राणि निभालयन् । अग्रतोऽपि न पश्यामि, मत्तवद्गन्धवारण ॥३९॥
आपूर्णो भूरिवातेन, विततात्मा यथा दृति । ततोऽह विचरामि स्म, नि सारो मदविह्वल ॥40॥
चिन्तयामि न मे वन्द्य, कश्चिदस्ति जगत्त्रये । यत एतद्गुणै सर्वमधरतान्मम वर्तते ॥४१॥
को ममाऽन्यो गुरुर्नूनमहमेव गुणैर्गुरु । क एते देवसङ्घाता ? ये मत्तोऽपि गुणाधिका ॥४२॥
ततोऽगृहीतसङ्केते। तदाऽह गर्वनिर्भर । शैलस्तम्भसमो नैव, कस्यचित्प्रणति गत ॥४३॥
किञ्च–प्रणताऽशेषसामन्तकिरीटांशुविराजितम् । न नत जातुचिद्भद्रे। तातीय पादपङ्कजम् ॥४४॥
अशेषजनवन्द्याऽपि, स्नेहनिर्भरमानसा । कदाचिदपि नैवाऽम्वा, मया नून नमस्कृता ॥४५॥
ये केचिल्लोकिका देवा, याश्चान्या कुलदेवता । न ता प्रणामकामेन, चक्षुपाऽपि मयेक्षिता ॥४६॥

नरवाहनकृतानुकूलता

ततो मा तादृश वीक्ष्य, शैलराजसमन्वितम् । वर्धमान स राजेन्द्रो, मनसा पर्यचिन्तयत् ॥४७॥
अहो मदीयपुत्रोऽय, गाढ मानधनेश्वर । तदस्य लोको यद्याज्ञा, लङ्घयेत कदाचन ॥४८॥
ततोऽय चित्तनिर्वेदान्मन्यमानोऽवधीरणाम् । मा विहाय क्वचिद्गच्छेत्तदिद नैव सुन्दरम् ॥४९॥
ज्ञापयित्वा नरेन्द्रादीन्, कुमारचरित तत । आज्ञाविधेयानस्योच्चै, करोमि सकलानपि ॥50॥
एव विचिन्त्य मे तात, स्नेहनिर्भरमानस । समस्त तत्करोत्येव, यत्स्वय परिचिन्तितम् ॥५१॥
अथ ताताऽऽज्ञया सर्वे, नरेन्द्रा नतमस्तका । वालस्यापि ममाऽत्यन्त, किङ्करत्वमुपागता ॥५२॥
प्रधानकुलजाता ये, ये च विक्रमशालिन । तेऽपि मा देव देवेति, ब्रुवाणा पर्युपासते ॥५३॥
यदह वच्मि तत्सर्वो, राजलोक कृतादर । जय देवेति लपन्नुच्चै, शिरसा प्रतिपद्यते ॥५४॥
किञ्चाऽत्र बहुनोक्तेन? ततोऽम्वा च सवान्धवा । वीक्षते सर्वकार्येष्वधिक मा परमात्मन ॥५५॥
स च पुण्योदयस्तत्र, माहात्म्ये मम कारणम् । तथापि मोहदोषेण, मयेद परिचिन्तितम् ॥५६॥
अय ममैष यो जातो, देवानामपि दुर्लभ । सर्वस्यास्य प्रतापस्य, शैलराजो विधायक ॥५७॥

शैलराजदर्शितस्तब्धचित्ताख्यविलेपनम्

तत सतुष्टचित्तेन, शैलराजो मयाऽन्यदा । प्रोक्तो विश्रम्भजल्पेन, स्नेहनिर्भरचेतसा ॥५८॥
वयस्य। योऽय (ह प्र) सपन्नो, लोकमध्येऽतिसुन्दर । मम ख्यातिविशेषोऽय, प्रतापो हन्त तावक ॥५९॥
ततश्च–मदीयवचसा तुष्ट, शैलराज स्वमानसे । वष्टतामुररीकुर्वन्निद वचनमव्रवीत् ॥60॥
कुमार। परमार्थोऽय, कथ्यते तव साम्प्रतम् । यदेवविधजल्पस्य, कुमारस्येह कारणम् ॥६१॥
ये दुर्जना भवन्त्यत्र, गुणपूर्णं पर जनम् । स्वाभिप्रायाऽनुमानेन, मन्यन्ते दोषपुञ्जकम् ॥६२॥
ये सज्जना पुनर्धन्यास्ते लोक दोषपूरितम् । स्वाभिसन्धिविशुद्ध्यैव, लक्षयन्ति गुणालयम् ॥६३॥

एवं च स्थिते–यद्भासते गुणित्वेन, गुणहीनोऽप्यय जन । कुमार! तावके चित्ते, सौजन्य तत्र कारणम् ॥६४॥
प्रतापस्तावकीनोऽय, समस्तोऽपि सुनिश्चितम् । भावत्कवीर्यविख्याता, के वय परमार्थत ? ॥६५॥
तदिद शैलराजीय, वचन सुमनोहरम् । आकर्ण्याऽह तदा भद्रे! पर स्नेहरस गत ॥६६॥
चिन्तितं च मया–अहो मय्यनुरागोऽस्य, अहो गम्भीरचित्तता । अहो वचनविन्यासस्तथाऽहो भावसारता ॥६७॥
ततो मयाऽभिहित–वयस्य! नेदृश वाच्यमुपचारपर वच । ममाग्रतो यतो ज्ञात, माहात्म्य तावक मया ॥६८॥
ततो हर्षवशात्तेन, शैलराजेन जल्पितम् । *प्रसादपरमे नाथे, भृत्याना कि न सुन्दरम् ?* ॥६९॥
अन्यच्च–यदि सम्भावना जाता, भवता मादृशे जने । ततो मे परम गुह्य, भवद्भिरनुमन्यताम् ॥70॥
विद्यते मम सद्वीर्यं, हृदयस्याऽवलेपनम् । तन्निजे हृदये देय, कुमारेण प्रतिक्षणम् ॥७१॥

मयाऽभिहित, कुतस्तदवाप्तं भवता ? को वा तस्य हृदयाऽवलेपनस्य प्रभाव ? इति श्रोतुमिच्छामि । शैलराजेनाभिहित–कुमार! न कुतश्चिदपि तदवाप्त मया, कि तर्हि ? स्वकीयेनैव वीर्येण जनित, नामत पुन स्तब्धचित्तं तदभिधीयते, प्रभाव तु तस्याऽनुभवद्वारेणैव विज्ञास्यति कुमार, कि तेनाऽऽवेदितेन ? मयाऽभिहित–यद्वयस्यो जानीते। तत समर्पित ममाऽन्यदा शैलराजेन तदात्मीय हृदयावलेपन, विलिप्त मया हृदय, जातोऽह गाढतरमुल्लम्बितभूत[शून मु]तस्कराऽऽकारधारितया नमनरहित, ततस्तथाभूत मामवलोक्य सुतरा प्रणतिप्रवणा सपन्ना सामन्तमहत्तमादय, तातोऽपि सप्रणाम मामालापयति स्म, तथाऽम्बाऽपि स्वामिनमिव मा विज्ञपयति स्म । तत सजातो मे हृदयावलेपनप्रभावे सम्प्रत्यय, सपन्ना स्थिरतरा शैलराजे परमबन्धुबुद्धिरिति ।

### दुष्टाशयादिपुत्रमृषावादस्य प्रभाव

इतश्चाऽन्यदा गतोऽहमन्तरङ्गे क्लिष्टमानसाऽभिधाने नगरे, तच्च कीदृशम् ?
आवास सर्वदुखाना, नष्टधर्मैर्निषेवितम् । कारण सर्वपापाना, दुर्गतिद्वारमञ्जसा ॥१॥
तत्र च नगरे दुष्टाशयो नाम राजा । स च कीदृशः?
उत्पत्तिभूमिर्दोषाणामाकर क्लिष्टकर्मणाम् । सद्विवेकनरेन्द्रस्य, महाऽरि स नराधिप ॥२॥
तस्य च राज्ञो जघन्यता नाम देवी, सा च कीदृशी?
नराधमाना साऽभीष्टा, विद्वद्भि परिनिन्दिता । प्रवर्तिका च सा देवी, सर्वेषा निन्द्यकर्मणाम् ॥३॥
तयोश्च जघन्यतादुष्टाशययोर्देवीनृपयोरत्यन्तमभीष्टोऽस्ति मृषावादो नाम तनय । स च कीदृश·?
समस्तभूतसङ्घस्य, विश्वासच्छेदकारक । नि शेषदोषपुञ्जत्वाद् गर्हितश्च विचक्षणै ॥४॥
शाठ्यपैशुन्यदौर्जन्यपरद्रोहादितस्करा । त राजपुत्र सेवन्ते, सदनुग्रहकाम्यया ॥५॥
स्नेहो मैत्री प्रतिज्ञा च, तथा सम्प्रत्ययश्च य । एतेषा शिष्टलोकाना, राजसूनुरसौ रिपु ॥६॥
पिताऽसौ व्रतलोपस्य, मर्यादाया महारिपु । अयशोवादतूर्यस्य, सदास्फालनतत्पर ॥७॥
ये केचिन्नरक यान्ति, तस्य निर्देशकारिण । स एव प्रगुण मार्गं, तेषा दर्शयितु क्षम ॥८॥

### मृषावादमैत्रीजन्यविकारा

ततो दृष्टोऽसौ मया दुष्टाशयो नरेन्द्र, तत्पार्श्ववर्तिनी च विलोकिता सा जघन्यता महादेवी । तयोश्चाऽग्रतो वर्तमानो निर्वर्णितो मया तयोरेव चरणशुश्रूषाकरणपरायण स मृषावादो राजदारक । ततो विहितप्रतिपत्ति स्थितस्तत्राह कियन्तमपि काल, महामोहविमोहितमानसेन च मया न लक्षित तदा तेषा नगरराजेन्द्रमहादेवीदारकाणा सम्बन्धि स्वरूप, गृहीतोऽपि परमबन्धुबुद्ध्या विशेषत प्रतिपन्नो वयस्यतया मृषावाद, प्राप्त प्रकर्षगति तेन सह प्रेमाऽऽबन्ध, दृष्टोऽसौ शरीरादभिन्नरूपतया, ततश्चाऽऽनीत स मया मृषावाद स्वस्थाने । ततस्तेन सह ललमानस्य मे समुत्पद्यन्ते स्म मनसीदृशा वितर्का,
यदुत–नून विदितसारोऽहमहमेव विचक्षण । शेष सर्व पशुप्रायो, मुग्धबुद्धिरय जन ॥१॥
यस्य मे सर्वसम्पत्तिकारको मित्रता गत । सर्वदाऽय मृषावाद, स्नेहेन हृदि वर्तते ॥२॥
असद्भूतपदार्थेऽपि, सद्बुद्धि जनयाम्यहम् । सद्भूतमप्यसद्भूत, दर्शया[illegible]लात् ॥३॥
कृत प्रत्यक्षमप्युच्चैर्महासाहसमात्मना । वरमित्रप्रसादेन, लगयामि परे

चौर्यं वा पारदार्यं वा, कुर्वतोऽपि यथेच्छया । कुतोऽपराधगन्धोऽपि, मम यावदय सुहृत् ? ॥५॥
स्वार्थसिद्धि कुतस्तेषाम्? येषामेष न विद्यते । अतो मूर्खा अमी लोका, स्वार्थभ्रशो हि मूर्खता ॥६॥
विग्रहेऽपि क्वचित्सन्धि, सन्धावपि च विग्रहम् । मृषावादप्रसादेन, घटयामि यथेच्छया ॥७॥
यत्किञ्चिच्चिन्तयाम्यत्र, वस्तु लोकेऽतिदुर्लभम् । वरमित्रप्रसादेन, सर्वं सपद्यते मम ॥८॥
मया पुण्यैरवाप्तोऽयमयमेव च मे सुहृत् । एष एव जगद्वन्द्यो, यथेष्टफलदायक ॥९॥
ततोऽगृहीतसङ्केते। मया मोहहतात्मना । कुविकल्पैर्मनस्तत्र, मृषावादे प्रतिष्ठितम् ॥10॥
तद्वशेन च येऽनर्था, सपद्यन्तेऽतिदारुणा । पुण्योदयप्रभावेण, ते यान्ति विलय तदा ॥११॥
अह तु तन्न जाने स्म, महामोहवश गत । ततस्तत्र मृषावादे, पश्यामि गुणमालिकाम् ॥१२॥

## कलाचार्ये व्यवहारवैपरीत्यम्

एव च वर्तमानस्य, वयस्यद्वययोगत । कलाग्रहणकालो मे, सप्राप्त क्रमशोऽन्यदा ॥१३॥
ततस्तातेन सपूज्य, कलाचार्यं विधानत । तस्यार्पितोऽह सद्भक्त्या, महानन्दपुरसरम् ॥१४॥
उक्तश्चाऽह गुरु पुत्र। तवाऽय ज्ञानदायक । अत पादौ प्रणम्याऽस्य, शिष्यभावं समाचर ॥१५॥
मयोक्त तात। मुग्धोऽसि, यो मामेव प्रभाषते । वराक कि विजानीते, नूनमेष ममाऽग्रत ? ॥१६॥
गुरुरन्यस्य लोकस्य, स्यादेष न तु मादृशाम् । अतो नाऽह पताम्यस्य, पादयो शास्त्रकाम्यया ॥१७॥
केवलम्—भवतामनुरोधेन, गृह्णामि सकला कला । मदीयविनयो नूनमग्य स्यान्मातृलोहितम् ॥१८॥
ततस्तातेन स प्रोक्त, कलाचार्यो रहस्थित । आर्य। मामकपुत्रोऽय, गाढ मानधनेश्वर ॥१९॥
तदत्र भवता नाऽस्य, दृष्ट्वाऽप्यविनयादिकम् । चित्तोद्वेगो विधातव्यो, ग्राहणीयश्च सत्कला ॥20॥
ततो विनयनम्रस्य, श्रुत्वा तातस्य जल्पितम् । यदादिशति राजेन्द्र, इत्याह स महामति ॥२१॥
चिन्तित च तदा तेन, कलाचार्येण मानसे । किलैष यावच्छास्त्रस्य, सद्भाव नाववुध्यते ॥२२॥
यावच्च केलिवहुला, वालतामनुवर्तते । अलीकगर्वितोप्यान्तरस्तावदेव प्रभाषते ॥२३॥
यदा तु ज्ञातसद्भाव, शास्त्रार्थाना भविष्यति । तदा मद परित्यज्य, स्वयं नम्रो भविष्यति [त्रिभिर्विशेषकम्] ॥२४॥
एव निश्चित्य हृदये, कलाचार्यो महामति । तत सर्वादरेणाऽसो, प्रवृत्तो ग्राहणे मम ॥२५॥
इतश्चाऽन्येऽपि तत्पार्श्वे, वहवो राजदारका । प्रशान्ता विनयोद्युक्ता, गृह्णन्ति सकला कला ॥२६॥
यथा यथा च मे नित्यमादर कुरुते गुरु । तथा तथा वयस्यो मे, शैलराजो विवर्धते ॥२७॥
ततश्च तद्वशेनाऽहमुपाध्याय मदोद्धत । जात्या श्रुतेन रूपेण, हीलयामि क्षणे क्षणे ॥२८॥

## कलाचार्यस्य कुमारे शिथिलादर·

ततश्च चिन्तित महामतिना, अये। —

ग्रस्तस्य सन्निपातेन, क्षीरान्नमिव सुन्दरम् । अपथ्योऽस्य वराकस्य, कलाशास्त्रपरिश्रम ॥२९॥
गाढ कर्पितदेहस्य, यथाऽऽम्ल भूरि भोजनम् । तथाऽस्य मत्कृतो यत्न, श्वयथु वर्धयत्यलम् ॥30॥
ततो यद्यपि राजेन्द्र, पुत्रस्नेहपरायण । उत्साहयति मा नित्य, गुणाऽऽधानार्थमस्य वै ॥३१॥
तथाप्यपात्रभूतोऽय, य एव रिपुदारण । तस्य त्याग पर न्याय्यो, ज्ञानदान न युज्यते ॥३२॥
यो हि दद्यादपात्राय, सज्ज्ञानममृतोपमम् । स हास्य स्यात्सता मध्ये, भवेच्चाऽनर्थभाजनम् ॥३३॥
न चैष शक्यते कर्तुं, नम्रो यत्नशतैरपि । को हि स्वेदशतेनाऽपि, श्वपुच्छ नामयिष्यति ? ॥३४॥

ततश्चैव स्वचेतस्यवधार्य तेन महामतिना कलाचार्येण शिथिलितो ममोपरि कलाशास्त्रग्राहणाऽनुवन्ध ,परित्यक्तमुपचारसभाषण, दृष्टोऽह धूलिरूपतया, तथापि तातलज्जया नासौ वहिर्मुखविकारमात्रमपि दर्शयति, न च मनागपि मा परुषमाभाषते । इतश्च तेऽपि राजदारका शैलराजमृषावादनिरत मामुपलभ्य विरक्ताश्चित्तेन, तथापि पुण्योदयेनाधिष्ठित मा ते चिन्तयन्तोऽपि न कथञ्चिदभिभवितु शक्नुवन्ति । इतश्च यथा यथा तौ शैलराजमृषावादो वर्धेते तथा तथाऽसौ मदीयवयस्य पुण्योदय क्षीयते, तत कृशीभूते तस्मिन् पुण्योदये समुत्पन्ना मे गाढतर गुरुपरिभववुद्धि ।

## गुरुपरिभव

अन्यदा निर्गतो बहि प्रयोजनेनोपाध्याय, ततोऽधिष्ठितं मया तदीय महार्हं वेत्रासन, दृष्टोऽहमुपविष्टस्तत्र राजदारके, ततो लज्जितास्ते मदीयकर्मणा, लघुध्वनिना चोक्तमेतै हा हा कुमार! न सुन्दरमिद विहित भवता, वन्दनीयमिदं गुरोरासन, न युक्तं भवादृशामस्याऽऽक्रमण, यतोऽस्मिन्नुपविशता सपद्यते कुलकलङ्क, समुल्लसति भृशमयश पटह, प्रवर्धते पाप, सजायते चायुष. क्षरणमिति । मयाऽभिहित→अरे! बालिशा ! नाह भवादृशां शिक्षणार्ह, गच्छत यूयमात्मीय सप्तकुल शिक्षयत, तदाकर्ण्य स्थितास्ते तूर्ष्णीभावेन, तत स्थित्वा तत्र वेत्रासने बृहती वेलामुत्थितोऽह यथेष्टया, समागत कलोपाध्याय, कथितं तस्मै राजदारकैर्मदीय विलसित, क्रुद्ध स्वचेतसा, पृष्टोऽहमनेन, तत सासूय मयाऽभिहित→अहमेतत्करोमि? अहो ते शास्त्रकौशलं, अहो ते पुरुषविशेषज्ञता, अहो ते विचारितभपिता, अहो ते विमर्शपाटव यस्त्वमेतेषा मत्सरिणामसत्यवादिनां वचनेन विप्रतारितो मामेवमाभाषसे । ततो विलक्षीभूत कलोपाध्याय । चिन्तितमनेन→न तावदेते राजदारका विपरीतं भापन्ते, अयं तु स्वकर्माऽपराधमेवमलपति तदेन स्वयमुपलभ्य शिक्षयिष्यामि । अन्यदा प्रच्छन्नदेशस्थितेनाऽवेक्षितोऽह तेन महामतिना, दृष्टस्तत्र वेत्रासने सरभसमुपविष्टो ललमान, तत प्रकटीभूतोऽसौ, दृष्टो मया, मुक्त झगिति वेत्रासनम्। महामतिनाऽभिहितं—इदानी तर्हि भवत किमुत्तरम्? मयोक्त—कीदृशे प्रश्ने? महामतिराह→तत्रैव पूर्वके । मयोक्त→न जानाम्यह कीदृशोऽसौ पूर्वक प्रश्न? महामतिराह→किमुपविष्टस्त्वमत्र वेत्रासने न वेति । ततो हा शान्त पापमिति ब्रुवाणेन पिहितौ मया कर्णौ । पुनरभिहित—पश्यत भो मत्सरविलसित यदेते स्वयमकार्यं कृत्वा ममोपर्येवमारोपयन्ति । महामतिना चिन्तितं→अहो सेय दृष्टेऽप्यनुपपन्नता नाम, अहो अस्य धाष्ट्र्यं, अवैद्यक खल्वय, इयत्ताऽत परमसत्यवचनस्य, राजदारकैरभिहितमेकान्ते विधाय कलाचार्यं, यदुत—'अद्रष्टव्य खल्वय पाप' तत्किमेनमस्माक मध्ये धारयत यूयम् ।

## असत्यवादिनोऽपात्रता

महामतिना चिन्तित—सत्यमेते तपस्विन प्रवदन्ति, नोचित एवाऽय रिपुदारण सत्सङ्गमस्य

तथाहि—लुब्धमर्थप्रदानेन, क्रुद्ध मधुरभाषणै । मायाविनमविश्वासात्, स्तब्ध विनयकर्मणा ॥१॥
चौर रक्षणयत्नेन, सद्बुद्ध्या पारदारिकम् । वशीकुर्वन्ति विद्वास, शेषदोषपरायणम् [युग्मम्] ॥२॥
न विद्यते पुन कश्चिदुपायो भुवनत्रये । असत्यवादिन पुस, कालदष्ट स उच्यते ॥३॥
यत—सर्वेऽपि ये जगत्यत्र, व्यवहारा शुभेतरा । सत्ये प्रतिष्ठिता नेद यस्याऽसो नन्व(सत्व प्र)लोकिक ॥४॥
अतो विज्ञाय यत्नेन, सत्यहीन नराधमम् । त्यजन्त्येव सुदूरेण, प्रियसत्या महाधिय ॥५॥
ततोऽय सत्यहीनत्वादस्माक रिपुदारण । सम्यग्विज्ञातशीलाना, न मध्ये स्थातुमर्हति ॥६॥

अथवा नाऽस्य वराकस्य रिपुदारणस्याय दोषो, यतोऽयमनेन शैलराजेन प्रेर्यमाणस्तावत्सकलदुर्विनयमाचरति, तथाऽनेन मृषावादेन प्रोत्साह्यमान खल्वयमेव भाषते, ततो यद्येतौ पापवयस्यो परिहरति, तदर्थं शिक्षयामि तावदेन, तत कृतोऽहमुत्सारके महामतिना, अभिहितश्च→कुमार! नेदृशाना स्थानमिह मदीयशालाया, अत कदाचिदेतो पापवयस्यो परिहर, यदि वा नागन्तव्यमिह कुमारेणेति । मयाऽभिहित→त्वमात्मीयजनकाय स्वस्थान प्रयच्छ, वय तु त्वदीयस्थानेन त्वयाऽपि च विनैव भलिष्यामहे, ततश्चैवविधैस्तिरस्कृत्य परुषवचनैरुपाध्यायमुन्नामितया कन्धरया गगनाऽभिमुखेन वदनेन विततीकृतेन वक्ष स्थलेनऽविकटपादपातेन गतिमार्गेण विलिप्य तेन स्तब्धचित्तेन शैलराजीयविलेपनेनाऽऽत्महृदय निर्गतोऽहमुपाध्यायभवनात्, ततोऽभिहिता महामतिना ते राजदारका→अरे! निर्गतस्तावदेष दुरात्मा रिपुदारण, केवल गरीयान्नरवाहननृपते पुत्रस्नेह, स्नेहमूढाश्च प्राणिनो न पश्यन्ति वल्लभस्य दोषसमूह, समारोपयन्त्यसन्तमपि गुणसङ्घातं, रुष्यन्ति तद्विप्रियकारिणि जने, न विचारयन्ति विप्रियकरणकारण, न लक्षयन्ति स्थानमानान्तर, कुर्वन्ति स्वाभिमतविप्रियकर्तुर्महापाय, तदेव व्यवस्थिते भवद्भिर्मौनमवलम्बनीय, यदि रिपुदारणनिर्गमनव्यतिकर प्रश्नयिष्यति देवो नरवाहनस्ततोऽहमेव त प्रत्याययिष्यामि, राजदारकैरभिहित यदाज्ञापयत्युपाध्याय । इतश्च ततो निर्गत्य गतोऽह (सौ प्र) तातसमीपे पृष्टस्तातेन→पुत्र! कि वर्तते कलाग्रहणस्य? इति, तत शैलराजीयहृदयाऽवलेपवशेन मृषावादाऽवष्टम्भेन च मयाऽभिहितं—तात! समाकर्णय—

## कलाविषये मृषावाद

पूर्वमेव ममाऽशेष, विज्ञानं हृदयस्थितम् । अय तावकयत्नो मे, विशेषाधायक परम् ॥१॥

ततश्च–लेख्ये चित्रे धनुर्वेदे, नरादीना च लक्षणे । गान्धर्वे हस्तिशिक्षाया, पत्रच्छेद्ये सवैद्यके ॥२॥
शब्दे प्रमाणे गणिते, धातुवादे सकोतुके । निमित्ते याश्च लोकेऽत्र, कला काश्चित्सुनिर्मला ॥३॥
तासु सर्वासु मे तात! प्रावीण्य वर्तते परम् । आत्मतुल्य न पश्यामि, त्रैलोक्येऽप्यपर नरम् ॥४॥
सुतस्नेहेन तत् श्रुत्वा, तातो हर्षमुपागत । चुम्बित्वा मूर्धदेशे मामिद वचनमब्रवीत् ॥५॥
जात! चारु कृत चारु, सुन्दरस्ते महोद्यम । कि त्वेक मे कुमारेण, वचन श्रूयतामिति ॥६॥
मयाऽभिहित–वदतु तात! तातेनाभिहित–
विद्याया ध्यानयोगे च, स्वभ्यस्तेऽपि हितैषिणा । सन्तोषो नैव कर्तव्य स्थैर्यं हितकर तयो ॥७॥
एव च स्थिते–गृहीताना स्थिरत्वेन, शेषाणां ग्रहणेन च । कलाना मे कुमारत्वे, त्व पुषाण मनोरथान् ॥८॥

मयाऽभिहित→एव भवतु, ततो गाढतर तुष्टस्तात, दत्तो भाण्डागारिकस्याऽऽदेश, अरे! पूरय महामतिभवन धनकनकनिचयेन, येन कुमार सकलोपभोगसम्पत्त्या निर्व्यग्रस्तत्रैव कलाग्रहण कुर्वन्नास्ते । ततो 'यदाज्ञापयति देव' इत्यभिधाय सपादित भाण्डागारिकेण राजशासनम् । महामतिनाऽपि मा देवस्य चित्तसन्तापो भविष्यतीत्याकलय्य न निवेदितं ताताय मदीयविलसितम् । ततोऽभिहितोऽह तातेन वत्स! अद्यदिनादारभ्य स्थिरीकुर्वता पूर्वगृहीत कलाकलाप गृहता चापूर्वं तत्रैवोपाध्यायभवने भवता स्थातव्यमहमपि न द्रष्टव्य । मयाऽभिहित→'एवं भवतु' जातश्च मे हर्ष । ततस्तातसमीपान्निर्गतेन मया मृषावाद प्रत्यभिहित→वयस्य! कस्योपदेशेनेदृश भवत कौशल्य, येन युष्मदवष्टम्भेन मया सपादितस्तातस्य हर्ष, प्रच्छादित कलाचार्यकलहव्यतिकरो, लब्धा चेयमतिदुर्लभा मुत्कलचारितेति ।

## मायाचार

मृषावादेनाभिहित–कुमार! आकर्णय । अस्ति राजसचित्ते नगरे रागकेसरी नाम राजा । तस्य च मूढता नाम महादेवी । तयोश्चाऽस्ति माया नाम दुहिता, सा मया महत्तमा भगिनी प्रतिपन्ना, प्राणेभ्योऽपि वल्लभोऽह तस्या, ततस्तदुपदेशेन ममेदृश कौशल, सा च जननीकल्पमात्मानं मन्यमाना यत्र यत्र क्वचिदह सचरामि तत्र तत्र वत्सलतया सततमन्तर्लीना तिष्ठति, न क्षणमात्रमपि मा विरहयति । मयाऽभिहित→वयस्य! दर्शनीया ममापि साऽऽत्मीया भगिनी भवता । मृषावादेनाऽभिहित→एव करिष्यामि । ततो मया तत प्रभृति वेश्याभवनेषु, द्यूतकरशालासु, दुर्ललितमीलकेषु, तथाऽन्येषु च दुर्विनयस्थानेषु यथेष्टचेष्टया विचरता तथापि मृषावादबलेन कलाग्रहणमह करोमीति लोकमध्ये गुणोपार्जनतत्परमात्मान प्रकाशयता तातमपश्यतैवाऽतिवाहितानि द्वादश वर्षाणि। मुग्धजनप्रवादेन च समुच्चलिताऽलीकवार्ता यथा 'रिपुदारणकुमार सकलकलाकलापकुशल' इति। प्रचरितो देशान्तरेष्वपि प्रवाद, समारूढश्चाऽह यौवनभरे ।

## नरसुन्दर्या सह नरकेसरिण आगमनम्

ततश्च शेखरपुरे नगरे नरकेसरिनरेन्द्रस्य वसुधरामहादेव्या कुक्षिसभूताऽस्ति नरसुन्दरी नाम दुहिता, सा च भुवनाऽद्भुतभूता रूपातिशयेन, निरुपमा कलामौष्ठवेन सप्राप्ता योवन, समुत्पन्नोऽस्याश्चित्तेऽभिनिवेशो, यदुत→य कलाकौशलेन मत्त समधिकतर स एव यदि परं मा परिणयति, नापर, निवेदित पित्रोर्निजाकूत, सजातमनयो पर्याकुलत्व, नास्त्येवाऽस्या कलाभि समानोऽपि भुवने पुरुष कुत पुनरधिकतर इति भावनया । तत श्रुतस्ताभ्या मदीय कलाकौशलप्रवाद । चिन्तित नरकेसरिणा→स एव रिपुदारणो यदि परमस्या समर्गलतरो भविष्यति, युज्यते च नरवाहनेन सहाऽस्माक वैवाह्य, यत प्रधानवशो महानुभावश्चासो वर्तते, तस्य च राज्ञो रत्नसूचिरिव महानागस्य निरपत्यस्य सैवैका नरसुन्दरी दुहिता । ततोऽत्यन्तमभीष्टतया तस्याश्चिन्तितमनेन→गच्छामि तत्रैव सिद्धार्थपुरे गृहीत्वा वत्सां नरसुन्दरी, तत परीक्ष्य तं रिपुदारण निकटस्थितो विवाहयाम्येना येन मे चित्तनिर्वृत्ति संपद्यते ।

## नरसुन्दर्या रिपुदारणकलापरीक्षेच्छा

तत सर्वबलेन समागतो नरकेसरी, ज्ञापितस्तातस्याऽऽगमनवृत्तान्त, परितुष्टोऽसौ, कारितमुच्छ्रितपताक नगर, प्रवेशितो महाविमर्देन नरकेसरी तातेन, दत्तमावासस्थान, भविष्यति रिपुदारणकुमारस्य नरसुन्दर्या सह कलाकौशलपरीक्षेति ज्ञापितं लोकाना, प्रशस्तदिने सज्जीकारित स्वयवरमण्डप, विरचिता मञ्चा, मीलित राजवृन्द, समुपविष्टस्तन्मध्ये सपरिकरस्तात। समाहूतोऽह कलाचार्यश्च, प्राप्तोऽहं सह मित्रत्रयेण तातसमीप, महामतिश्च सह राजदारकै । इतश्च पुण्योदयस्य

मदीयदुष्टचेष्टितानि पश्यतश्चित्तखेदेनैव सजात कृशतर शरीर, विगलित परिस्फुरण, मन्दीभूत प्रताप । ततोऽहमुपविष्टस्ताताऽभ्यर्णे कलोपाध्यायश्च, , निवेदित विनयनम्रेण नरवाहनेन महामतये नरकेसरिराजागमप्रयोजनम् । तदाकर्ण्य सजातो मे हर्षाऽतिरेक, स्थितस्तूष्णीभावेन स्वहृदयमध्ये हसन्नुपाध्याय । अत्रान्तरे समागतो नरकेसरी, परितुष्टो नरवाहन, दापित तस्मै महार्हसिहासन, उपविष्ट सपरिकरो नरकेसरी । ततस्तदनन्तर पूरयन्ती जनहृदयसरासि लावण्याऽमृतप्रवाहेण, अधरयन्ती वरबर्हिकलाप कृष्णस्निग्धकुञ्चितकेशपाशेन, प्रोद्भासयन्ती दिक्चक्रवाल वदनचन्द्रेण, विधुरयन्ती कामिजनचित्तानि लीलामन्थरेण विलासविलोकितेन, दर्शयन्ती महेभकुम्भविभ्रम पयोधरभरेण, उच्छृङ्खलयन्ती मदनवारण विस्तीर्णजघनपुलिनेन, विडम्बयन्ती सञ्चारितरक्तराजीवयुगललीला चरणयुग्मेन, उपहसन्ती कलकोकिलाकुलकूजित मन्मथोल्लापजल्पितेन, कुतूहलयन्ती वरमुनीनपि प्रवरनेपथ्याऽलङ्कारमाल्यताम्बूलाऽङ्गरागविन्यासेन, परिकरिता प्रियसखीवृन्देन अधिष्ठिता वसुधरया प्रविष्टा ॰ रसुन्दरी, । ततस्ता विलोक्याऽह हृष्ट स्वचेतसा विजृम्भित शैलराज, विलिप्त स्तब्धचित्तेन तेनाऽवलेपनेन मयाऽऽत्महृदयम् । चिन्तित च–कोऽन्यो मा विहायैना परिणेतुमर्हति ? न खलु मकरध्वजादृते रतिरन्यस्योपनीयते । अत्राऽन्तरे विहितविनया तातादीनामभिहिता नरकेसरिणा नरसुन्दरी यदुत→उपविश वत्से। मुञ्च लज्जा, पूरयाऽऽत्मीयमनोरथान्, प्रश्नय रिपुदारणकुमार कलामार्गे यत्र क्वचित्ते रोचते । ततो नरसुन्दर्या सहर्षमुपविश्याऽभिहित→यदाज्ञापयति तात, केवल गुरूणा समक्ष न युक्त ममोद्ग्राहयितु, तस्मादार्यपुत्र एवोद्ग्राहयतु सकला कला, अह पुनरेकैकस्या कलाया सारस्थानानि प्रश्नयिष्यामि, तत्राऽर्यपुत्रेण निर्वाह करणीय इति । तदाकर्ण्य हृष्टौ नरवाहननरकेसरिनरेन्द्रौ समस्त राजकुल लोकाश्च ।

## कुमारकलाकौशलविषयकभ्रमनाश

ततस्तातेनाऽभिहितोऽह–कुमार। सुन्दर मन्त्रित राजदुहित्रा, तत्साम्प्रतमुद्ग्राहयतु कुमार सकला कला, पूरयत्वस्या मनोरथान्, जनयतु ममाऽऽनन्द, निर्मलयतु कुल, गृह्णातु जयपताका, एषा सा निकषभूमिर्वर्तते विज्ञानप्रकर्षस्येति । मम तु तदा कलाना नामान्यपि विस्मृतानि । ततो विह्वलीभूतमन्त करण, प्रकम्पिता गात्रयष्टि, प्रादुर्भूता प्रस्वेदविन्दव, सजातो रोमोद्धर्ष, प्रनष्टा भारती, तरलिते लोचने । ततो हा किमेतदिति विषण्णस्तात, प्रलोकित महामतिवदनम् महामतिराह–कि कर्तव्यमादिशतु देव । तातेनाभिहित→किमितीयमीदृशी कुमारशरीरेऽवस्था? तत कर्णे निवेदित महामतिना, देव। मन क्षोभविकारोऽयमस्य । तात प्राह–कि पुनरस्य मन क्षोभनिमित्तम्? महामतिराह–देव। प्रस्तुतवस्तुन्यज्ञानम्, '*भवत्येव हि वागायुधाना सदसि विदुषा सस्पर्धमाभाषिताना ज्ञानाऽवष्टम्भविकलाना मनसि क्षोभाऽतिरेक* '। तातेनाभिहित–आर्य।कथमज्ञान कुमारस्य? ननु सकलकलासु प्रकर्षं प्राप्त कुमारो वर्तते, तत सस्मृत्य मदीयदुर्विलसित गृहीतो मनाक्क्रोधेन कलाचार्य । ततोऽभिहितमनेन→देव। प्रकर्षं प्राप्त कुमार शैलराजमृषावादप्रणीतयो केवलयो कलयोर्न पुनरन्यत्र । तात प्राह→के पुनस्ते कले? महामतिराह→दुर्विनयकरणमसत्यभाषण च, एते ते शैलराजमृषावादप्रणीते कले, अनयाश्चात्यन्त कुशल कुमार, न पुनरन्यकलाना गन्धमात्रमपि जानीते । तात प्राह→कथमिदम्? महामतिनाऽभिहित–देव। देवस्य दीर्घचित्तसन्तापभी–रूभिस्तदैव नाख्यातमिदमस्माभि, यतो लोकमार्गातीत कुमारस्य चरितमिदानीमपि देवस्य पुरतस्तत्कथयतो न प्रवर्तते मे वाणी । तातेनाभिहित→यथावृत्तकथने भवतो नास्त्यपराध, नि शङ्क कथयत्वार्य । ततो कलाचार्येणाऽवज्ञाकरणादिको वेत्रासनाऽऽरोहणगर्भो दुर्वचनतिरस्करणपर्यन्तो निवेदित समस्तोऽपि मदीयदुर्विलसितवृत्तान्त। तातेनाऽभिहित→आर्य। यद्येव ततो जानताऽपि त्वयाऽस्य कुलदूषणस्य स्वरूप किमित्ययमेवविधसभामध्ये प्रवेशित ? ननु विगोपिता वयमाकालमनेन पापेन। महामतिराह→देव। न मयाऽयमिह प्रवेशित, मद्भवनान्निर्गतस्याऽस्य द्वादश वर्षाणि वर्तन्ते, केवलमकाण्ड एव सजातमद्य मम देवकीयमाकारण, तत समागतोऽह, अय तु कुतश्चिदन्यत स्थानादिहागत इति । तातेनाभिहित–आर्य। यद्येवमपात्रचूडामणिरेष रिपुदारणो गुणानामभाजनतया वर्जितो युष्माभि तत्किमिति गर्भाधानादारभ्यास्येयन्त काल यावत्कल्याणपरम्परा सपन्ना? किमिदानीमेव लोकमध्ये विगुप्यत इति । महामतिराह→देव। अस्त्यस्य पुण्योदयो नामाऽन्तरङ्गो वयस्य, तज्जनिता प्राक्तनी कल्याणपरम्परा, तथाहि–तत्प्रभावादेवाय प्रादुर्भूत सुकुले, सपन्नो जननीजनकयोरभीष्टतम, सजातो रूपसौभाग्यसुखैश्वर्यादिभाजनम् । तात प्राह→तर्हि क्व पुनरधुना गतोऽसौ पुण्योदय ? महामतिराह न कुत्रचिद् गतोऽत्रैव प्रच्छन्नरूप आस्ते, केवल पश्यन्नस्यैव रिपुदारणस्य सम्बन्धीनि दुर्विलसितानि चित्तदु खासिकया साम्प्रत क्षीणशरीरोऽसौ तपस्वी वर्तते, न शक्नोत्यस्याऽऽपद निवारयितुमिति । तदाकर्ण्य तातो नास्त्यत्र कश्चिदुपायो, विनाटिता वयमनेन दुष्पुत्रेण महालोकमध्ये प्रसभमितिचिन्तया

राहुग्रस्तशशधरविम्बमिव कृत तातेन कृष्ण मुख, लक्षित समस्तलोके पर्यालोचनपरमार्थ, ततो विलक्षीभूतास्तातबान्धवा, विद्राणवदन सपन्न परिजन, प्रहसिता मुखमध्ये पिंखि मुञ्जलोका, विषण्णा नरसुन्दरी, विस्मितो नरकेसरिलोक। ततश्चिन्तित जनेन ताललज्जया लघुध्वनिना परस्परमुक्त च अये ।

गर्वाध्मात परं मूढो, वस्तिवद्वातपूरित । नि सारोऽपि गत ख्यातिमेष भो । रिपुदारण ॥१॥

अथवा–निरक्षरोऽपि वाचालो, लोकमध्येऽतिगौरवम् । वागाडम्बरत प्राप्तो, य स्यादन्योऽपि मानव ॥२॥

स सर्वो निकषप्राप्त, प्राप्नोत्येव विडम्बनाम् । महाहास्यकरीं मूढो, यथाऽय रिपुदारण युग्मम् ॥३॥

### कुमाराद्यवस्था

मम तु तातोपाध्यायौ कर्णोत्सारकेण परस्पर तथाजल्पन्तौ पश्यत समुत्पन्नो मनसि विकल्प –अये । बलात्कारेण मामेतो जल्पयिष्यत । ततो भयाऽतिरेकेण स्तम्भित मे गलकनाडीजाल निरुद्धश्चोच्छ्वासनि श्वासमार्ग, सजाता म्रियमाणाऽवस्था । ततो हा पुत्र! हा तात! हा तनय! किमेतदिति प्रलपन्ती वेगेनाऽऽगत्य शरीरे लग्ना ममाऽम्बा विमलमालती, पर्याकुलीभूत परिजन, कि कर्तव्यताविमूढा वसुधरा, विस्मितो नरकेसरी। तातेनाऽभिहित–गच्छत भो लोका गच्छत न पटु शरीरेणाऽद्य कुमार, पुनर्जल्पो भविष्यति । तदाकर्ण्य निर्गता वेगेन लोका, मिलिता बहिस्त्रिकचतुष्कचत्वरादिषु, अहो रिपुदारणस्य पाण्डित्यमहो पाण्डित्यमिति प्रवृत्त प्रहसन, प्रहितौ लज्जाऽवनम्रेण तातेन कलोपाध्यायनरकेसरिणौ, गत स्वाऽऽवासस्थाने नरकेसरी । चिन्तितमनेन–दृष्ट यद् द्रष्टव्य, दीयता प्रभाते प्रयाणकमिति । ममाऽपि निर्जनीभूते मन्दीभूत भय, स्वस्थीभूत शरीर, तातस्य तु हृतराज्यस्येव वज्राहतस्येव महाचिन्ताभराक्रान्तस्य लङ्घित तद्दिन, समागता रजनी, न दत्त प्रादोषिकमास्थान, निवार्य जनप्रवेश प्रसुप्त, केवल तया चिन्तयाऽपनिद्रेणैवाऽतिवाहितप्राया विभावरी।

### पुण्योदयेन दापिता कुमारी

इतश्च लज्जितो मे वयस्य पुण्योदय। चिन्तितमनेन–

यस्य जीवत एवैव, पुस स्वामी विडम्ब्यते । कि तस्य जन्मनाऽप्यत्र, जननीक्लेशकारिण ? ॥१॥

ततश्च–जातं विच्छायक तावन्ममैतदतिदु सहम् । यायात्सुतामदत्त्वैव, यद्यसौ नरकेसरी ॥२॥

ततोऽस्य सर्वथा व्यर्थं, कुमारस्य मदीयकम् । सनिधानमतो नेव, ममोपेक्षाऽत्र युज्यते ॥३॥

ततो यद्यप्ययोग्योऽयमेतस्या रिपुदारण । तथापि दापयाम्येनामस्मै कमललोचनाम् ॥४॥

अत्रान्तरे समागता तातस्य रात्रिशेषे निद्रा । ततो भद्रे अगृहीतसङ्केते! समाश्वासनार्थं तातस्य दत्त कामरूपितया स्वप्नान्तरे तेन पुण्योदयेन दर्शन, दृष्ट सुन्दराऽऽकारो धवलवर्ण पुरुष । अभिहितमनेन→महाराज! कि स्वपिषि? कि वा जागर्षि? तातेनाऽभिहितं–जागर्मि । पुरुष प्राह→यद्येव ततो मुञ्च विषाद, दापयिष्याम्यह रिपुदारणकुमाराय नरसुन्दरीमिति। तातेनाऽभिहित→महाप्रसाद । अत्रान्तरे प्रहत प्राभातिक तूर्यं, ततो विबुद्धस्तात । पठित कालनिवेदकेन ।

हीनप्रतापो य पूर्वं, गतोऽस्त जगता पुर । स एवोदयमासाद्य, रविराख्याति हे जना ॥१॥

यदा येनेह यल्लभ्य, शुभ वा यदि वाऽशुभम् । तदाऽवाप्नोति तत्सर्वं, तत्र तोषेतरौ वृथा ॥२॥

एतच्चाऽऽकर्ण्य चिन्तित तातेन यदुत–न कर्तव्यो मयाऽधुना विषाद, यतो लम्भयिष्यामि कुमार नरसुन्दरीमिति स्फुटमेव निवेदित स्वप्ने मम देवेन, अनेन तु कालनिवेदकेन पाठव्याजेन दत्तो ममोपदेशो वेधसा यदुत–य पुरुषो यावत सुन्दरस्याऽसुन्दरस्य वा वस्तुनो यदा भाजनं तस्य तावत्तदतर्कितमेव तदा मद्वशेन सपद्यत इति न कर्तव्यौ तत्र विदुषा हर्षविषादौ, ततोऽनया भावनया स्वस्थीभूतस्तात । इतश्चाऽचिन्त्यप्रभावतया पुण्योदयस्य सपादिता तेन नरकेसरिणो बुद्धि यदुत 'महानुभावोऽयं नरवाहनराज, विज्ञात च राज्यान्तरेष्वपि मम यदिहाऽऽगमनप्रयोजन ततो लज्जाकर पक्षद्वयस्याऽपि नरसुन्दरीमदत्त्वा मम स्वस्थाने गमन, अत सभाल्य कथञ्चिदेनां प्रयच्छामि रिपुदारणकुमाराय, इति । ततो निवेदितो नरकेसरिणा वसुधरासमक्ष नरसुन्दर्यै स्वाभिप्राय, ततो नरसुन्दर्या अपि पुण्योदयप्रभावादेव वलित मा प्रति मानसं, चिन्तितमनया→युक्तियुक्तमेव तातेन मन्त्रित, ततोऽभिहितमनया–'यदाज्ञापयति तात' तदाकर्ण्य हृष्टो नरकेसरी, आगत्याऽभिहितोऽनेन नरवाहन, महाराज! किमत्र बहुना जल्पितेन ? आगतैवेय वत्सा नरसुन्दरी कुमारस्य स्वयवरा, तदत्र किम्बहुना विकत्थनेन? केवल दुर्जनवचनाऽवकाशो भवति, अतो निर्विचार ग्राह्यता कुमारेण स्वपाणिना पाणिरस्या । तातेनाभिहित–एव क्रियते,

गणित प्रशस्तदिन, परिणीता मया महता विमर्देन नरसुन्दरी, ता विमुच्य गत स्वस्थाने नरकेसरी ।

## परस्परप्रेमविभेदनार्थं मृषावादशैलेशकृतप्रयत्न

दत्तो मह्य तातेन निर्व्यग्रभोगार्थं महाप्रासाद, गतानि नरसुन्दर्या सह ललमानस्य मे कतिचिद्दिनानि, घटित च पुण्योदयेन निरन्तरमावयो प्रेम, समुत्पादितश्चित्तविश्रम्भ, लगिता मैत्री, जनितो मनोरतिप्रबन्ध, प्ररोहित प्रणय, वर्धित श्चित्तमीलकाह्लादप्रणयसागर सर्वथा ।

स्वप्रभामिव तीक्ष्णाशुश्चन्द्रिकामिव चन्द्रमा । क्षणमेक न मुञ्चामि, तामुमामिव शङ्कर ॥१॥
साऽपि मामकवक्त्राब्जरसाऽऽस्वादनतत्परा । भ्रमरीव गत काल, न जानाति तपस्विनी ॥२॥
ततस्त तादृशं वीक्ष्य, देवानामपि दुर्लभम् । सार्धं मे नरसुन्दर्या, प्रेमाबन्ध मनोहरम् ॥३॥
मदीयौ सुहृदाभासौ, परमार्थेन वैरिकौ । तौ मृषावादशैलेशौ, चित्तमध्ये रुष गतौ [युग्मम्] ॥४॥
चिन्तित च ततस्ताभ्या, कथमेष वियोक्ष्यते । एतया नरसुन्दर्या, पापात्मा रिपुदारण ? ॥५॥
शैलराजो मृषावाद, ततश्चेत्थमभाषत । त्व तावन्नरसुन्दर्या, कुरु चित्तविरञ्जनम् ॥६॥
स्वयमेवाहमत्राऽर्थे, भलिष्यामि तत परम् । मादृशा च कृते यत्ने, कीदृश प्रेमबन्धनम् ? ॥७॥
मृषावादस्तत प्राह, नोत्साह्योऽह भवादृशा । कृतमेव मया पश्य, एतस्याश्चित्तभेदनम् ॥८॥
तदेव मद्वियोगार्थं, ततस्तौ कृतनिश्चयौ । शैलराजमृषावादौ, पर्यालोच्य व्यवस्थितौ ॥९॥
अह तु ता समासाद्य, सद्भार्यां नरसुन्दरीम् । चिन्तयामि त्रिलोकेऽपि, प्राप्त यत्सुन्दर मया ॥10॥
ततश्चोन्नामितैकभ्रूर्मन्थरीकृतलोचन । दत्त्वा तच्छैलराजीय, हृदये स्वेऽवलेपनम् ॥११॥
चिन्तयामि न लोकेऽत्र, पुरुषोऽन्योऽस्ति मादृश । यतो ममेदृशी भार्या, ततो गाढतर पुन ॥१२॥
न पश्यामि गुरूनैव[गुरु मु] देवान्नो बन्धुसन्ततिम्। न भृत्यवर्गं नो लोक, न जगत् सचराचरम् [त्रिभिर्विशेषकम्] ॥१३॥
अथ तत्तादृश दृष्ट्वा, मदीय दुष्टचेष्टितम् । पुण्योदयो मनस्तापाद्गाढ जातोऽतिदुर्बल ॥१४॥
ततो मा तादृश वीक्ष्य, विरक्ता सर्वबान्धवा । इद जल्पितुमारब्धा, हसन्तस्ते परस्परम् ॥१५॥
पश्यताऽहो विधे कीदृगस्थानविनियोजनम्? । स्त्रीरत्नमीदृश येन, मूर्खेणाऽनेन योजितम् ॥१६॥
स्तब्धोऽभून्मूर्खभावेन, प्रागेष रिपुदारण । आसाद्येमां पुनर्भार्यां, गर्वेणाऽन्धोऽधुना ह्ययम् ॥१७॥
स एव वर्तते न्यायो, लोके य किल [1]श्रूयते। *एक स वानरस्तावद्दष्टोऽन्यद्वृषणे[2]ऽलिना[3]* ॥१८॥
तदेषा चारुसर्वाङ्गी, सद्भार्या नरसुन्दरी । करिणीव खरस्योच्चैर्न योग्याऽस्य मृगेक्षणा ॥१९॥

## प्रेमपरीक्षार्थं सुन्दरीकृतप्रश्ने मृषोत्तरम्

अन्यदा नरसुन्दर्या, सद्भावाऽर्पितचित्तया । स्नेहगर्भपरीक्षार्थं, चिन्तित निजमानसे ॥20॥
कि ममाऽर्पितसद्भाव ? कि वा नो रिपुदारण ? । आ ज्ञात स्नेहसर्वस्व, गुह्याऽऽख्यानेन गम्यते ॥२१॥
अनाख्येयमत किञ्चिद्, गुह्यसर्वस्वमञ्जसा । पृच्छाम्येन दृढस्नेहे, ततो व्यक्तिर्भविष्यति ॥२२॥

[ततश्चिन्तितं नरसुन्दर्या]–कीदृश पुनरह गुह्यमधुनाऽऽर्यपुत्र पृच्छामि ? हु ज्ञात तावत्सुनिश्चितमिदं मया यदुत–नितरा कमनीयशरीरोऽपि रक्ताऽशोकपादपवदेष निखिलकलाकलापकौशलफलविकल एवाऽऽर्यपुत्र, यतो विज्ञानाऽभावजनिताद्व्रयातिरे–कादेव तथाविधोऽस्य तदा सभामध्ये मन क्षोभोऽभूत्, तदधुना तदेव मन क्षोभकारणमार्यपुत्र प्रश्नयामि, ततो यदि स्फुटमाचक्षीत विज्ञास्यामि यथाऽस्ति मया सहाऽस्य स्नेहसद्भाव, अथ न कथयेत्ततस्तत्राप्यभिप्राय लक्षयिष्यामीति विचिन्त्य पृष्टोऽह नरसुन्दर्या यदुत–›आर्यपुत्र। कीदृश तव तदा सभामध्ये शरीराऽपाटवमासीदिति । अत्राऽन्तरे ज्ञाताऽवसरेण प्रयुक्ता मृषावादेनाऽऽत्मीया योगशक्ति, कृतमन्तर्धान, प्रविष्टो मदीयमुखे । ततोऽभिहित मया–›प्रियतमे । त्वया पुनस्तदा कीदृश लक्षितम् ? नरसुन्दरी प्राह–न मया किञ्चित्तदा सम्यग् विज्ञातं, केवल समुत्पन्ना शङ्का–कि सत्यमेव शरीराऽपाटवमार्यपुत्रस्य? कि वा कलाकलापे न कौशलमिति ? मयाऽभिहित–›सुन्दरि। न तत्रैकोऽपि विकल्प कर्तव्य यतस्तरन्ति हृदये मम सकला. कला, शरीराऽपाटवमपि मम न किञ्चित्तदाऽऽसीत्, केवलमम्बया तातेन चालीकमोहात् कृतो मुधैव बहल कलकल,

---

1 गीयते प्र । 2 = मुष्के । 3 = वृश्चिकेन ।

तथाविधाऽलीककलकले च स्थिरतया स्थितोऽह मौनेन । एतच्चाऽऽकर्ण्य नरसुन्दर्या सजातो मनसि व्यलीकभाव। चिन्तितमनया→अहो अस्य प्रत्यक्षाऽपलापित्व, निर्लज्जता, अहो धृष्टता, अहो आत्मवहुमानिता । ततोऽभिहित नरसुन्दर्या→आर्यपुत्र। यद्येव ततो महत्कुतूहल मम इदानीमप्यहमार्यपुत्रेण कलास्वरूपमुत्कीर्त्यमान श्रोतुमिच्छामि, अतो महता प्रसादेन समुत्कीर्तयतु तदार्यपुत्र ।

## परिभवबुद्ध्या निष्काशने सुन्दर्यवस्था

मया चिन्तित→अये। पाण्डित्याऽभिमानेन परिभववुद्ध्या मामुपहसत्येपा । अत्राऽन्तरे लब्धावसरो विजृम्भित शैलराज, विलिप्त तेन स्तब्धचित्ताभिधानेनात्मीयविलेपनेन स्वहस्तेन मद्धृदय, ततश्चिन्तित मया→एव या मम परिभवेनोपहासकारिणी, खल्वेषा पापा नरसुन्दरी, तया किमिह स्थितया? ततो मयाऽभिहित→अपसर पापे। दृष्टिमार्गादपसर, तूर्णं निर्गच्छ मदीयभवनात्, न युक्त भवादृश्या पण्डितमन्याया मूर्खेणाऽनेन जनेन सहावस्थातुमिति । ततोऽवलोकित मदीयवदन नरसुन्दर्या। चिन्तितमनया→हा धिक्। सद्भावीभूत एवाऽय वशीकृतो मानभटेन, न गोचर साम्प्रत प्रसादनाया, ततो मन्त्राहतेव भुजङ्गवनिता, समुन्मूलितेव वनलतिका, उत्खोटितेव चूतमञ्जरी, अङ्कुशकृष्टेव करिणिका सर्वथा विद्राणदीनवदना साध्वसभारनिर्भर हृदयमुद्वहन्ती मन्द मन्द क्वणन्मणिमेखलाकिङ्किणीकलकोलाहलनूपुरझणझणारावसमाकृष्टस्नानवापिकाकलहसिकानि पदानि निक्षिपन्ती चलिता नरसुन्दरी, निर्गता मामकीनसदनात्, प्राप्ता तातीयभवने, स्थितोऽह शैलस्तम्भनया यावदद्यापि न शुष्यति शैलराजीय तद्वक्षःस्थ—लावलेपन तावती वेला, शोपमुपागते मनाक् पुनस्तत्राऽवलेपने सजातो मे पश्चात्ताप, बाधते नरसुन्दरीस्नेहमोह, समाध्यासितोऽहमरत्या, गृहीतो रणरणकेन, अङ्गीकृत शून्यतया, उररीकृतो विह्वलतया, प्रतिपन्नो विकारकोटिभि, अवष्टब्धो मदनज्वरेण ।

## विमलमालतीदर्शितनरसुन्दरीपरिस्थिति

ततो निषण्ण शयनीये, तत्रापि प्रवर्धमानया जृम्भिकयाऽनवरतमुद्वर्तमानेनाऽङ्गेन मत्स्यक इव खादिराङ्गारराशिमध्ये दन्दह्यमान स्तोकवेलाया यावत्तिष्ठामि तावदागता सविषादमम्वा विमलमालती । ततस्ता वीक्ष्य कृत मयाऽऽकारसवरण, निषण्णा भद्रासने स्वयमेवाम्वा, स्थितोऽह पर्यङ्क एवोपविष्ट । अभिहितमम्वया→वत्स। न सुन्दरमनुष्ठित भवता यदसौ तपस्विनी नरसुन्दरी परुषवचनैस्तथा तिरस्कृता, तथाहि—यदितो गतायास्तस्या सपन्न तत्समाकर्णयतु वत्स । मयाऽभिहित→उच्यता यत्ते रोचते । अम्वयाऽभिहित→अस्ति तावदितो निर्गता नयनसलिलधाराधोतगण्डलेखा दीनमनस्का दृष्टा सा मया नरसुन्दरी पतिता रुदन्ती मम पादयो । मयाऽभिहिता→हले। नरसुन्दरि। किमेतत्? तयाऽभिहित→अम्व। दाहज्वरो मा बाधते, ततो नीता मया सा वातप्रदेशे, सज्जीकारित शयनीय, तत्र च स्थापिता सा, निषण्णाऽह पार्श्वे, तत प्रहतेव महामुद्गरेण, प्लुष्यमाणेव तीव्राऽग्निना, खाद्यमानेव वनपञ्चाननेन, ग्रस्यमानेव महामकरेण, अवष्टभ्यमानेव महापर्वतेन, उत्कर्त्यमानेव कृतान्तकर्तिकया, पाट्यमानेव क्रकचपाटेन, पच्यमानेव नरके प्रतिक्षणमुद्वर्त्तपरावर्तं कर्तुमारब्धा । मयाऽभिहित हले। किनिमित्तक पुनस्तवाऽयमेवविधो दाहज्वर ? ततो दीर्घदीर्घं निःश्वस्य न किञ्चिज्जल्पितमनया । मया चिन्तित—मानसीयमस्या पीडा, कथमन्यथा ममाऽपि न कथयेत्? कृतो मया निर्वन्ध, कथित कृच्छ्रेण नरसुन्दर्या यथावृत्त, ततो नियुज्य तस्या शीतक्रियाकरणे कन्दलिका मयाऽभिहिता सा नरसुन्दरी, यदुत—वत्से। यद्येव ततो धीरा भव, मुञ्च विषाद, अवलम्वस्व साहस, गच्छाम्यह स्वयमेव वत्सस्य रिपुदारणस्य समीपे, करोमि त तवाऽनुकूल, केवल कि न विज्ञात पूर्वमेव त्वयेद यथा—नितरा मानधनेश्वरो मदीयस्तनय, न विषय प्रतिकूलभाषणस्य, तदिदानीमपि विज्ञातमाहात्म्ययाऽस्य त्वया न कदाचिदपि प्रतिकूलमाचरणीय, यावज्जीव परमात्मेवाऽयमाराधनीय। ततश्चेद मदीयवचनमाकर्ण्य सा वाला नरसुन्दरी विकसितेव कमलिनी, कुसुमितेव कुन्दलता, परिपाकवन्धुरेव मञ्जरी, मदसुन्दरेव करिणिका, जलसेकाप्यायितेव वल्लरी, पीतामृतरसेव नागप्रणयिनी, गतघनवन्धनेव चन्द्रलेखिका, सहचरमीलितेव चक्रवाकिका, क्षिप्तेव सुखामृतसागरे सर्वथा किमप्यनाख्येय रसान्तरमनुभवन्ती शयनादुत्थाय निपतिता गाढ मम चरणयो । अभिहितमनया→अम्व। महाप्रसाद, अनुगृहीताऽस्मि मन्दभाग्याऽहमनेन वचनेनाऽम्वया, तद्गच्छतु शीघ्रमम्वा, करोतु ममानुकूलमेकवारमार्यपुत्र, ततो यदि पुनरय जनस्तस्य प्रतिकूले वर्तमान स्वप्नेऽपि विज्ञात स्यादम्वया ततो यावज्जीव न सभाषणयो, नापि द्रष्टव्य पापात्मेति । मयाऽभिहित—यद्येव—तर्हि[ततो मु] गच्छामि । नरसुन्दरी प्राह—अम्व। महाप्रसाद । तत समागताऽहमेषा वत्सस्य समीपे, तदयमत्र वत्स। परमार्थ→

सा तु दन्दह्यते बाला, विदित्वा प्रतिकूलताम् । तवाऽनुकूलता मत्वा, प्रमोदमवगाहते ॥१॥
वल्लभेय कुमारस्य, श्रुत्वेदममृतायते । अनिष्टेयं कुमारस्य, श्रुत्वेद नारकायते ॥२॥
त्वदीयरोषनाम्नाऽपि, म्रियते सा तपस्विनी । सन्तोषमात्रनाम्नाऽपि, तावकीनेन जीवति ॥३॥
अतो यन्मुग्धया किञ्चिदपराद्ध तया तव । बालया प्रणयात्सर्वं, तद्वत्स क्षन्तुमर्हति ॥४॥
प्रणतेषु दयावन्तो, दीनाभ्युद्धरणे रता । सस्नेहाऽर्पितचित्तेषु, दत्तप्राणा हि साधव ॥५॥

### मातुस्तिरस्कार.

ततश्चेदमम्बया नरसुन्दरीस्नेहसर्वस्वमुत्कीर्त्यमानमाकर्ण्य यावत्किलाह स्नेहनिर्भरतया ता प्रति प्रगुणो भवामि तावच्छैलराजेन विरचिता कुटिलभ्रुकुटिर्धूनितमुत्तमाङ्गं, दत्तो मदीयहृदये विलेपनचर्च, ततस्तस्या· सम्वन्धिनमपराध सस्मृत्य जातो मम पुनश्चित्तावष्टम्भ। ततोऽभिहिता मयाऽम्बा यदुत→न कार्यं मम तया परिभवकारिण्या पापयेति। अम्बयाऽभिहित—वत्स। मा मेव वोच, क्षन्तव्यो मम लग्नाया वत्सेन तदीयोऽयमेको गुरुरप्यपराध। तत पतिता मच्चरणयोरम्बा। मयाऽभिहित→अपसर त्वमप्यवस्तुनिर्वन्धपरे। मम दृष्टिपथादपसर, न प्रयोजन त्वयाऽपि मे, या त्व मया निःसारिता ता दुरात्मिका सगृह्णासि, ततश्चरणाभ्या प्रेरिता मयाऽम्वा । ततो भद्रेऽगृहीतसङ्केते। शैलराजवशवर्तिना मया पापात्मना तथा तिरस्कृता सती लक्षयित्वा मदीयमनिवर्तकमाग्रहविशेष निराशा मुञ्चन्ती नयनसलिल यथाऽऽगतमेव प्रतिगताऽम्बा । निवेदितो नरसुन्दर्यै व्यतिकर, तमाकर्ण्य वज्रनिर्दलतेव मूर्च्छया निपतिताऽसौ भूतले, सिक्ता चन्दनरसेन, समाश्वासिता तालवृन्तवायुना लब्धचेतना रोदितुमारब्धा ।

### प्रियतमप्रसादनार्थ नरसुन्दरीकृतप्रयत्न

विमलमालत्याऽभिहित→पुत्रि । किं क्रियते ? वज्रमयहृदयोऽसौ ते भर्ता, तथापि मा सदिहि, मुञ्च विषाद, साहसाऽवष्टम्भेन कुरु तावदेक त्वमुपाय, गच्छ स्वयमेव प्रियतमप्रसादनार्थं, तत स्वय गताया प्रत्यागतहृदय कदाचित्प्रसीदत्यसौ । यतो *'मार्दवाध्यासितानि कामिहृदयानि भवन्ति'*, अथ तथापि कृते न प्रसीदेत्तत पश्चात्तापो न भविष्यति, यत *'सुपरिणामिते वल्लभके किलावरक्तको न भवति'* इति लोकवार्ता। नरसुन्दरी प्राह—यदाज्ञापयत्यम्वा, ततश्चलिता सा मम तोषणार्थं, किमस्यास्तत्र गताया सपद्यत इतिविमर्शेन लग्ना तदनुमार्गेणाऽम्वा, प्राप्ता मम पार्श्वे नरसुन्दरी, स्थिता द्वारदेशे विमलमालती। नरसुन्दर्याऽभिहित→

नाथ। कान्त। प्रिय। स्वामिन्। जीवदायक। वल्लभ। । प्रसीद मन्दभाग्याया, प्रसीद नतवत्सल । ॥१॥
न पुनस्ते मनोदुःख, करिष्येऽह कदाचन । त्वा विना शरण नाथ । नास्ति मे भुवनत्रये ॥२॥
एव च वदन्ती बाष्पोदकविन्दुवर्षिणा लोललोचनयुगले स्नपयन्ती मदीयचरणद्वय प्रणता नरसुन्दरी । मम तु ता तादृशी पश्यतस्तदा कीदृश हृदय सपन्नम्? ।

### शैलराजप्रभावेन कुमारकृतभर्त्सना

अपि च—स्नेहेन नरसुन्दर्या, भवत्युत्पलकोमलम् । वीक्षित शैलराजेन, शिलासङ्घातनिष्ठुरम् ॥१॥
नवनीतमिवाभाति, यावच्चिन्तयति प्रियाम् । वज्राकार पुनर्भाति, शैलराजवशीकृतम् ॥२॥
ततो दोला समारूढ तदा मामकमानसम् । निश्चेतु नैव शक्नोमि, किमत्र मम सुन्दरम्? ॥३॥
तथापि मोहदोषेण, मया दीनाऽपि वालिका । शैलराज प्रिय कृत्वा, भर्त्सिता नरसुन्दरी ॥४॥
कथम्—आ पापे। गच्छ गच्छेति, वागाडम्वरमायया । न प्रतारयितु शक्यस्त्वयाऽय रिपुदारण ॥५॥
कुशलाऽपि कलासूचैरन्येषा यदि वञ्चनम् । कर्तुं शक्ताऽपि नो जातु, मूर्खाणामपि मादृशाम् ॥६॥
यदाऽह हसनस्थान, सजातस्त्वादृशामपि । तदा किं ते प्रलापेन ? कीदृशी मम नाथता ? ॥७॥
इत्युक्त्वा स्तब्धसर्वाङ्ग, शून्याऽरण्ये मुनिर्यथा । स्थितोऽह मौनमालम्ब्य शैलराजेन चोदित ॥८॥

तत सा वराकी नरसुन्दरी विगलितविद्येवाऽम्वरचारिणी, परिभ्रष्टसमाधिसामर्थ्येव योगिनी, तप्तस्थलनिक्षिप्तेव शफरिका, अवाप्तनष्टरत्ननिधानेव मूषिका, सर्वथा त्रुटिताशापाशवन्धना, निपतिता महाशोकभरसागरे चिन्तयितुं प्रवृत्ता—किमिदानी सर्वथा प्रियतमतिरस्कृताया मम जीवितेनेति ।

## नरसुन्दरीविमलमालतीकृतात्महत्या कुमारस्य निष्ठुरता च

ततो निर्गत्य भवनात् क्वचिद् गन्तुमारब्धा । तत किमिय करोतीति विचिन्त्य सहित एव शैलराजेनाऽलक्षितपादपात लग्नोऽह तदनुमार्गेण ।

इतश्च–लोकयन्निव निर्विण्णो, मदीय दुष्टचेष्टितम् । अत्रान्तरे गतोऽन्यत्र, तदा क्षेत्रे दिवाकर ॥१॥

तत समुल्लसितमन्धकार, सजाता विरलजनसञ्चारा राजमार्गा, ततो गता सेकत्र शून्यगृहे नरसुन्दरी । इतश्चोद्गन्तु प्रवृत्त शशधर, ततो मन्दमन्दप्रकाशे तामेव निरीक्षमाण प्राप्तोऽहमपि तद्द्वारदेशे, स्थितो गोपायितेनाऽऽत्मना । ततो नरसुन्दर्या विलोकित दिक्चक्रवाल, इष्टकास्थलमारुह्योत्तरीयेण बद्धो मध्यवलये पाशक , निर्मिता तत्र शिरोधरा ततोऽभिहितमनया–भो भो लोकपाला। शृणुत यूय, अथवा प्रत्यक्षमेवेद दिव्यज्ञानिना तत्रभवता, यदुत–लब्धप्रसरतया नाथवादेन कलोपन्यास कारितो मयाऽऽर्यपुत्रो न परिभवबुद्ध्या, तस्य तु तदेव मानपर्वतारोहकारण सपन्न, एव च सर्वथा निराकृताऽह तेन मन्दभाग्या । अत्राऽन्तरे मया चिन्तित→नास्यारतपरिखन्या ममोपरि परिभवबुद्धि, कि तर्हि ? प्रणयमात्रमेवाऽत्राऽपराध्यति, ततो न सुन्दरमनुष्ठित मया, अधुनाऽपि वारयाम्येनामितोऽध्यवसायादिति विचिन्त्य पाशकच्छेदार्थं यावच्चलामि तावदभिहित नरसुन्दर्या, यदुत–तत्प्रतीच्छत भगवन्तो लोकपाला साम्प्रत मदीयप्राणान्, मा च मम जन्मान्तरेष्वपि पुनरेवविधव्यतिकरो भूयादिति । तत शैलराजेनाऽभिहित→कुमार। पश्य जन्मान्तरेऽपि त्वदीयसम्बन्धमेषा नाभिलषति। मया चिन्तित→सत्यमिद, तथाहि→इय प्रस्तुतव्यतिकरनिषेधमाशास्ते मदीयव्यतिकरश्चाऽत्र प्रस्तुत , तन्म्रियता, किमनया मम पापया? ततो लब्धप्रसरेण दत्तो मम हृदये शैलराजेन स्वविलेपनहस्तक , स्थितोऽह तस्य माहात्म्येन ता प्रति काष्ठवन्निष्ठिताऽर्थ। तत प्रवाहितो नरसुन्दर्यात्मा, पूरित पाशक , लम्बितु प्रवृत्ता, निर्गते नयने, निरुद्ध श्वासमार्ग , वक्रीकृता ग्रीवा, आकृष्ट धमनीजाल, शिथिलितान्यङ्गानि, समसमायित श्रोतोभि , निर्वादित वक्त्रकुहर, विमुक्ता च सा प्राणैर्वराकी। इतश्च भवनान्निर्गच्छन्ती दृष्टाऽम्बया नरसुन्दरी, अह तु तदनुयायी । चिन्तितमनया–नून भग्नप्रणयेय रुष्टा क्वचिद् गच्छति मे वधू , अय पुनरस्या एव प्रसादनार्थं पृष्ठतो लग्नो मम पुत्रक । ततो दूर गतयोरावयोरनुमार्गेणाऽऽगच्छन्ती समागताऽम्बापि तत्र शून्यगृहे । दृष्टा तथा लम्बमाना नरसुन्दरी । चिन्तितमम्बया→हा हा हताऽस्मि, नून मत्पुत्रकस्याऽपीय वार्ता, कथमन्यथाऽस्यामेव व्यवस्थिताया स तूष्णीमासीत्? मया तु शैलराजीयावलेपनदोषेणेव अवस्तुनिर्बन्धपरेयमिति कृता तदवधीरणा । तत शोकभरान्धया मम पश्यत एव तथैव व्यापादितोऽम्बयाऽप्यात्मा । तत साध्वससन्तापेनैव शुष्क मनाङ् मे स्तब्धचित्ताभिधान तत्तदा हृदयावलेपन गृहीतोऽह पश्चात्तापेनाक्रान्त शोकभरेण ।

तत स्वाभाविकस्नेहविह्वलीभूतमानस । क्षण विधातुमारब्ध , प्रलापमतिदारुणम् ॥१॥

तथाऽप्यतिप्रौढतया निजमाहात्म्येन कृत एव मे शैलराजेन चित्तावष्टम्भ , चिन्तित च मया→अये । मनुष्य। कथ स्त्रीविनाशे रोदिषीति, तत स्थितोऽह तूष्णीभावेन । इतश्च कन्दलिकया चिन्तित–किमिति स्वामिनी नागच्छति ? तद्गच्छाम्यहं तदन्वेषणार्थं, तत कुतश्चिन्निश्चित्य प्राप्ता साऽपि त प्रदेश, ततो दृष्ट्वा विमलमालतीनरसुन्दर्यो तथा लम्बमाने, कृतस्तया हाहारव , मिलित सतात नगर, समुच्छलित कोलाहल , किमेतदिति पृष्टा कन्दलिका, निवेदित तया सर्वं यथावृत्तम्।

## राजकृतनिष्काशन जननिन्दा च

अत्रान्तरे सपन्न स्फुटतरचन्द्रालोक , ततो दृष्टे तथैवोल्लम्बमाने सर्वलोकेनाम्बानरसुन्दर्यो । विलोकितोऽहमपि स्वकर्मत्रस्ततया भग्नगतिप्रसरो नष्टवाणीकस्तत्रेव लीनो वर्तमानश्छन्नप्रदेशे, जात सप्रत्यय , धिक्कारितोऽह जनेन, कारित तातेनाऽम्बानरसुन्दर्योर्मृतककार्यम् ।

ततस्तत्तादृश वीक्ष्य, मदीय कर्म दारुणम् । तात शोकभराऽऽक्रान्तस्तदैव चिन्तयत्यलम् ॥१॥
अहोऽनर्थपुञ्जोऽयमहो मे कुलदूषण । अहो सर्वजघन्योऽयमहो पापिष्ठशेखर ॥२॥
अहो सर्वापदा मूलमहो लोकपथाऽतिग । अहो वैरिकसङ्काशो, ममाऽय रिपुदारण ॥३॥
न कार्यं मे ततोऽनेन, पुत्रेणाऽपि दुरात्मना । एव विचिन्त्य तातेन, कृतश्चित्ते विनिश्चय ॥४॥
ततोऽवधीरितस्तेन, भवनाच्च बहिष्कृत । भ्रष्टश्रीक पुरे तत्र, विचरामि सुदु खित ॥५॥
स्वदुष्टचेष्टितेनैव, बालानामपि सर्वथा । गम्यश्चाह तदा जातस्ततश्चैव विगर्हित ॥६॥

पापोऽय दुष्टचेष्टोऽयमद्रष्टव्यो विमूढधी । कुलकण्टकभूतोऽय, सर्वथा विषपुञ्जक ॥७॥
मानाऽवलेपनाद् येन, कलाचार्योऽपकर्णित । मूर्खचूडामणित्वेऽपि, पाण्डित्य च प्रकाशितम् ॥८॥
माता च प्रियभार्या च, येन मानेन मारिता । को वा निरीक्षते पाप, तमेन रिपुदारणम् ? ॥९॥
उक्तमेवेदस्माभिर्नोचिताऽस्य दुरात्मन । सा कलाकौशलादीना, खानिर्या नरसुन्दरी ॥10॥
ततश्च–वियुक्तो नरसुन्दर्या, यदय तच्च सुन्दरम् । कि तु सा पद्मपत्राक्षी, यन्मृता तन्न सुन्दरम् ॥११॥
अह पुनर्महामोहलुप्तज्ञान स्वचेतसा । तदाऽपि चिन्तयाम्येव, भद्रे! विमललोचने ! ॥१२॥
त्यक्तस्याऽपीह तातेन, निन्दितस्याऽपि दुर्जनै । शैलराजमृषावादौ, तथापि मम बान्धवौ ॥१३॥
अनयोर्हि प्रसादेन, भुक्तपूर्वं मया फलम् । भोक्ष्ये च कालमासाद्य, पुनर्नास्त्यत्र सशय ॥१४॥
ततश्चैव जनेनोच्चैर्निन्द्यमान क्षणे क्षणे । स्थितोऽह भूरिवर्षाणि, दु खसागरमध्यग ॥१५॥
इतश्च–अत्यन्तदुर्बलीभूत, सकोपो मयि निस्फुर । स तु पुण्योदयो भद्रे! स्थितोऽकिञ्चित्करस्तदा ॥१६॥

### विचक्षणसूरिणा सह समागम

अथाऽन्यदा क्वचिद्राजा, वाहनार्थं सुवाजिनाम् । वेष्टितो राजवृन्देन, निर्गतो नगराद्बहि ॥१७॥
तत कुतूहलाकृष्ट, सर्वो नागरको जन । तत्रैव निर्गतोऽह च, सप्राप्तस्तस्य मध्यग ॥१८॥
अथ वाल्हीककाम्बोजतुरुष्कवरवाजिन । वाहयित्वा भृश राजा, राजलोकविलोकित ॥१९॥
तत खेदविनोदार्थमुद्यान सुमनोहरम् । प्रविष्ट सह लोकेन, ललित नाम शीतलम् ॥20॥
तच्च कीदृशम्? –अशोकनागपुन्नागतालहिन्तालराजितम् । प्रियङ्गुचम्पकाङ्कोल्लकदलीवनसुन्दरम् ॥२१॥
केतकीकुसुमामोदहृष्टालिकुलमालितम् । समस्तगुणसपूर्णं, सर्वथा नन्दनोपमम् [युग्मम्] ॥२२॥
तत्रैकदेशे विश्रम्य, स राजा नरवाहन । उत्थाय सह सामन्तैर्लीलया हृष्टमानस ॥२३॥
प्रलोकयितुमारब्ध, कोतुकेन वनश्रियम् । विस्फारितेन नीलाब्जचारुणा लोलचक्षुषा ॥२४॥
तत्र च–सत्कान्तियुक्तनक्षत्रग्रहसङ्घातवेष्टितम् । प्रकाशितदिगाभोग, साक्षादिव निशाकरम् ॥२५॥
रक्ताशोकतरुस्तोमपरिवारितविग्रहम् । यथेष्टफलद साक्षाज्जङ्गम कल्पपादपम् ॥२६॥
उन्नत विबुधावास, कुलशैलविवेष्टितम् । हेमावदात सुखद, सुमेरुमिव गत्वरम् ॥२७॥
कुवादिमत्तमातङ्गमदनिर्णाशकारणम् । वृत सत्करिवृन्देन, निर्मद गन्धवारणम् ॥२८॥
अथ साधूचिते देशे, रक्ताशोकतलस्थितम् । सत्साधुसङ्घमध्यस्थ, कुर्वाणं धर्मदेशनाम् ॥२९॥
शुभार्पित यथा धन्यो, निधानं रत्नपूरितम् । विचक्षणाख्यमाचार्यं, स नरेन्द्रो व्यलोकयत् [षड्भिःकुलकम्] ॥30॥
अथ त तादृश वीक्ष्य, सूरि निर्मलमानस । नरवाहनराजेन्द्र पर हर्षमुपागत ॥३१॥
ततश्चित्ते कृत तेन, नून नास्ति जगत्त्रये । ईदृश नरमाणिक्य, यादृशोऽय तपोधन ॥३२॥
निर्जिताऽमरसौन्दर्या, निवेदयति वीक्षिता । अमुष्याऽऽकृतिरेवोच्चैर्गुणसम्भारगौरवम् ॥३३॥
तदीदृशस्य कि नाम, भवेद्वैराग्यकारणम्? । येन यौवनसस्थेन, खण्डितो मकरध्वज ॥३४॥
अथवा–गत्वा प्रणम्य पादाब्ज, स्वयमेव महात्मन । तत पृच्छामि पूतात्मा, भवनिर्वेदकारणम् ॥३५॥
एव विचिन्त्य गत्वाऽसौ, नत्वा सूरे क्रमद्वयम् । दत्ताशीस्तेन हृष्टाऽऽत्मा, निषण्ण शुद्धभूतले ॥३६॥
ततस्तदनुमार्गेण, राजवृन्द तथा पुरम् । उपविष्ट यथास्थान, नत्वाऽऽचार्याऽङ्घ्रिपङ्कजम् ॥३७॥
मया तु भद्रे! पापेन, शैलराजवशात्मना । न नत तादृशस्याऽपि, तदा सूरे क्रमद्वयम् ॥३८॥
पाषाणभृतमुक्तोलीसन्निभो लोकपूरण । केवल स्तब्धसर्वाङ्गो, निषण्णोऽह भुवस्तले ॥३९॥
अथ गम्भीरघोषेण, मेघवन्नीरपूरित । धर्ममाख्यातुमारब्ध, स आचार्यो विचक्षण ॥40॥

### सिद्धान्तसेवाया देशना

अभिहित च तेन भगवता यदुत भो भो भव्या! प्रदीप्तभवनोदरकल्पोऽय ससारविस्तारो, निवास शारीरा: न युक्त इह विदुष प्रमाद, अतिदुर्लभेय मानुषाऽवस्था, प्रधान [illegible] साधन, परिणामकटवो विषया,

सत्सङ्गतानि, पातभ्यातुरमविज्ञातपातमायु, तदेव व्यवस्थिते विध्यापनेऽस्य ससारप्रदीपनकस्य यत्न कर्तव्य, तस्य च हेतु सिद्धान्तवासनासारो धर्ममेघ, अत स्वीकर्तव्य सिद्धान्त, सम्यक् सेवितव्यास्तदभिज्ञा, भावनीय, मुण्डमालिकोपमान, त्यक्तव्या खल्वसदपेक्षा, भवितव्यमाज्ञाप्रधानेन, उपादेय प्रणिधान, पोषणीय सत्साधुसेवया, रक्षणीय प्रवचनमालिन्यम्। एतच्च विधिप्रवृत्त सपादयति, अत सर्वत्र विधिना प्रवर्तितव्य सूत्रानुसारेण, प्रत्यभिज्ञातव्यमात्मस्वरूप, प्रवृत्तावपेक्षितव्यानि निमित्तानि, यतितव्यमसपन्नयोगेषु, लक्षयितव्या विस्रोतसिका, प्रतिविधेयमनागतमस्या, भवत्येव प्रवर्तमानाना सोपक्रमकर्मविलय, विच्छिद्यते निरुपक्रमकर्माऽनुबन्ध, तस्मादत्रैव यतध्व यूयम्' इति एव च निवेदिते तेन भगवता विचक्षणसूरिणाऽस्या परिषदो मध्ये केषाञ्चिद् भव्यानामुल्लसितश्चरणपरिणाम, अपरेषा सजातो देशविरतिक्षयोपशम, अन्यै पुनर्विदलित मिथ्यात्व, अपरेषा प्रतनूभूता रागादय, केषाञ्चित्सपन्नो भद्रकभाव । ततो निपतितास्ते सर्वेऽपि भगवच्चरणयो, अभिहितमेते –'इच्छामोऽनुशास्ति, कुर्मो यदाज्ञापयन्ति नाथा' ।

### सूरिप्रारब्धस्ववैराग्यकारणभूतात्मव्यतिकरकथनम्

अत्रान्तरे चिन्तित तातेन–यदुत–प्रश्नयाम्यधुना तदहमात्मविवक्षित, ततो ललाटतटविन्यस्तकरमुकुलितेनाऽभिहितमनेन–

जनाऽतिशायिरूपाणा, जगदेश्वर्यभागिनाम्। भदन्त। तत्रभवता, कि वो वैराग्यकारणम् ? ॥१॥
सूरिणाऽभिहित भूप। यद्यत्र तव कौतुकम् । ततस्ते कथयाम्येष, भवनिर्वेदकारणम् ॥२॥
कि तु–आत्मस्तुति परनिन्दा, पूर्वक्रीडितकीर्तनम् । विरुद्धमेतद्राजेन्द्र। साधूना त्रयमप्यलम् ॥३॥
ममात्मचरिते चेतःकथ्यमाने परिस्फुटम् । त्रय सपद्यते तेन, न युक्त तस्य कीर्तनम् ॥४॥
तातेनाऽभिहितम्–एव निगदता नाथ। वर्धित कोतुक त्वया । कर्तव्योऽत प्रसादो मे, निवेद्य चरित निजम् ॥५॥
ततो विज्ञाय निर्बन्ध, मध्यस्थेनाऽन्तरात्मना । प्रबोधकारण ज्ञात्वा, सूरिरित्थमवोचत ॥६॥
यदुत–अनादिनिधन लोके, नानावृत्तान्तसङ्कुलम् । विद्यते भूतल नाम, नगर सुमनोहरम् ॥७॥
तत्राऽस्ति भुवनख्यातो, देवानामपि नायक । अलङ्घ्यसत्प्रतापाज्ञो, नरेन्द्रो मलसञ्चय ॥८॥
सुन्दराऽसुन्दरे कार्ये, नित्य विन्यस्तमानसा । तस्य चास्ति महादेवी, तत्पक्तिर्नाम विश्रुता ॥९॥
तयोश्च देवीनृपयोरेक सुन्दरचेष्टित । विद्यते जगदाह्लादी, पुत्रो नाम शुभोदय ॥10॥
तथा द्वितीयस्तनयस्तयोर्देवीनरेन्द्रयो । अस्ति सर्वजनोत्तापी, विख्यातश्चाऽशुभोदय ॥११॥
स्वभर्तृवत्सला साध्वी, सुन्दराङ्गी जनप्रिया । भार्या शुभोदयस्याऽस्ति, पद्माक्षी निजचारुता ॥१२॥
तथाऽशुभोदयस्याऽपि, जनसन्तापकारिणी । भार्या स्वयोग्यता नाम, विद्यतेऽत्यन्तदारुणा ॥१३॥

### विचक्षणजडयो स्वभाववैपरीत्यम्

इतश्च कालपर्यायादवाप्य निजचारुताम् । तत शुभोदयाज्जात, पुत्रो नाम्ना विचक्षण ॥१४॥
तथैव कालपर्यायादवाप्यैव स्वयोग्यताम् । ततोऽशुभोदयाज्जातो, जडो नाम सुताधम ॥१५॥
तयोर्विचक्षणस्तावद्वर्धमान प्रतिक्षणम् । यादृश स्वैर्गुणैर्जातस्तदिदानी निबोधत ॥१६॥
मार्गानुसारिविज्ञान पूजको गुरुसहते । मेधावी प्रगुणो दक्षो, लब्धलक्ष्यो जितेन्द्रिय ॥१७॥
सदाचारपरो धीर, सद्योगी दृढसोहृद । देवाभिपूजको दाता, ज्ञाता स्वपरचेतसाम् ॥१८॥
सत्यवादी विनीतात्मा, प्रणयागतवत्सल । क्षमाप्रधानो मध्यस्थ, सत्त्वाना कल्पपादप ॥१९॥
धर्मैकनिष्ठ शुद्धात्मा, व्यसनेऽप्यविषण्णधी । स्थानमानान्तराऽभिज्ञ, कुत्सिताऽऽग्रहवर्जित ॥20॥
समस्तशास्त्रतत्त्वज्ञो, वाचि पाटवसगत । नीतिमार्गप्रवीणात्मा[णत्वात् मु] त्रासक शत्रुसहते ॥२१॥
स्वगुणोत्सेकहीनात्मा, विमुक्त परनिन्दया । अहृष्ट सम्पदा लाभे परार्थं च विनिर्मित ॥२२॥
किञ्चेह बहुनोक्तेन ? यावन्त पुरुषे गुणा । गीयन्ते तेऽखिलास्तत्र, प्रादुर्भूता विचक्षणे ॥२३॥
अथ सवर्धमानोऽसौ, शरीरेण प्रतिक्षणम् । जडस्तु यादृक् सपन्नस्तदिदानी निबोधत ॥२४॥
विपर्यस्तमना सत्यशौचसन्तोषवर्जित । मायावी पिशुन क्लीबो, निन्दक साधुसहते ॥२५॥
असत्यसन्ध पापात्मा, गुरुदेवविडम्बक । असत्प्रलापो लोभान्ध, परेषा चित्तभेदक ॥२६॥

अन्यच्चित्ते वदत्यन्यच्चेष्टते क्रिययाऽपरम् । दह्यते परसम्पत्सु, परापत्सु प्रमोदते ॥२७॥
गर्वाध्मात सदा क्रुद्ध, सर्वेषा भषणप्रिय । आत्मश्लाघापरो नित्य, रागद्वेषवशानुग ॥२८॥
कि चाऽत्र बहुनोक्तेन? ये ये दोषा सुदुर्जने । गीयन्ते तेऽखिलास्तत्र, प्रादुर्भूतास्ततो जडे ॥२९॥
एव च वर्धमानौ तौ, स्वगेहे सुखलालितौ । विचक्षणजडौ प्राप्तौ, यौवन परिपाटित ॥30॥

### विचक्षणबुद्ध्यो परिणय प्रकर्षोत्पत्तिश्च

इतश्च गुणरत्नानामुत्पत्तिस्थानमुत्तमम् । पूर निर्मलचित्ताह्व, विद्यते लोकविश्रुतम् ॥३१॥
तत्राऽन्तरङ्गे नगरे, नृपो नाम्ना मलक्षय । अस्ति सद्गुणरत्नाना, जनक पालकश्च स ॥३२॥
तस्य सुन्दरता नाम, महादेवी मनप्रिया । विद्यते चारुसर्वाङ्गी, सा तद्रत्नविवर्धिका ॥३३॥
ताभ्या च कालपर्यायाज्जाता पद्मदलेक्षणा । बुद्धिर्नाम गुणैराढ्या, कन्यका कुलवर्धनी ॥३४॥
तत सा गुणरूपाभ्यामनुरूप विचक्षणम् । विचिन्त्य प्रहिता बाला, ताभ्या तस्य स्वयवरा ॥३५॥
परिणीता च सा तेन, महाभूतिप्रमोदत । विचक्षणेन सत्कन्या, जाता च मनस प्रिया ॥३६॥
तया युक्तस्य तस्योच्चैर्भुञ्जानस्य मनसुखम् । विचक्षणस्य गच्छन्ति, दिनानि शुभकर्मणा ॥३७॥
अथाऽन्यदा क्वचिद्बुद्धेर्वार्ताऽन्वेषणकाम्यया । मलक्षयेण प्रहितो, विमर्शो निजपुत्रक ॥३८॥
स त बुद्धौ दृढस्नेहभावभावितमानस । तस्या एव समीपस्थ सद्भगिन्या स्थितो मुदा ॥३९॥
सहोदरसमायुक्ता, भर्त्रा च बहुमानिता । तत सा चित्तनिर्वाणाद् गर्भ गृह्णाति बालिका ॥40॥
अथ तस्या शुभे काले, सद्गर्भपरिपाकत । जातो देदीप्यमानाऽङ्ग, प्रकर्षो नाम दारक ॥४१॥
जात सवर्धमानोऽसौ, प्रकर्षो बुद्धिनन्दन । विचक्षणगुणैस्तुल्यो, विमर्शस्याऽतिवल्लभ ॥४२॥

### रसनालोलताभ्या सग

अथाऽन्यदा स्वक दृष्ट, कानन सुमनोहरम् । विचक्षणजडाभ्या भो । नाम्ना वदनकोटरम् ॥४३॥
तत्र खादनपानेन, ललमानौ यथेच्छया । तौ द्वावपि स्थितौ कञ्चित्काल सतुष्टमानसौ ॥४४॥
तत्र कुन्दसमा शुभ्रा, रदना सन्ति वृक्षका । तेषा च वीथिकायुग्म, ताभ्या दृष्ट मनोहरम् ॥४५॥
तत कुतूहलेनाऽन्त, प्रविश्य प्रविलोकितम् । तत्र चाऽलब्धपर्यन्त, दृष्ट ताभ्या महाबिलम् ॥४६॥
ततो विस्फारिताऽक्षाभ्या, कौतुकेन सविस्मयम् । विचक्षणजडाभ्या तत्, सुचिर सनिरीक्षितम् ॥४७॥
अथ तस्मात्समुद्भूता, रक्तवर्णा मनोहरा । दासचेटद्या सम काचिल्ललना चारुविग्रहा ॥४८॥
ता वीक्ष्य स जडश्चित्ते, पर हर्षमुपागत । ततश्च चिन्तयत्येव, विपर्यासितमानस ॥४९॥
अहो अपूर्विका योषिदहो सुन्दरदर्शना । अहो सस्थानमेतस्या, अहो रूपमहो गुणा ॥50॥
किमेषा नाकतो मुग्धा, भ्रष्टा स्यादमराङ्गना ? । कि वा पातालतो बाला, नागकन्या विनिर्गता ? ॥५१॥
अथवा नहि नहि सुष्ठु मया चिन्तितम्–
यतः–स्वर्गे वा नागलोके वा, कुत स्यादियमीदृशी? । मर्त्ये च दूरतोऽपास्ता, वार्ताऽपीदृक्षयोषित ॥५२॥
तन्नून विधिना मह्य, परितुष्टेन कल्पिता । निर्माप्येय प्रयत्नेन, सुन्दरै परमाणुभि ॥५३॥
अन्यच्च–नून पुरुषहीनेय, मदर्थं विहिता वने । यतो मा वीक्षते बाला, लोलदृष्टिर्मुहुर्मुहु ॥५४॥
गत्वा समीपमेतस्या, कृत्वा चित्तपरीक्षणम् । तत करोमि स्वीकार, कि ममाऽन्येन चेतसा ? ॥५५॥
इतश्च–विचक्षणश्च ता दृष्ट्वा, ललना ललिताऽऽननाम् । ततश्चेतसि सपन्नो, वितर्कोऽय महात्मन ॥५६॥
एकाकिनी वने योषा, परकीया मनोरमा । न द्रष्टु युज्यते रागान्नापि सभाषणोचिता ॥५७॥
यत सन्मार्गरक्ताना, व्रतमेतन्महात्मनाम् । परस्त्रिय पुरो दृष्ट्वा, यान्त्यधोमुखदृष्टय ॥५८॥
अतो व्रजाम्यत स्थानात्कि ममाऽपरचिन्तया? । ततो गन्तु प्रवृत्तोऽसौ, हस्तेनाऽऽकृष्य त जडम् ॥५९॥
तेन चाऽऽकृष्यमाणोऽसौ, कथञ्चिद्बलिना जड । हृतसर्वस्ववन्मोहात्पर दुखमुपागत ॥60॥
यावत्तौ गच्छत स्तोक, भूभाग राजपुत्रकौ । तावत्साऽनुचरी तस्या, पश्चाल्लग्ना समागता ॥६१॥

तया च दूरत एव विहित पूत्कार, यदुत–त्रायध्व भो नाथास्त्रायध्व, हा हताऽस्मि मन्दभागिनी, ततो वलितस्तदभिमुख जड । तेनाऽभिहित→सुन्दरि । मा भैषी, कथय कुतस्ते भयमिति । तयाऽभिहित–यद्भवन्तो मम स्वामिनी विमुच्य चलितो तेनैषा जातमूर्च्छा म्रियते लग्नाऽधुना, तस्माद् देवो। तावत्समीपे स्थीयता भवद्भ्यामेतस्या येन युष्मत्सन्निधानेन मनाक्स्वस्थीभूताया स्वामिन्या ततोऽह निराकुला सती भवतोरेतत्स्वरूप समस्त विज्ञपयामि । ततो जडेनाऽभिहितो विचक्षण – भ्रात। गम्यतामेतत्स्वामिनीसमीपे, भवतु सा स्वस्था, विज्ञपयत्वेषा यथाविवक्षित, को दोष ? विचक्षणेन चिन्तित–न सुन्दरमिद, इय हि वष्टा चेटी तरला स्वभावेन प्रतारयिष्यति नूनमस्मान्, अथवा पश्यामि तावत्किमेषा तत्र गता जल्पति? न चाहमनया प्रतारयितु शक्य, तस्माद्गच्छामि, काऽत्र मम शङ्का? एव विचिन्त्याऽभिहित विचक्षणेन→भ्रात। एव भवतु। ततो गतौ पश्चान्मुखौ विचक्षणजडो, प्राप्तो तत्समीपे, स्वस्थीभूता ललना, निपतिता दासचेटी तयोश्चरणेषु । अभिहितमनया→ महाप्रसाद, अनुगृहीताऽस्मि युवाभ्या, जीविता स्वामिनी, दत्त मे जीवितम् । जडेनाऽभिहित–सुन्दरि। किनामिकेय तव स्वामिनी? चेटयाऽभिहित–देव। सुगृहीतनामधेया रसनेयमभिधीयते । जडेनाऽभिहित भवती किनामिकामवगच्छामि? तत सलज्जमभिहितमनया–देव। लोलताऽह प्रसिद्धा लोके, चिरपरिचिताऽपि विस्मृताऽधुना देवस्य, तत्किमह करोमि मन्दभागिनीति । जडेनाऽभिहित–भद्रे। कथ मम त्व चिरपरिचिताऽसि? लोलतयाऽभिहित→इदमेवाऽस्माभिर्विज्ञपनीयम्। जड प्राह→विज्ञपयतु भवती । लोलतयोक्त→अस्ति तावदेषा मम स्वामिनी परमयोगिनी, जानात्येवाऽतीतानागत, अहमपि तस्या प्रसादादेवविधैव।

## पूर्वसागत्यम्

इतश्च कर्मपरिणाममहाराजभुक्तो स्थितमस्त्यसव्यवहारनगर, तत्र कदाचिद्भवतोरवस्थानमासीत्, तत कर्मपरिणामादेशेनैवाऽऽयातौ भवन्तावेकाक्षनिवासपुरे, ततोऽप्यागतो विकलाक्षनिवासे, तत्र त्रय पाटका विद्यन्ते, तत्र प्रथमे द्विहृषीकाभिधाना कुलपुत्रका प्रतिवसन्ति, ततस्तेषा मध्ये वर्तमानाभ्या युवाभ्या यथानिर्देशकारितया प्रसन्नेन कर्मपरिणाममहानरेन्द्रेण भटभुक्त्या दत्तमिद वदनकोटर कानन, एतच्च स्वाभाविकमेवाऽत्र सर्वदा विद्यत एव महाविल, इय च सर्वाप्यस्मदुत्पत्ते पूर्विका वार्ता । ततो विधिना चिन्तित–गृहिणीरहिताविमो वराको न सुखेन तिष्ठत अत करोम्यनयोर्गृहिणीमिति । ततस्तेन भगवता विधात्रा दयापरीतचेतसा युवयोर्निमित्तमत्रैव महाविले निर्वर्तितैषा मे स्वामिनी, तथाऽह चाऽस्या एवाऽनुचरीति । जडेन चिन्तित→अये। यथा मया विकल्पित तथैवेद सपन्न, अस्मदर्थमेवेय रसना निष्पादिता वेधसा, अहो मे प्रज्ञाऽतिशय । विचक्षणेन चिन्तित–क पुनरय विधिर्नाम?, हु ज्ञात, स एव कर्मपरिणामो भविष्यति, कस्याऽन्यस्येदृशी शक्तिरिति । जड प्राह–भद्र। ततस्तत, लोलतयोक्त–तत प्रभृत्येषा मे स्वामिनी युक्ता मया युवाभ्या सह खादन्ती नानाविधानि खाद्यकानि, पिबन्तो विविधरसोपेतानि पानकानि, ललमाना यथेष्टचेष्टया, तत्रैव विकलाक्षनिवासे नगरे त्रिष्वपि पाटकेषु तथा पञ्चाक्षनिवासे मनुजगतो अन्येषु च तथाविधेषु स्थानेषु विचरिता भूयास काल, अत एव क्षणमेप्येषा युष्मद्विरह न विषहते, युष्मदवधीरणया चागतमूर्च्छा म्रियते स्वामिनी । तदेवमह भवतोश्चिरपरिचिताऽस्मि ।

## जडकृत रसनालोलतापालन लोकनिन्दा च

एतच्चाकर्ण्य सिद्ध न समीहित इति भावनया परितुष्टो जड । ततोऽभिहितमनेन→सुन्दरि । यद्येव प्रविशतु तव स्वामिनीनगरे, पवित्रयत्वेक स्वावस्थानेन महाप्रासाद, येन पुनस्तत्र चिरन्तनस्थित्या सुखमास्महे लोलतयाऽभिहित→मा मैवमाज्ञापयतु देव न निर्गतेय स्वामिनी कदाचिदपीत काननात्, पूर्वमपीयमत्रैव वर्तमाना युवाभ्या सह ललिता, तदधुनाऽप्यस्मिन्नेव स्थाने तिष्ठन्ती लालयितु युज्यते स्वामिनी । जड प्राह→यद्भवती जानीते तदेव क्रियते, सर्वथा त्वमेवाऽत्र प्रमाण, कथनीय यद्रोचते तव स्वामिन्यै येन सपादयाम । लोलतयोक्त→महाप्रसाद, किमत्राऽपरमुच्यताम् ? अनुभवतु भवतो स्वामिनी लालनेन सुखामृतमविच्छेदेनेति ।

एव च स्थापिते सिद्धान्ते–तत आरभ्य यत्नेन, जडो वदनकोटरे । तिष्ठन्ती रसना नित्य लालयत्येव मोहत ॥१॥
कथं?–क्षीरेक्षुशर्कराखण्डदधिसर्पिर्गुडादिभि। पक्वान्नखाद्यकैर्दिव्यैर्द्राक्षादिवरपानकै ॥२॥
मद्यैर्मांसरसैश्चित्रैर्मधुभिश्च विशेद\ । ये चाऽन्ये लोकविख्याता, रसास्तेश्च दिने दिने ॥३॥
एव लालयतस्तस्य, जडस्य रसना सदा । यदि क्षूण भवेत्तच्च, कथयत्येव लोलता ॥४॥

यत साऽनुदिन वक्ति, स्वामिनी मधुरप्रिया । मासमाहर मद्य च, नाथ ! मृष्ट च भोजनम् ॥५॥
ददस्व व्यञ्जनान्यस्यै, रोचन्ते तानि सर्वदा । तत्सर्वं स करोत्येव, मन्वानोऽनुग्रह जडः ॥६॥
सतत लालनाऽसक्तो, भार्याया प्रतिवासरम् । क्लेशराशिनिमग्नोऽपि, मोहादेव च मन्यते ॥७॥
यदुत–धन्योऽह कृतकृत्योऽहमहो मे सुखसागर । यस्येदृशी शुभा भार्या, सपन्ना पुण्यकर्मण ॥८॥
नास्ति नून मया सदृक् , सुखितो भुवनत्रये । यतोऽस्या लालनां मुक्त्वा, कि नाम भुवने सुखम् ? ॥९॥
त[ य मु]तोऽलीकसुखस्वादपरिमोहितचेतन । तदर्थं नास्ति तत्कर्म, यदसौ नानुचेष्टते ॥10॥
त भार्यालालनोद्युक्त तथा दृष्ट्वाऽखिलो जन । जड हसितुमारब्ध, सत्यमेष जडो जड ॥११॥
**यतो धर्मार्थमोक्षेभ्यो, विमुख पशुसन्निभ । रसनालालनोद्युक्तो, न चेतयति किञ्चन ॥१२॥**
जडस्तु तत्र गृद्धात्मा, लोकैरेवं सहस्रश । हसितो निन्दितश्चाऽपि, न कथञ्चिन्निवर्तते ॥१३॥

### विचक्षणचेष्टा

विचक्षणस्तु तत्श्रुत्वा, लोलताया प्रभाषितम् । ततश्च चिन्तयत्येव, तदा मध्यस्थमानस ॥१४॥
अस्ति तावदिय भार्या, मम नास्त्यत्र सशय । आस्माके दृश्यते येन, वने वदनकोटरे ॥१५॥
केवल यदिय वक्ति,रसनालालन प्रति । अपरीक्ष्य न कर्तव्य, तन्मया सुपरिस्फुटम् ॥१६॥
**यत स्त्रीवचनादेव, यो मूढात्मा प्रवर्तते । कार्यतत्त्वमविज्ञाय, तेनाऽनर्थो न दुर्लभ ॥१७॥**
ततोऽनादरत किञ्चिल्लोलतायाचने सति । दत्त्वा खाद्यादिक तावत्कुर्महे कालयापनाम् ॥१८॥
ततश्च–भार्येय पालनीयेति, मत्वा रागविवर्जित । ददान शुद्धमाहार, लोलता च निवारयन् ॥१९॥
अविश्रब्धमनास्तस्या, लोकयात्रानुरोधत । अनिन्दितेन मार्गेण, रसनामनुवर्तयन् ॥20॥
धर्मार्थकामसपन्नो, विद्वद्भि परिपूजित । स्थितो विचक्षण काल, कियन्तमपि लीलया [युग्मम्] ॥२१॥
त च तेजस्विन मत्वा, निरीह च विचक्षणम् । भावज्ञा किञ्चिदप्येन, याचते नैव लोलता ॥२२॥
स लोलताविनिर्मुक्तो, रसना पालयन्नपि । अशेषक्लेशहीनात्मा, सुखमास्ते विचक्षण ॥२३॥
यत.–ये जाता ये जनिष्यन्ते, जडस्येह दुरात्मन । रसनालालने दोषा, लोलता तत्र कारणम् ॥२४॥
विचक्षणेन सा यस्माल्लोलताऽल निराकृता । रसनापालनेऽप्यस्य, ततोऽनर्थो न जायते ॥२५॥

### मातापितृज्ञापनम्

इतश्च तुष्टचितेन, जडेनाऽम्बा स्वयोग्यता । ज्ञापिता रसनालाभ, जनकश्चाशुभोदय ॥२६॥
तयोरपि मनस्तोषस्तत्श्रुत्वा समपद्यत । ततस्ताभ्या जड प्रोक्त, स्नेहाऽऽपूर्णेन चेतसा ॥२७॥
पुत्रानुरूपा ते भार्या, सपन्ना पुण्यकर्मणा । सुन्दर च त्वयाऽऽरब्ध, यदस्या पुत्र ! लालनम् ॥२८॥
इय हि सुखहेतुस्ते, सुभार्येय वरानना । ततो लालयितु युक्ता, पुत्र ! रात्रिन्दिव त्वया ॥२९॥
ततश्च–स्वयमेव प्रवृत्तोऽसौ, जनकाभ्या च चोदित । *एक सोन्माथिता बाला, मयूरैर्लपित तथा* ॥30॥
ततो गाढतर रक्तो, रसनाया जडस्तदा । तल्लालनार्थं मूढात्मा, सहतेऽसौ विडम्बना ॥३१॥
इतो विचक्षणेनाऽपि, स्वीयस्तात शुभोदय । ज्ञापितो रसनालाभ, माता च निजचास्ता ॥३२॥
तथा बुद्धिप्रकर्षो च, विमर्शश्च विशेषत । बोधितो रसनावाप्ति, मिलित च कुटुम्बकम् ॥३३॥
तत शुभोदयेनोक्त, वत्स ! कि ते प्रकथ्यते ? । जानासि वस्तुनस्तत्त्व, सत्योऽसि त्व विचक्षण ॥३४॥
तथापि ते प्रकृत्यैव, यन्ममोपरि गौरवम् । तेन प्रचोदिता वत्स। तवाहमुपदेशने ॥३५॥

### नारीदोषा

वत्स ! तावत्समस्ताऽपि, नारी पवनचञ्चला । क्षणरक्तविरक्ता च, सन्ध्याऽभ्राऽलीव वर्तते ॥३६॥
नदीव पर्वतोद्भूता, प्रकृत्या नीचगामिनी । दर्पणाऽर्पितदुर्ग्राह्यवदनप्रतिमोपमा ॥३७॥
बहुकौटिल्यनागाना, सस्थापनकरण्डिका । कालकूटविषस्योच्चैर्लतेव मरणप्रदा ॥३८॥
नरकाऽनलसन्तापदायिकेयमदाहता । मोक्षप्रापकसद्ध्यानशत्रभता च वर्तते ॥३९॥

कार्यं सचिन्तयत्यन्यद्भापतेऽन्यच्च मायया । करोत्यन्यच्च सा पुस, शुद्धशीला च भासते ॥40॥
ऐन्द्रजालिकविद्येव, दृष्टेराच्छादकारिका । नरचित्तजतुद्रावकारिणी वह्निपिण्डवत् ॥४१॥
प्रकृत्यैव च सर्वेषा, वैमनस्यविधायिनी । ससारचक्रविभ्रान्तिहेतुर्नारी बुधैर्मता ॥४२॥
पुभिरास्वादित दिव्य, विवेकामृतभोजनम् । क्षुद्रेव वामयत्येषा, भुज्यमाना न संशय· ॥४३॥
अनृत साहस माया नैर्लज्ज्यमतिलोभिता । निर्दयत्वमशोच च, नार्या स्वाभाविका गुण ॥४४॥
वत्स। किं बहुनोक्तेन? ये केचिद्दोषसञ्चया । ते नारीभाण्डशालायामाकाल सुप्रतिष्ठिता ॥४५॥
तस्मात्तस्या सदा पुसा, न कर्तव्यो हितैषिणा । विश्रम्भवशगो ह्यात्मा, तेनेदमभिधीयते ॥४६॥
येयं ते रसना भार्या, सपन्ना लोलतायुता । न सुन्दरेषा मे भाति, को वा योगस्तवानया? ॥४७॥
यतो न ज्ञायतेऽद्यापि, कुतस्त्येय ततस्त्वया । सङ्ग्रह कुर्वताऽमुष्या, मूलशुद्धि परीक्ष्यताम् ॥४८॥
यत –अत्यन्तमप्रमत्तोऽपि, मूलशुद्धेरवेदक । स्त्रीणामर्पितसद्भाव, प्रयाति निधन नर ॥४९॥

ततो निजचारुतयाऽभिहित–वत्स विचक्षण। सुन्दर से जनकेन मन्त्रित, अन्विष्यतामस्या रसनाया मूलशुद्धि, को दोष? विज्ञातकुलशीलस्वरूपा हि सुखतरमनुवर्तनीया भविष्यति, बुद्ध्याऽभिहित–आर्यपुत्र। यद्गुरू आज्ञापयतस्तदेवानुष्ठातु युक्तमार्यपुत्रस्य, *अलङ्घनीयवाक्या हि गुरव सत्पुरूषाणा भवन्ति* ।

## रसनामूलशुद्धये विमर्शप्रकर्षगमनम्

प्रकर्ष प्राह–तात। सुन्दरमम्बया जल्पितम् । विमर्शेनोक्त–को वाऽत्रासुन्दरं वक्तु जानीते? सर्वथा सुन्दरमेवेद यत्सुपरीक्षितं क्रियत इति । विचक्षणेन चिन्तित–सुन्दरमेतानि मन्त्रयन्ति, न सग्रहणीयेव विदुषा पुरुषेणाविज्ञातकुलशीलाचारा ललना, केवल कथितमेव मम लोलतया रसनाया सम्बन्धि मूलोत्थान, विज्ञातश्चाधुना मया शीलाचारो यदुत खादनपानप्रियेय रसना । अथवा नहि नहि, को हि सकर्णक पुरुषो भुजङ्गवनितागतिकुटिलतरचित्तवृत्ते कुलयोषितोऽपि वचने सप्रत्यय कुर्यात्? किं पुनर्दासचेटच ? तत्कीदृशो मम लोलतावचने सप्रत्यय ? शीलाचारोऽपि सहसवासेन भूयसा च कालेन सम्यग् विज्ञायते, न यथाकथञ्चित्, तत्किमनेन बहुना? करोमि तावदह तातादीनामुपदेश गवेषयाम्यस्या रसनाया मूलशुद्धि ततो विज्ञाय यथोचित करिष्यामीति विचिन्त्य विचक्षणेनाभिहित–यदाज्ञापयति तात, केवल तात स्वयमेव निरूपयतु, क पुनरत्र रसनामूलशुद्धिगवेषणार्थं प्रस्थापनायोग्य इति ।

शुभोदयेनोक्त–वत्स। अय विमर्श परमस्पकार्यभरस्य निर्वाहणक्षम ।

तथाहि–युक्त चायुक्तवद्भाति, सार चासारमुच्चकै । अयुक्त युक्तवद्भाति, विमर्शेन विना जने ॥१॥
तस्य हेयमुपादेयमुपादेय च हेयताम् । भजेत वस्तु यस्याय, विमर्शो नानुकूलक ॥२॥
अत्यन्तगहने कार्ये, मतिभेदतिरोहिते । विमर्श कुरुते नृणामेकपक्ष विवेचितम् ॥३॥
किञ्च–नरस्य नार्या देशस्य, राज्यस्य नृपतेस्तथा । रताना लोकधर्माणा, सर्वस्य भुवनस्य वा ॥४॥
देवाना सर्वशास्त्राणा, धर्माधर्मव्यवस्थिते । विमर्शोऽय विजानीते, तत्त्व नान्यो जगत्त्रये ॥५॥
येषामेष महाप्राज्ञो, वत्स। निर्देशकारक । ते ज्ञातसर्वतत्त्वार्था, जायन्ते सुखभाजनम् ॥६॥
अतो धन्योऽसि यस्याय, विमर्शस्तव बान्धव । न कदाचिदधन्याना, चिन्तारत्नेन मीलक ॥७॥
एष एव नियोक्तव्यो, भवताऽत्र प्रयोजने । भानुरेव हि शर्वर्यास्तमस क्षालनक्षम ॥८॥

विचक्षणेनाभिहित–यदाज्ञापयति तात, ततो निरीक्षितमनेन विमर्शवदनम् । विमर्श प्राह–अनुग्रहो मे । विचक्षणेनोक्त –यद्येव तत शीघ्र विधीयता भवता तातादेश । विमर्शेनाभिहितम्–एष सज्जोऽस्मि, केवल विस्तीर्णा वसुन्धरा, नानाविधा देशा, भूयासि राज्यान्तराणि तद्यदि कथञ्चिन्मे कालक्षेप स्यात्तत कियत कालान्निवर्तितव्यम्? विचक्षणेनोक्त–भद्र। सवत्सरस्ते कालावधि । विमर्श प्राह–महाप्रसाद । ततो विहितप्रणामश्चलितो विमर्श । अत्रान्तरे शुभोदयस्य पादयोर्निपत्याभिवन्द्य निजचारुता प्रणम्य च जननीजनकौ प्रकर्षेणाभिहित–तात । यद्यपि ममार्यकताताम्बाविरहेऽपि न मनसो निर्वृतिस्तथापि सहचरतया मातुले मम गाढतर प्रतिबद्धमन्त करण, नाह मामेन विरहित क्षणमात्रमपि जीवितुमुत्सहे, ततो मामनुजानीत यूय येनाहमेनं गच्छन्तमनुगच्छामीति । एतच्चाकर्ण्योल्लसितापत्यस्नेहमोहपरितहृदयेनानन्दोदकबिन्दुसन्दोहप्लावितनयनपुटेन विचक्षणेन

दक्षिणकराङ्गुलीभिरुन्नामितं प्रकर्षस्य मुखकमलक, दत्ता चुम्बिका, आघ्रातो मूर्धप्रदेश, साधु वत्स! साधु! इतिवदता निवेशितश्चासौ निजोत्सङ्गे । शुभोदय च प्रत्यभिहित–तात! दृष्टो बालकस्य विनय ? निरूपितो वचनविन्यास ? आकलित स्नेहसार ? शुभोदय प्राह→वत्स! किमत्राश्चर्यम्? त्वया बुद्धेर्जातस्येदृशमेव चेष्टित युज्यते ।

कि च वत्स!–न युक्तमिदमस्माक, स्नुषापौत्रकवर्णनम् । विशेषतस्तवाभ्यर्णे, यत एतदुदाहृतम् ॥१॥

*प्रत्यक्षे गुरव स्तुत्या, परोक्षे मित्रबान्धवा । भृतका कर्मपर्यन्ते, नैव पुत्रा मृता· स्त्रिय·* ॥२॥

तथापि चानयोर्दृष्ट्वा, गुणसम्भारगौरवम् । अवर्णितेन तेनाह, पुत्र । शक्नोमि नासितुम् ॥३॥

इयं हि भार्या ते बुद्धिरनुरूपा वरानना । गुणवृद्धिकरी धन्या, यथा चन्द्रस्य चन्द्रिका ॥४॥

भर्तृस्नेहपरा पट्वी, सर्वकार्यविशारदा । बलसम्पादिका गेहभरनिर्वहणक्षमा ॥५॥

विशालदृष्टिरप्येषा, सूक्ष्मदृष्टिरुदाहृता । सर्वसुन्दरदेहापि, द्वेषहेतुर्जडात्मनाम् ॥६॥

**अथवा**–मलक्षयेण जनिता, पुरे निर्मलमानसे । या च सुन्दरतापुत्री, तस्या को वर्णनक्षम ? ॥७॥

अत एव प्रकर्षोऽपि, नेदानी बहु वर्ण्यते । अनन्तगुण एवाय, जनयित्र्या विभाव्यते ॥८॥

वत्स! कि बहुनोक्तेन? धन्यस्त्व सर्वथा जने । यस्येदृश महाभाग, सपन्न ते कुटुम्बकम् ॥९॥

अत एव वय चित्ते, साशङ्का साम्प्रत स्थिता । आकर्ण्य रसनालाभ, नोचितेय यतस्तव ॥१०॥

मा भूद्बुद्धेर्विघाताय, सपत्नी मत्सरादियम् । विशेषत प्रकर्षस्य, तेन चिन्तातुरा वयम् ॥११॥

कि वा कालविलम्बेन? प्रस्तुत प्रविधीयताम् । ततो यथोचित ज्ञात्वा, युक्त यत्तत्करिष्यते ॥१२॥

मातुलस्नेहबद्धात्मा, प्रकर्ष प्रस्थितो यदि । इद चारुतर जात, क्षीरे खण्डस्य योजनम् ॥१३॥

तदेतौ सहितावेव, गच्छता कार्यसिद्धये । युवाभ्या न तु कर्तव्या, चिन्तेति प्रतिभाति मे ॥१४॥

ततो विचक्षणेन बुद्ध्या चाभिहित–यदाज्ञापयति तात । ततो निपतितौ गुरूणा चरणेषु विमर्शप्रकर्षौ, कृतमुचितकरणीय, प्रवृत्तौ गन्तुम् ।

## शरत्कालवर्णनम्

इतश्च तदा शरत्कालो वर्तते, स च कीदृश ?–

शस्यसम्भारनिष्पन्नभूमण्डलो, मण्डलाबद्धगोपालरासाकुल। साकुलत्वप्रजाजातसारक्षणो, रक्षणोद्युक्तसच्छालिगोपप्रिय ॥१॥

यत्र च शरत्काले→जलवर्जितनीरदवृन्दचित, स्फुटकाशविराजितभूमितलम् ।

भुवनोदरमिन्दुकरैर्विशद, कलित स्फटिकोपलकुम्भसमम् ॥२॥

**अन्यच्च**–शिखिविरावविरागपरा श्रुति, श्रयति हसकुलस्य कलस्वनम् ।

न रमते च कदम्बवने तदा, विषमपर्णरता जनदृष्टिका ॥३॥

लवणतिक्तरसाच्च पराङ्मुखा, मधुरखाद्यपरा जनजिह्विका ।

स्फुटमिद तदहो प्रियताकरो, जगति शुद्धगुणो न तु सस्तव ॥४॥

तथा–स्वच्छसन्नीरपूर सरोमण्डल, फुल्लसत्पद्मनेत्रैर्दिवा वीक्षते ।

यन्नभस्तत्पुनर्लोकयात्रेच्छया, रात्रिनक्षत्रसल्लोचनैरीक्षते ॥५॥

नन्दित गोकुल मोदिता पामरा, पुष्पितो नीपवृक्षो निशा निर्मला ।

चक्रवाकस्तथापीह विद्राणको, भाजन यस्य यत्तेन तल्लभ्यते ॥६॥

ततश्चैवविधे शरत्समये पश्यन्तौ मनोरमकाननानि, विलोकयन्तौ कमलखण्डभूषितसरोवराणि, निरीक्षमाणौ प्रमुदितानि ग्रामाकरनगराणि, हृष्टौ शक्रोत्सवदर्शनेन तुष्टौ दीपालिकावलोकनेन, आह्लादितौ कौमुदीनिरीक्षणेन, परीक्षमाणौ जनहृदयानि, प्रयुञ्जानौ स्वप्रयोजनसिद्ध्यर्थमुपायशतानि, विचरितौ बहिरङ्गदेशेषु विमर्शप्रकर्षौ । न दृष्ट क्वचिदपि रसनाया कुल, तथा च विचरतोस्तयो समायातो हेमन्त ।

## हेमन्तस्वरूपम्

कीदृशश्चासौ ?–अर्धितचेलतैलवरकम्बलरल्लकचित्रभानुको, विकसिततिलकलोध्रवरकुन्दमनोहरमल्लिकावन

शीतलपवनविहितपथिकस्फुटवादितदन्तवीणको, जलराशिकिरणहर्म्यतलचन्दनमौक्तिकसुभगताहर ॥१॥

यत्र च हेमन्ते दुर्जनसङ्गतानीव ह्रस्वतमानि दिनानि, सज्जनमैत्रीव दीर्घतरा रजन्य, सु[ ]सं मु[ ]ज्ञानानीव सगृह्यन्ते धान्यानि, काव्यपद्धतय इव विरच्यन्ते मनोहरा वेण्य, सुजनहृदयानीव विधीयन्ते स्नेहसाराणि वदनानि, परवलकलकलेन रणशिरसि सुभटा इव निवर्तन्ते दवीयोदेशगता अपि निजदयिताविकटनितम्वविम्वपयोधरभरशीतहरोष्मसस्मरणेन पथिकलोका इति।

प्रतापहानि सपन्ना, लाघव च दिवाकरे । अथवा–दक्षिणाशावलग्नस्य, सर्वस्यापीदृशी गति ॥१॥

**अन्यच्च**–अय हेमन्तो दुर्गतलोकान्–

प्रियवियोगभुजङ्गनिपातितान्, शिशिरमारुतखण्डितविग्रहान् ।

पशुगणानिव मुर्मुरराशिभि, पचति कि निशि भक्षणकाम्यया ? ॥१॥

## अन्तरङ्गादेशप्रवेश

यदा चेयतापि कालेन नोपलव्धा विमर्शप्रकर्षाभ्या रसनामूलशुद्धिस्तदा प्रविष्टो तावन्तरङ्गदेशेषु, तत्रापि पर्यटितो नानाविधस्थानेषु । अन्यदा प्राप्तौ राजसचित्तनगरे–

तच्च दीर्घमिवारण्य, भूरिलोकविवर्जितम् । क्वचिद्दृष्टगृहारक्ष, ताभ्या समवलोकितम् ॥१॥

तत प्रकर्षेणाभिहित–माम। किमितीद नगर विरलजनतया शून्यमिव दृश्यते? कि वा कारणमाश्रित्येदमीदृश सपन्नम्? विमर्श प्राह–

यथेद दृश्यते सर्वं, समृद्ध निजसम्पदा । केवल लोकसन्दोहरहित सुस्थितालयम् ॥१॥

तथेद भाव्यते नून, नगर निरुपद्रवम् । प्रयोजनेन केनापि, क्वचिन्निष्क्रान्तराजकम् [युग्मम्] ॥२॥

प्रकर्ष प्राह–एवमेतत्सम्यगवधारित मामेन । विमर्श प्राह–भद्र। कियदिद, जानाम्यह सर्वस्यैव वस्तुनो दृष्टस्य यत्तत्त्व, प्रष्टव्यमन्यदपि यत्र ते क्वचित्सन्देह सभवति । प्रकर्षेणाभिहित–माम। यद्येव तत किमितीद नगर रहितमपि नायकेन विवर्जितमपि भूरिलोकैर्निजश्रिय न परित्यजति? विमर्शेनोक्त–अस्त्यस्य मध्ये कश्चिन्महाप्रभाव पुरुष तज्जनितमस्य सश्रीकत्वम् । प्रकर्ष प्राह–यद्येव तत प्रविश्य निरुपयावस्त पुरुषम् । विमर्शेनोक्त–एव भवतु । तत प्रविष्टौ तौ नगरे । प्राप्तौ राजकुले दृष्टस्तत्राहकारादिकतिचित्पुरुषपरिकरो मिथ्याभिमानो नाम महत्तम । ततो विमर्श प्राह–भद्र। सोऽय पुरुषो यत्प्रभावजन्यमस्य राजसचित्तनगरस्य सश्रीकत्वम्, प्रकर्षेणोक्त–यद्येव ततस्तावदेनमुपसृत्य जल्पयाव, पृच्छावश्च कोऽत्र वृत्तान्त ? इति । विमर्शेनोक्त–एव भवतु । तत सभाषितस्ताभ्या मिथ्याभिमान, पृष्टश्च–भद्र। केन पुनर्व्यतिकरेण विरलजनमिद दृश्यते नगरम्? मिथ्याभिमान प्राह–ननु सुप्रसिद्धैवेय वार्ता कथ न विदिता भद्राभ्याम्? विमर्शेनोक्त नकर्तव्योऽत्र भद्रेण कोप, आवा हि पथिकौ न जानीवो महच्चात्रार्थे कुतूहल अतो निवेदयितुमर्हति भद्र । मिथ्याभिमानेनोक्त–अस्ति तावत्समस्तभुवनप्रतीतोऽस्य नगरस्य स्वामी सुगृहीतनामधेयो देवो रागकेसरी, तज्जनकश्च महामोह, तथा तयोर्मन्त्रिमहत्तमाश्च भूयासो विषयाभिलाषादय, तेषामितो नगरात् सर्ववलसमुदयेन दण्डयात्रया निर्गतानामनन्त कालो वर्तते, तेनेद विरलजनमुपलभ्यते नगरम् । विमर्श प्राह–भद्र। केन सह पुनस्तेषा विग्रह ? मिथ्याभिमान प्राह–दुरात्मना सन्तोषहतकेन । विमर्शेनोक्त–कि पुनस्तेन सार्धं विग्रहनिमित्तम्? ।

## रसनाया मूलशुद्धि

मिथ्याभिमानेनोक्त–क्वचिद्देवादेशेनेव जगद्वशीकरणार्थं विषयाभिलाषेण प्रहितानि पूर्वं स्पर्शनरसनादीनि पञ्चात्मीयानि गृहमानुषाणि । ततस्तैर्वशीकृतप्राये त्रिभुवने सन्तोषहतकेन तान्यपि निर्जित्य भूयासो निर्वाहिता कियन्तोऽपि लोका प्रापिता निर्वृतौ नगर्यां, तत्श्रुत्वा सन्तोषहतकस्योपरि प्रादुर्भूतक्रोधानुवन्धो निर्गत स्वयमेव देवो रागकेसरी विक्षेपेण, तदिदमत्र विग्रहनिमित्तम् । विमर्शेन चिन्तित–अये। उपलव्ध तावद्रसनाया नामतो मूलोत्थान, गुणत पुनर्विषयाभिलाष दृष्ट्वा ज्ञास्यामि यतो जनकानुरूपाणि प्रायेणापत्यानि भवन्ति, ततो भविष्यति मे तद्दर्शनान्निश्चय ततोऽभिहितमनेन–भद्र। यद्येव ततो भवता किनिमित्तमिहावस्थानम्? मिथ्याभिमानेनोक्त–प्रस्थितोऽहमप्यास तदा केवलमग्रानीकान्निवर्तितो देवेन । अभिहितश्च यथा आर्य मिथ्याभिमान। न चलितव्यमितो नगराद्भवता, इद हि नगर त्वयि स्थिते निर्गतेष्वप्यस्मास्वविनष्टश्रीक निरुपद्रवमास्ते, वयमप्यत्र स्थिता एव परमार्थतो भवाम, यतस्त्वमेवास्य नगरस्य प्रतिजागरणक्षम । मयाऽभिहित–यदाज्ञापयति देव ।

तत स्थितोऽह, तदिदमस्माकमत्रावस्थानकारणम् । विमर्शेनोक्त→अयि । प्रत्यागता काचिद्देवसकाशात्कुशलवार्ता ? मिथ्याभिमान प्राह–बाढमागता, जितप्राय वर्तते देवकीयसाधनेन, केवलमसावपि वष्ट सन्तोषहतको न शक्यते सर्वथाऽभिभवितु, ददात्यन्तराऽन्तरा प्रत्यवस्कन्दान्, निर्वाहयत्यद्यापि कञ्चिज्जन, अत एव देवेऽपि रागकेसरिणि लग्ने स्वयमेतावान् कालविलम्बो वर्तते । विमर्शेनोक्त–क्व पुनरधुना भवदीयदेव श्रूयते ? तत समुत्पन्ना मिथ्याभिमानस्य प्रणिधिशङ्का, न कथित यथावस्थित, अभिहित चानेन–न जानीम परिस्फुट, केवल तामसचित्त नगरमुररीकृत्य तावदितो निर्गतो देव, तत कदाचित्तत्रैवावतिष्ठते विमर्शेनोक्त–पूरित भद्रेणावयो कुतूहल, निवेदित प्रस्तुतवृत्तान्त, दर्शित सौजन्य तद्गच्छाव साम्प्रतमावाम् । मिथ्याभिमानेनोक्त–एव सिद्धिर्भवतु । तदाकर्ण्य हृष्टो विमर्श । तत परस्पर विहित मनागुत्तमाङ्गनमन, निर्गतौ राजसचित्तनगराद्विमर्शप्रकर्षौ ।

## तामसचित्तनगरम्

विमर्शेनोक्त–भद्र! कथिता तावदनेन तेषा विषयाभिलाषमानुषाणा मध्ये रसना, तदधुना तमेव विषयाभिलाष दृष्ट्वा तस्या स्वरूपमावयोर्गुणतो निश्चेतु युक्त, तद्गच्छावस्तत्रैव तामसचित्तनगरे । प्रकर्ष प्राह→यन्मामो जानीते, ततो गतौ तामसचित्तपुरे विमर्शप्रकर्षौ ।

तच्च कीदृशम्?→नाशिताशेषसन्मार्गमामूलतस्तेन दुर्गं न लङ्घ्य परेषा सदा ।
सर्वदोद्योतमुक्त च तद्वर्तते, चौरवृन्द तु तत्रैव सवर्धते ॥१॥
वल्लभ तत्सदा पापपूर्णात्मना, निन्दित तत्सदा शिष्टलोकै पुरम् ।
कारण तत्सदाऽनन्तदु खोदधेर्वारण तत्सदाऽशेषसौख्योन्नते ॥२॥
केवल तदपि ताभ्या विमर्शप्रकर्षाभ्यामीदृशमवलोकित, यदुत–
दवदग्धमिवारण्य, कृष्णवर्णं समन्तत । रहित भूरिलोकेन, न मुक्त च निजश्रिया ॥३॥
तत. प्रकर्षस्त दृष्ट्वा, प्रत्याह निजमातुलम् । माम! कि विद्यते कश्चिदत्रापि पुरनायक ? ॥४॥
विमर्श प्राह→नैवास्ति, योऽत्र भो! मूलनायक । केवल नायकाकार, कश्चिदत्रास्ति मानव ॥५॥

## शोककृतनगरराजादिवर्णनम्

ततो यावदेतावान् विमर्शप्रकर्षयोर्जल्प सपद्यते तावद्दृष्टस्ताभ्या तत्रैव नगरे प्रवेष्टुकामो दैन्याक्रन्दनविलपनादिभि कतिचित्प्रधानपुरुषै परिकरित शोको नाम पाडीरिक । तत सभाषितोऽसौ विमर्शप्रकर्षाभ्या, पृष्टश्च–भद्र! कोऽत्र नगरे राजा? शोक प्राह→ननु भुवनप्रसिद्धोऽय नरेन्द्र ।

तथाहि–महामोहसमुद्भूतो, रागकेसरिसोदर । धवोऽविवेकितायाश्च, प्रसिद्धोऽय नराधिप ॥१॥
स्वर्गपातालमर्त्येषु, शत्रुभिर्भीतकम्पितै । नामापि गृह्यते तस्य, प्रतापहतवैरिण ॥२॥
देवस्याचिन्त्यवीर्यस्य, सत्पराक्रमशालिन । तस्य द्वेषगजेन्द्रस्य, नाम क प्रष्टुमर्हति ? ॥३॥
किञ्च–आस्ता तावद्देव, कि तर्हि?–
या मोहयति वीर्येण, सकल भुवनत्रयम् । ख्याताऽविवेकिताऽप्यत्र, सा देवी देववल्लभा ॥४॥
अन्यच्च–सा महामोहनिर्देशकारिणी गुरुवत्सला । सा महामूढताज्ञाया, वर्तते सुन्दरा वधू ॥५॥
रागकेसरिनिर्देश, न लङ्घयति सा सदा । मूढतायाश्च तत्पत्न्या, सौहार्दं दर्शयत्यलम् ॥६॥
तथा द्वेषगजेन्द्रस्य, सा भर्तुर्गाढवत्सला । तेनाऽविवेकिता लोके, प्रख्याति समुपागता ॥७॥
तदेतौ भुवनेऽप्यत्र, ख्यातौ देवीनरेश्वरौ । इदानी हन्त भद्राभ्या, कथ प्रष्टव्यता गतौ ? ॥८॥
विमर्श प्राह नैवात्र, कोप कार्यस्त्वया यत । सर्व सर्वं न जानीते, सिद्धमेतज्जगत्त्रये ॥९॥
आवा दवीयसो देशादागतौ न च वीक्षितम् । पूर्वमेतत्पुर कि तु, श्रुतौ देवीनरेश्वरौ ॥10॥
ततश्च–कि स्याद् द्वेषगजेन्द्रोऽत्र! कि वा स्यान्नगरान्तरे? । तत कुतूहलेनेद, पृष्ट सदिग्धचेतसा ॥११॥
तद्भद्र! साम्प्रत ब्रूहि, किमत्रास्ते नराधिप ? । कि वा विनिर्गत क्वापि? पश्यावस्त नरेश्वरम् ॥१२॥
शोकेनोक्त जगत्यत्र, वृत्तान्तोऽयमपि स्फुटम् । प्रसिद्ध एव सर्वेषा, विदुषा दत्तचेतसाम्
तथा देवो महामोहस्तत्पुत्रो रागकेसरी । तथा द्वेषगजेन्द्रश्च, समस्तबलसयुता

विमर्श प्राह→सिद्धिस्ते, तुष्ट शोको गत पुरे । विमर्शश्च ततश्चेद, प्रकर्षं प्रत्यभाषत ॥६॥
भद्र! या साधनाधारा, प्रोक्ताऽनेन महाटवी । गत्वा तस्या प्रपश्यावो, रागकेसरिमन्त्रिणम् ॥७॥
प्रकर्ष प्राह को वाऽत्र, विकल्प ? माम! गम्यताम् । तत प्रचलितौ तूर्णं, हृष्टौ स्वस्रीयमातुलौ ॥८॥

## विमर्शप्रकर्षकृतमहाटवीदर्शनम्

ततो विलङ्घ्य वेगेन, मार्गं पवनगामिनौ । प्राप्तौ तौ मध्यमे भागे, महाटव्या प्रयाणकै ॥९॥
अथ तत्र महामोह, रागकेसरिसयुतम् । युक्त द्वेषगजेन्द्रेण, चतुरङ्गबलान्वितम् ॥10॥
आवासित महानद्या, पुलिनेऽतिमनोरमे । महामण्डपमध्यस्थ, वेदिकाया प्रतिष्ठितम् ॥११॥
महासिहासनारूढ, भटकोटिविवेष्टितम् । गत्वा स्म नातिदूर तौ, दत्तास्थान प्रपश्यत ॥१२॥

ततो विमर्शेनाभिहित–भद्र! प्राप्तौ तावदावामभीष्टप्रदेशे, लङ्घिता महाटवी, दृष्ट महामोहसाधन, दर्शनपथमवतीर्णोऽय दत्तास्थान सह रागकेसरिणा सपरिकरो महामोहराज, तन्न युक्तोऽधुनाऽऽवयोरस्मिन्नास्थाने प्रवेश, मा भूदेतेषामास्थानस्थायिना लोकानामपूर्वयोरावयोर्दर्शनेन काचिदाशङ्का । **अन्यच्च**–अत्रैव प्रदेशे व्यवस्थिताभ्या दृश्यत एवेद सकलकालमास्थानं, अत कुतूहलेनापि न युक्तोऽत्र प्रवेश। प्रकर्षेणोक्त–एव भवतु, केवल मामेय महाटवी, इय च महानदी, इद च पुलिन, अय च महामण्डप, एषा च वेदिका, एतच्च महासिहासन, अय च महामोहनरेन्द्र, एते च सपरिवारा समस्ता अपि शेषनरेन्द्रा। सर्वमिदमदृष्टपूर्व अहो महदत्र कुतूहल, तेनामीषामेकैक नामतो गुणतश्च मामेन वर्ण्यमान विस्तरत श्रोतुमिच्छामि। अभिहित च पूर्वं मामेन यथा जानाम्यह दृष्टस्य वस्तुनो यथावस्थित तत्त्व, अत समस्त निवेदयितुमर्हति माम । विमर्श प्राह–सत्य, अभिहितमिद मया, केवल भूरिप्रकार परिप्रश्नितमिद भद्रेण, तत सम्यगवधार्य निवेदयामि । प्रकर्ष प्राह–विश्रब्धमवधारयतु माम। ततो विमर्शेन समन्तादवलोकिता महाटवी, निरीक्षिता महानदी, विलोकित पुलिन, निर्वर्णितो महामण्डप, निरूपिता वेदिका, निभालित महासिहासन, विचिन्तितो महामोहराजो, विचारिता प्रत्येक महताऽभिनिवेशेन सपरिकरा सर्वे नरेन्द्रा, स्वहृदये[येन मु]प्रविष्टो ध्यान, तत्र च व्युपरताऽशेषेन्द्रियग्रामवृत्तिर्निष्पन्दस्तिमितलोचनयुगल स्थित कञ्चित्काल, तत प्रकम्पयता शिर प्रहसितमनेन । प्रकर्ष प्राह→माम! किमेतत्? विमर्शेनोक्त→अवगत समस्तमिदमधुना मया, तत समुद्भूतो हर्ष, प्रच्छनीयमन्यदपि साम्प्रत यत्ते रोचते । प्रकर्षेणोक्त–एव करिष्यामि, तावदिदमेव प्रस्तुत निवेदयतु माम ।

## चित्तवृत्त्यटवीवर्णनम्

विमर्शेनाभिहित–यद्येव ततस्तावदेषा चित्तवृत्तिर्नाम महाटवी ।
इय च भद्र! विस्तीर्णविविधाद्भुतसगता । उत्पत्तिभूमि सर्वेषा, सद्रत्नानामुदाहृता ॥१॥
इयमेव च सर्वेषा, लोकोपद्रवकारिणाम् । महानर्थपिशाचाना, कारण परिकीर्तिता ॥२॥
सर्वेषामन्तरङ्गाणा, लोकानामत्र सस्थिता । चित्तवृत्तिमहाटव्या, ग्रामपत्तनभूमय ॥३॥
यदापि बहिरङ्गेषु, निर्दिश्यन्ते पुरेषु ते । किञ्चित्कारणमालोक्य, विद्वद्भिर्ज्ञानचक्षुषा ॥४॥
तथापि परमार्थेन, तेऽन्तरङ्गजना सदा । अस्यामेव महाटव्या, विज्ञेया सुप्रतिष्ठिता [युग्मम्] ॥५॥
**यतः**–नैवान्तरङ्गलोकाना, चित्तवृत्तिमहाटवीम् । विहाय विद्यते स्थान, बहिरङ्गपुरे क्वचित् ॥६॥
**ततश्च**– सुन्दरासुन्दरा सर्वे, येऽन्तरङ्गा क्वचिज्जना । एना विहाय ते भद्र! न वर्तन्ते कदाचन ॥७॥
**अन्यच्च**–मिथ्यानिषेविता भद्र! भवत्येषा महाटवी । घोरससारकान्तारकारण पापकर्मणाम् ॥८॥
सम्यङ् निषेविता भद्र! भवत्येषा महाटवी । अनन्तानन्दसन्दोहपूर्णमोक्षस्य कारणम् ॥९॥
कि चेह बहुनोक्तेन? सुन्दरेतरवस्तुन । सर्वस्य कारण भद्र! चित्तवृत्तिमहाटवी ॥10॥

## प्रमत्ततानदीवर्णनम्

इय चासा(पा)रविस्तारा, दृश्यते या महानदी । एषा प्रमत्तता नाम, भद्र! गीता मनीषिभि ॥११॥
इय निद्रातटी तुङ्गा, कषायजलवाहिनी । विज्ञेया मदिरास्वादविकथास्रोतसा निधि ॥१२॥
महाविषयकल्लोललोलमालाकुला सदा । विकल्पानल्पसत्त्वौघै पूरिता च निगद्यते ॥१३॥
योऽस्यास्तटेऽपि वर्तेत, नरो बुद्धिविहीनक । तमन्मल्य महावर्ते. क्षिपत्येषा महापगा ॥१४॥

यस्तु प्रवाहे नीरस्य, प्रविष्टोऽस्या पुमानलम् । स यज्जीवति मूढात्मा, क्षणमात्र तदद्भुतम् ॥१५॥
यद्दृष्ट भवता पूर्वं, रागकेसरिपत्तनम् । यच्च द्वेषगजेन्द्रस्य, सम्बन्धि नगर परम् ॥१६॥
ताभ्यामेषा समुद्भूता, विगाह्येमा महाटवीम् । गत्वा पुन पतत्येषा, घोरससारनीरधो ॥१७॥
अतोऽस्या पतितो भद्र! पुस्यस्तत्र सागरे । अवश्य याति वेगेन, तस्य चोत्तरण कुत ? ॥१८॥
ये गन्तुकामास्तत्रैव, भीमे ससारसागरे । अत एव सदा तेषा, वल्लभेय महापगा ॥१९॥
ये तु भीता पुनस्तस्माद् घोरात्ससारसागरात्(नीरधे प्र)। ते दूराद्दूरतो यान्ति, विहायेमा महानदीम् ॥20॥

## तद्विलसितपुलिनम्

तदेषा गुणतो भद्र! वर्णिता तव निम्नगा । त्व तद्विलसित नाम, साम्प्रत पुलिन शृणु ॥२१॥
एतद्धि पुलिन भद्र! हास्यविब्बोकसैकतम् । विलासलाससङ्गीतहससारसराजितम् ॥२२॥
स्नेहपाशमहाकाशविकासधवल यथा । घूर्णमानमहानिद्रामदिरामत्तदुर्जनम् ॥२३॥
केलिस्थान सुविस्तीर्णं, वालिशाना मनोरमम् । विज्ञाततत्त्वैर्दूरेण, वर्जित शीलशालिभि ॥२४॥
तदिद पुलिन भद्र! कथित तव साम्प्रतम् । महामण्डपरूप ते, कथमामि सनामकम् [सनायकम् मु] ॥२५॥

## चित्तविक्षेपमडप

अय हि चित्तविक्षेपो, नाम्ना सगीयते वुधै । गुणत सर्वदोपौघवासस्थानमुदाहृत ॥२६॥
अत्र प्रविष्टमात्राणा, विस्मरन्ति निजा गुणा । प्रवर्तन्ते महापापसाधनेपु च वुद्धय ॥२७॥
एतेपामेव कार्येण, निर्मितोऽय सुवेधसा । राजानो येऽत्र दृश्यन्ते, महामोहादय किल ॥२८॥
वहिरङ्गा पुनर्लोका, यदि मोहवशानुगा । स्युर्महामण्डपे भद्र! प्रविष्टा क्वचिदत्र ते ॥२९॥
ततो विभ्रमसन्तापचित्तोन्मादव्रतप्लवान् । प्राप्नुवन्ति न सन्देहो, महामण्डपदोपत [युग्मम्] ॥30॥
एन भद्र! प्रकृत्यैव, महामण्डपमुच्चकै । एते नरेन्द्रा सप्राप्य, मोदन्ते तुष्टमानसा ॥३१॥
वहिरङ्गा पुनर्लोका, मोहादासाद्य मण्डपम् । एन हि दौर्मनस्येन, लभन्ते दु खसागरम् ॥३२॥
अय हि चित्तनिर्वाणकारिणी निजवीर्यत । तेषामेकाग्रता हन्ति, सुखसन्दोहदायिनीम् ॥३३॥
केवल ते न जानन्ति, वीर्यमस्य तपस्विन । प्रवेशमाचरन्त्यत्र, तेन मोहात्पुन पुन ॥३४॥
यैस्तु वीर्यं पुनर्ज्ञात, कथञ्चित् पुण्यकर्मभि । अस्य नैवात्र ते भद्र! प्रवेश कुर्वते नरा ॥३५॥
एकाग्रमनसो नित्य, चित्तनिर्वाणयोगत । ततस्ते सततानन्दा, भवन्त्यत्रैव जन्मनि ॥३६॥
तदेष गुणतो भद्र! चित्तविक्षेपमण्डप । मया निवेदितस्तुभ्यमधुना शृणु वेदिकाम् ॥३७॥

## तृष्णावेदिकावर्णनम्

एषा प्रसिद्धा लोकेऽत्र, तृष्णानाम्नी सुवेदिका । अस्यैव च नरेन्द्रस्य, कारणेन निरूपिता ॥३८॥
भद्रात एव त्व पश्य, महामोहेन यो निज । कुटुम्वान्तर्गतो लोक, स एवास्या निवेशित ॥३९॥
ये तु शेषा महीपालास्तत्सेवामात्रवृत्तय । एते निविष्टास्ते पश्य, सर्वे मुत्कलमण्डपे ॥40॥
एषा हि वेदिका भद्र! प्रकृत्यैवास्य वल्लभा । महामोहनरेन्द्रस्य, स्वजनस्य विशेषत ॥४१॥
अस्या समुपविष्टोऽयमत एव मुहुर्मुहु । सगर्वं वीक्षते लोक, सिद्धार्थोऽह किलाधुना ॥४२॥
एतच्च प्रीणयत्येषा, स्वभावेनैव वेदिका । स्वस्योपरिष्टादासीन, महामोहकुटुम्वकम् ॥४३॥
वहिरङ्गा पुनर्लोका, यद्येना भद्र! वेदिकाम् । आरोहन्ति ततस्तेषा, कौतस्त्य दीर्घजीवितम्? ॥४४॥
अन्यच्चैषा स्ववीर्येण, तृष्णाऽऽख्या भद्र! वेदिका । अत्रैव सस्थिता नित्य, भ्रामयत्यखिल जगत् ॥४५॥
तदेषा गुणतो भद्र! यथार्था वरवेदिका । मया निवेदिता तुभ्यमिदानी शृणु विष्टरम् ॥४६॥

## विपर्याससिहासनम्

एतत्सिहासन भद्र! विपर्यासाऽऽख्यमुच्यते । अस्यैव विधिना नून, महामोहस्य कल्पितम् ॥४७॥
यदिद लोकविख्यात, राज्य याश्च विभूतय । तत्राह कारण मन्ये, नृपतेरस्य विष्टरम् ॥४८॥

यावच्चास्य नरेन्द्रस्य, विद्यते वरविष्टरम् । इद तावदह मन्ये, राज्यमेताश्च भूतय ॥४९॥
यत.–अस्मिन्निविष्टो राजाऽय, महासिहासने सदा । सर्वेषामेव शत्रूणामगम्य परिकीर्तित ॥50॥
यदा पुनरय राजा, भवेदस्माद्वहि स्थित । सामान्यपुरुषस्याऽपि, तदा गम्य प्रकीर्तित ॥५१॥
एतद्धि विष्टर भद्र! बहिरङ्गजनै सदा । आलोकित करोत्येव, रौद्राऽनर्थपरम्पराम् ॥५२॥
यत.–तावत्तेषा प्रवर्तन्ते, सर्वा सुन्दरबुद्धय । यावत्तैर्विष्टरे लोकैरत्र दृष्टिर्न पातिता ॥५३॥
निबद्धदृष्टय सन्त, पुनरत्र महासने(ये तु जना प्र)। ते पापिनो भवन्त्युच्चै, कुत सुन्दरबुद्धय ? ॥५४॥
किञ्च–यन्नद्यास्तत् पुलीनस्य, मण्डपस्य च वर्णितम् । वेदिकायाश्च तद्वीर्यं, सर्वमत्र प्रतिष्ठितम् ॥५५॥
तदिद गुणतो भद्र! कथित तव विष्टरम् । महामोहनरेन्द्रस्य, निबोध गुणगौरवम् ॥५६॥

## अविद्यामहामोहस्वरूपम्

जराजीर्णकपोलापि, यैषा भुवनविश्रुता । अमुष्येयमविद्याख्या, गात्रयष्टिस्दाहृता ॥५७॥
एषाऽत्र सस्थिता भद्र! सकलेऽपि जगत्त्रये । यत्करोति स्ववीर्येण, तदाऽऽकर्णय साम्प्रतम् ॥५८॥
अनित्येष्वपि नित्यत्वमशुचिष्वपि शुद्धताम् । दु खात्मकेषु सुखतामनात्मस्वात्मरूपताम् ॥५९॥
पुद्गलस्कन्धरूपेषु, शरीरादिषु वस्तुषु । लोकाना दर्शयत्येषा, ममकारपरायणा [युग्मम] ॥60॥
ततस्ते बद्धचित्तत्वात्तेषु पुद्गलवस्तुषु । आत्मरूपमजानन्त, क्लिश्यन्तेऽनर्थक जना ॥६१॥
तदेना धारयन्नुच्चैर्गात्रयष्टि महाबल । जराजीर्णोऽपि नैवाय, मुच्यते निजतेजसा ॥६२॥
अय हि भद्र! राजेन्द्रो, जगदुत्पत्तिकारक । तेनैव गीयते प्राज्ञैर्महामोहपितामह ॥६३॥
ये रुद्रोपेन्द्रनागेन्द्रचन्द्रविद्याधरादय । तेऽप्यस्य भद्र! नैवाज्ञा, लङ्घयन्ति कदाचन ॥६४॥
तथाहि–योऽय स्ववीर्यदण्डेन, जगच्चक्र कुलालवत् । विभ्रम्य घटयत्येव, कार्यभाण्डानि लीलया ॥६५॥
तथास्याचिन्त्यवीर्यस्य, महामोहस्य भूपते । को नाम भद्र! लोकेऽस्मिन्नाज्ञा लङ्घयितु क्षम ? ॥६६॥
तदेष गुणतो भद्र! वर्णितस्ते नराधिप । अधुना परिवारोऽस्य, वर्ण्यते त विचिन्तय ॥६७॥
केवल कथयत्येव, मयि भद्र! विशेषत । केनाप्याकूतदोषेण, न त्व पृच्छसि किञ्चन ॥६८॥
हुङ्कारमपि नो दत्से, भावितश्च न लक्ष्यसे । शिर कम्पनखस्फोटविरहेण विभाव्यसे ॥६९॥
निश्चलाक्षो मदीय तु, केवल मुखमीक्षसे । तदिद नैव जानेऽह, बुध्यसे कि न बुध्यसे? ॥70॥
प्रकर्ष प्राह मा मैव, माम! वोच प्रसादत । तवाह नास्ति तल्लोके, यन्न बुध्ये परिस्फुटम् ॥७१॥
विमर्श प्राह जानामि, बुध्यसे त्व परिस्फुटम् । अय तु विहितो भद्र! परिहासस्त्वया सह ॥७२॥
यत –विज्ञातपरमार्थोऽपि[र्थेऽपि मु], बालबोधनकाम्यया । परिहास करोत्येव, प्रसिद्ध पण्डितो जन ॥७३॥
बालो विनोदनीयश्च, मादृशा भद्र! वर्तसे । अतो मत्परिहासेन, न कोप गन्तुमर्हसि ॥७४॥
अन्यच्च जानताऽपीदमस्माक हर्षवृद्धये । त्वया प्रश्नोऽपि कर्तव्य, क्वचित्प्रस्तुतवस्तुनि ॥७५॥
किंच–अविचार्य मया सार्धं, वस्तुतत्त्व यथास्थितम् । त्वमत्र श्रुतमात्रेण, भद्र! न ज्ञातुमर्हसि ॥७६॥
ऐदम्पर्यमतस्तात । बोद्धव्य यत्नतस्त्वया । अज्ञातपरमार्थस्य, मा भूद्भौतकथानिका ॥७७॥

प्रकर्ष प्राह–माम । कथय कीदृशी पुन सा भौतकथानिका?

## भौतकथानिका

विमर्शेनाभिहित–भद्र! समाकर्णय, अस्ति क्वचिन्नगरे जन्मबधिर सदाशिवो नाम भौताचार्य, स च जराजीर्णकपोल सन्नुपहासपरेण हस्तसज्ञयाऽभिहित केनचिद्धूर्त्तबटुना यथा→भट्टारक! किलैव नीतिशास्त्रेषु पठ्यते यदुत–

*विष गोष्ठी दरिद्रस्य,* जन्तो पापरतिर्विषम् । विष परे रता भार्या, विष व्याधिरुपेक्षित ॥१॥

अत शीघ्रमस्य बाधिर्यस्य करोतु किञ्चिदौषध भट्टारक, न खलूपेक्षितु युक्तोऽय महाव्याधि, तत प्रविष्टो भौताचार्यस्य मनसि स एवाऽऽग्रहविशेष, ततोऽभिहितोऽनेन शान्तिशिवो नाम निजशिष्यो यदुत गच्छ त्व वैद्यभवने मदीयबधिरत्वस्य विज्ञाय भेषज गृहीत्वा [illegible]मागच्छ, मा भूत्कालहरणेन व्याधिवृद्धिरिति । शान्ति[illegible]भिहित–यदाज्ञापयति

भट्टारक । तत प्राप्तोऽसो वैद्यभवने, दृष्टो वेद्य । इतश्च वृहती वेला रमण विधाय द्वारात्समागतो वैद्यपुत्र , तत क्रोधान्धबुद्धिना वैद्येन गृहीतातिपरुषा वालमयी रज्जु, वद्धश्चारटन्नसो निजदारक स्तम्भके, गृहीतो लकुट , ताडयितुमारव्ध , ताडयमाने च निर्दयं तत्र दारके शान्तिशिव प्राह—वैद्य। किमित्येनमेव ताडयसि? वेद्येनोक्त न शृणोति कथञ्चिदप्येप पाप । अत्रान्तरे हाहारव कुर्वाणा वेगेनागत्य लग्ना वेद्यस्य हस्ते वारणार्थं भार्या । वेद्य प्राह→मारणीयो मयाऽय दुरात्मा यो ममैव कुर्वतोऽपि न शृणोति । अपसराऽपसर त्वमितरथा तवापीयमेव गति । तथापि लगन्ती ताडिता साऽपि वेद्येन । शान्तिशिवेन चिन्तित—अये। विज्ञात भट्टारकस्योपध किमधुना पृष्टेन ? ततो निर्गत्य गतोऽसौ माहेश्वरगृहे याचिता तेन रज्जु समर्पिता माहेश्वरै शणमयी । शान्तिशिव प्राह—अलमनया, मम वालमय्याऽतिपरुषया प्रयोजन, दत्ता तादृश्येव । माहेश्वरेरभिहित च→भट्टारक। किं पुनरनया कार्यम्? शान्तिशिवेनोक्त—सुगृहीतनामधेयाना सदाशिवभट्टारकाणामौपध करिष्यते । ततो गृहीत्वा रज्जु गतो मठे शान्तिशिव । तत्र चदृष्ट्वा गुरु कृतमनेन विपमभृकुटितरङ्गभङ्गकराल वक्त्रकुहर वद्धश्चाराटीर्मुञ्चन्नसो मठमध्यस्तम्भके निजाचार्य । ततो गृहीतवृहल्लकुटोऽसौ प्रवृत्तस्तस्य ताडने । इतश्च माहेश्वरेश्चिन्तित—गच्छामो भट्टारकाणा क्रियाया क्रियमाणाया प्रत्यासन्ना स्वय भवाम । तत समागतास्ते दृष्टो निर्दय ताडयन्नाचार्यं शान्तिशिव । तेरभिहित→किमित्येनमेव ताडयसि? शान्तिशिव प्राह→न शृणोति कथञ्चिदप्येप पाप । ततो विहित सदाशिवेन म्रियमाणेन महाक्रन्दभेरव शब्द । ततो लग्ना वारणार्थं हाहारव कुर्वन्त शान्तिशिवस्य माहेश्वरा। शान्तिशिव प्राह→मारणीयो मयाऽय दुरात्मा, यो ममैव कुर्वतोऽपि न शृणोति, अपसरताऽपसरत यूयमितरथा युष्माकमपीयमेव वार्तेति । तथापि वारयतो माहेश्वरानपि प्रवृत्तस्ताडयितुमसौ लकुटेन, ततो वहुत्वात्तेपा रे लात लातेति व्रुवाणेरुद्दालित[ते मु ]स्ते[स्तेन मु ]स्तस्यहस्ताल्लकुट चिन्तित च—नून ग्रहगृहीतोऽय, ततो वद्धस्तैस्ताडयित्वा पश्चाद्बाहुवन्धेन शान्तिशिव । विमोचित सदाशिव, लव्धा तेन चेतना, जीवितो दैवयोगेन, माहेश्वरैरभिहित—शान्तिशिव। किमिद भगवतस्त्वया कर्तुमारव्धमासीत्?, शान्तिशिव प्राह—ननु वधिरताया वैद्योपदेशादोपध, किञ्च—मुञ्चत मा मा भट्टारकव्याधिमुपेक्षध्वम् । माहेश्वरेश्चिन्तित—महाग्रहोऽयं, ततोऽभिहितमेते —मुञ्चामस्त्वा यद्येव न करोपि । शान्तिशिव प्राह—किमह भवतां वचनेन स्वगुरोरपि भैपज न करिष्यामि? अह हि यदि पर तस्येव वैद्यस्य वचनेन तिष्ठामि, नान्यथा । तत समाहूतो वैद्य , निवेदितस्तस्मै वृत्तान्त , ततो मुखमध्ये हसताऽभिहित वैद्येन—भट्टारक। न वधिरोऽसो मदीयो दारक , किन्तर्हि? पाठितो मया क्लेशेन वैद्यकशास्त्राणि स तु रमणशीलतया मम रटतोऽपि तदर्थं न शृणोति ततो मया रोपात्ताडित , तन्नेदमोपधम् । किञ्च—प्रगुणीभूत खल्वय साम्प्रत तव प्रभावादनेनेव भैपजेन, तस्मादत पर न कर्तव्य मदीयवचनेन त्वयाऽस्येदमौपधमिति । शान्तिशिवेनाभिहित—एव भवतु, भट्टारकेर्हि प्रगुणैर्मम प्रयोजन, ते च यदि प्रगुणास्तत किमौपधेन? ततो मुक्त शान्तिशिव । तदेपा भद्र। भौतकथानिका श्रुतमात्रग्राहिणस्तवापि मया सार्धमविचारयतो मा भूदित्येवमर्थं परिचोदितस्त्व मयेति। प्रकर्प प्राह—साधु साधु, उक्त मामेन, पृच्छामि तर्हीदानी किञ्चिद्भवन्त विमर्शेनोक्त—प्रश्नयतु भद्र । प्रकर्प प्राह—माम। यद्येव ततो विज्ञातेय मया समस्तान्तरङ्गलोकाधारभूता वहिरङ्गलोकाना सर्वसुन्दराऽसुन्दरवस्तुनिर्वर्तिका सभावार्था चित्तवृत्तिर्महाटवी, एतानि तु महानदीपुलिनमहामण्डपवेदिकासिहासनगात्रयष्टिनरेन्द्ररूपाणि वस्तूनि यानि भवता प्रमत्ततातद्विलसितचित्तविक्षेपतृष्णाविपर्यासाविद्यामहामोहाभिधानानि निवेदितानि तानि मया भावार्थमधिकृत्य न सम्यग्विज्ञातानि, विकल्पितानि मया यथा नाम्ना परमेतानि भिद्यन्ते नार्थेन, यत सर्वाण्यपि पुष्टिकारणतयाऽमीपामन्तरङ्गलोकाना मनर्थकारणतया च वहिरङ्गजनाना समानानि वर्तन्ते ततो यद्येतेपामस्ति कश्चिदर्थेन भेदस्त मे निवेदयतु माम । विमर्श प्राह—ननु निवेदित एव प्रत्येकमेतेपा गुणान् वर्णयता मया परिस्फुटोऽर्थभेद तथापि स यदि न विज्ञातो भद्रेण तत पुनरपि निवेदयामि । तत कथितो विमर्शेन महानद्यादीना वस्तूना प्रत्येक भावार्थ, वुद्ध प्रकर्पेण ।

### वैल्लहलकुमारकथा

अत्रान्तरे नरवाहन प्राह—भदन्त । वयमपि वोधनीयास्तेपा भावार्थं, तत प्रवोधितो नरवाहननरेन्द्रोऽपि तेन भगवता विचक्षणसूरिणा । ततोऽगृहीतसङ्केतयाऽभिहित—भद्र। ससारिजीव । यद्येव तर्हि ततोऽहमपीदानी तेपा महानद्यादिवस्तूना वोधनीया भवताऽर्थभेदम् । ससारिजीवेनोक्त—भद्रे। स्पष्टदृष्टान्तमन्तरेण न त्वया सुखावसेयमेतेपा प्रविभक्त स्वरूप, अतो दृष्टान्त कथयिष्ये । अगृहीतसङ्केतयोक्त—अनुग्रहो मे, ससारिजीवेनाभिहित—अस्ति सभावितसमस्तवृत्तान्त भुवनोदर नाम नगर, तत्र च निवारको हरिहरहिरण्यगर्भादीनामपि प्रभुशक्तेरनादिर्नाम राजा, तस्य च नीतिमार्गनिपुणा(ऽ)विच्छेदकारिणी

कुयुक्तिमिथ्याविकल्पजल्पाना **सस्थितिर्नाम** महादेवी, तयोश्चात्यन्तवल्लभोऽस्ति **वेल्लहलो** नाम तनय, स च गाढमाहारप्रियो दिवानिशमनवरत विविधखाद्यपेयानि भक्षयन्नास्ते, तत सजात महाऽजीर्णं, प्रकुपिता दोषा, सपन्नोऽन्तर्लीनो ज्वर, तथापि न विच्छिद्यते तस्याहाराभिलाष, प्रवृत्ता चोद्यानिकागमनेच्छा, तत कारिता भूरिप्रकारा भक्ष्यविशेषा, ताश्च पश्यतस्तस्य एनमेन च भक्षया[भक्षयिष्या मु]मीति प्रवर्तन्ते चित्तकल्लोला, लौल्यातिरेकेण च भक्षित सर्वेषामाहारविशेषाणा स्तोकस्तोक, तत परिवेष्टितो मित्रवृन्देन, परिकरितोऽन्त पुरेण पठता बन्दिवृन्देन, ददद्यान विविधैर्विलासैर्महता विमर्देन, प्राप्तो मनोरमे कानने, निविष्टं सुखमासन, तत्र चोपविष्टस्य विरचिता पुरतो विविधाहारविस्तारा, ततश्चाहारलेशभक्षणेन पवनस्पर्शादिना गाढतर प्रवृद्धो ज्वर, लक्षितश्च पार्श्ववर्तिना **समयज्ञाभिधानेन** महावैद्यसुतेन, **यदुत** आतुरवदनो दृश्यते कुमार । ततो दत्तस्तेन शङ्खयोर्हस्त, निरूपितानि सन्धिस्थानानि, निश्चितमनेन यथा—ज्वरित खल्वय कुमार । ततोऽभिहित समयज्ञेन—देव । न युक्त तव भोक्तु, प्रबलज्वर ते शरीर वर्तते, यतोऽत्यन्तमातुरा घूर्णते दृष्टि, आताम्रस्निग्ध वदनकमल, द्रगद्रगायेते शङ्खौ, धमधमायन्ते सन्धिस्थानानि, ज्वलतीव बहिस्त्वग्, दहतीव हस्त, ततो निवर्तस्व भोजनात्, गच्छ प्रच्छन्नापवरके, भजस्व निवात, कुरुष्व लङ्घनानि, पिब क्वथितमुदक, समाचर विधिनाऽस्य सर्वां प्रतिक्रिया, इतरथा सन्निपातस्ते भविष्यति । स तु वेल्लहलो दत्तदृष्टि पुरतो विन्यस्ते तस्मिन्नाहारविस्तारे एतदेतच्च भक्षयामीति भ्रमयन्नपरापरेषु खाद्यप्रकारेषु स्वीयमन्त करण, नाकर्णयति तत्तदा वैद्यसुतभाषित, नाकलयति अस्य हितरूपता, न चेतयते त वारणार्थं लगन्तमपि शरीरे। ततो वारयतो वचनेन, धारयतो हस्तेन तस्य समयज्ञस्य समक्षमेव बलात्प्रवृत्तो भक्षयितुमाहार वेल्लहल । तत समुत्कटतयाऽजीर्णस्य, प्रबलतया ज्वरस्य न क्रमतेऽसौ गलकेनाहार, तथापि बलादेव क्रामित कियानपि वेल्लहलेन । तत समुद्वृत्त हृदय सजात कलमलक सपन्न वमन विमिश्रित च तेन वमनेन सर्वमपि पुरतो विन्यस्त भोजनम् । ततश्चिन्तित वेल्लहलेन—

क्षुधाक्षाम शरीर मे, नूनमूनतया भृशम् । एतद्धि वायुनाऽऽक्रान्तमन्यथा वमन कुत ॥१॥
एव स्थिते—रिक्तकोष्ठ शरीर मे, वाताक्रान्त विनङ्क्ष्यति । ततश्च प्रीणयामीद, भुञ्जे भूयोऽपि भोजनम् ॥२॥
ततोऽसौ वान्तिसमिश्र, तत् पुरस्थितभोजनम् । निर्लज्जो भोक्तुमारब्ध, सर्वेषामपि पश्यताम् ॥३॥
तद्दृष्ट्वा समयज्ञेन, प्रोक्त पूत्कुर्वता भृशम् । देव देव! न युक्त ते, कर्तुं काकस्य चेष्टितम् ॥४॥
मा च राज्य शरीर च, यशश्च शशिनिर्मलम् । देव! हारय भक्तेन, त्वमेकदिनभाविना ॥५॥
अन्यच्चेद सता निन्द्यममेध्य शौचदूषणम् । उद्वेगहेतुर्नो भक्त, देव खादितुमर्हति ॥६॥
देव! दुखात्मक चेद, सर्वव्याधिप्रकोपनम् । गाढमुल्वणदोषाणा, विशेषेण भवादृशाम् ॥७॥
का वाऽस्योपरि ते मूर्च्छा? यद्वाह्य पुद्गलात्मकम् । अतो देव! विहायेदमात्मान रक्ष यत्नत ॥८॥
इत्थ च समयज्ञस्य, रटतोऽपि वचस्तदा । स राजपुत्र श्रुत्वाऽपि, स्वचित्ते पर्यचिन्तयत् ॥९॥
अहो विमूढ खल्वेष, समयज्ञो न बुध्यते । नून मदीयप्रकृति, नावस्था न हिताऽहितम् ॥10॥
यो वातल क्षुधाक्षाम, भुञ्जान मा निषेधति । एतच्च दूषयत्येष, भोजन देवदुर्लभम् ॥११॥
तत्किमेतेन मूर्खेण ? भुञ्जे भोज्य यथेच्छया । स्वार्थसिद्धिर्मया कार्या, कि ममापरचिन्तया? ॥१२॥
तत. परिजनेनोच्चै, सहितेऽपि पुन पुन । समयज्ञे रटत्येव, भक्षित तेन भोजनम् ॥१३॥
तत प्रबलदोषोऽसौ, भक्षणानन्तर तदा । सन्निपात महाघोर, सप्राप्तो निजकर्मणा ॥१४॥
पुनर्वमनबीभत्से, ततस्तत्रैव भूतले । पश्यता पतितस्तेषा, काष्ठवन्नष्टचेतन ॥१५॥
स लोलमानस्तत्रैव, जघन्ये वान्तिकर्दमे । कुर्वन्घुरघुराराव, श्लेष्मापूर्णगलस्तदा ॥१६॥
अनाख्येयामचिन्त्या च, तेषामुद्रेककारिणीम् । अशक्यप्रतिकारा च, प्राप्तोऽवस्था सुदारुणाम् ॥१७॥
न शक्य समयज्ञेन, त्रातुमेष न बान्धवै । तदवस्थो न राज्येन, न देवैर्नापि दानवै ॥१८॥
केवल तदवस्थेन, लुठताऽशुचिकर्दमे । अनन्तकाल तत्रैव, स्थातव्य तेन पापिना ॥१९॥
तदेष भद्रे! दृष्टान्त, प्रस्तुताना परिस्फुट । वस्तूना भेदसिद्ध्यर्थं, मया तुभ्य निवेदित ॥20॥
ततोऽगृहीतसङ्केता, प्राह विह्वलमानसा । ससारिजीव! नैवेद, पौर्वापर्येण युज्यते ॥२१॥
यत—नद्यादिवस्तुभेदार्थं, कथित मे कथानकम् । त्वयेद क्व मे भाति, *क्वोष्ट्रो नीराजना क्व च?* ॥२२॥

अथास्ति कश्चित्सम्बन्धो, हन्त प्रस्तुतवस्तुनि । स्फुट कथानकस्यास्य, स इदानी निवेद्यताम् ॥२३॥
तत ससारिजीवेन, तद्दार्ष्टान्तिकयोजने । वहुभाषणखिन्नेन, तत्सखी सप्रचोदिता ॥२४॥
कथम्?–अस्या प्रज्ञाविशाले! त्व, नि शेष मत्कथानकम् । घटय प्रस्तुतार्थेन, निजशीलक(त)या स्फुटम् ॥२५॥

## कथोपनय

अथ प्रज्ञाविशालाऽऽह, काम भो कथयामि ते । भद्रेऽगृहीतसङ्केते! समाकर्णय साम्प्रतम् ॥२६॥
यस्ते वेल्लहलो नाम, राजपुत्रो निदर्शित । एपोऽनेन विशालाक्षि! प्रोक्तो जीव सकर्मक ॥२७॥
स एव जायते भद्रे! नगरे भुवनोदरे । अनादिसस्थितिसुत, स एव परमार्थत ॥२८॥
स एवानन्तरूपत्वाद्वहिरङ्गजन स्मृत । सामान्यरूपमुद्दिश्य, स चैक परिकीर्तित ॥२९॥
मनुष्यभावमापन्न, स प्रभु सर्वकर्मणाम् । महाराजसुतस्तेन, स प्रोक्तोऽनेन सुन्दरि । ॥30॥
तस्येव सत्का विज्ञेया, चित्तवृत्तिर्महाटवी । सुन्दरेतरवस्तूना, सा तस्यैव च कारणम् ॥३१॥
केवल यावदद्यापि, स आत्मान न वुध्यते । महामोहादिभिस्तावल्लुप्यते सा महाटवी ॥३२॥
यदा तु तेन विज्ञात, स स्यादात्मा कथञ्चन । तद्वीर्यं वीक्ष्य नश्यन्ति, महामोहादयस्तदा ॥३३॥
यावच्च ते चिवर्तन्ते, चित्तवृत्तौ महाभटा । महानद्यादिवस्तूनि, तावत्तस्या भवन्ति वै ॥३४॥
तेपामेव यतस्तानि, क्रीडास्थानानि भूभुजाम् । अतस्तेपु विनष्टेपु, तेपा नाश प्रकीर्तित ॥३५॥
एवञ्च स्थिते–अविज्ञातात्मरूपस्य, भद्रे! जीवस्य कर्मणा । महामोहनरेन्द्रे च, सप्रतापेऽटवीस्थिते ॥३६॥
यदा तानि विवर्धन्ते, जीवश्च वहु मन्यते । महानद्यादिवस्तूनि, नितरामात्मवैरिक ॥३७॥
तदा तानि स्ववीर्यण, यत्कुर्वन्ति पृथक् पृथक् । जीवस्य तद्विशेपार्थं, दृष्टान्तोऽय निवेदित [युग्मम्] ॥३८॥
स चैव योज्यते भद्रे! प्रस्तुताऽर्थेन पण्डिते । महानद्यादिवस्तूना, प्रत्येक भेदसिद्धये ॥३९॥

## विपयलम्पटस्य कर्माजीर्णम्

यथाऽऽहारप्रियो नित्य, राजपुत्रो निवेदित । तथाऽयमपि विज्ञेयो, जीवो विपयलम्पट ॥40॥
यथा च तस्य सजातमजीर्णं भूरिभक्षणात् । तथाऽस्यापि कुरङ्गाक्षि । कर्माजीर्णं प्रचक्षते ॥४१॥
पापाज्ञानात्मक तच्च, वर्तते कर्म दारुणम् । यत प्रमत्ततोद्भूता, तज्जन्य तत्पुर (पुलिन) द्वयम् ॥४२॥
यथा प्रकुपितास्तस्य, दोपा जातस्तनुज्वर । तथा रागादयोऽस्यापि, वर्धन्ते ज्वरहेतव ॥४३॥
यथा तथास्थितस्याऽपि, वुद्धिर्भोज्येपु धावति । नरेन्द्रदारकस्येह, तथाऽस्यापि दुरात्मन ॥४४॥
तथाहि–मनुष्यभावमापन्न, कर्माऽजीर्णं सुदारुणम् । रागादिकोपन मूढश्चित्तज्वरविधायकम् ॥४५॥
जीवो न लक्षयत्येप, ततश्चास्य प्रवर्तते । अहितेपु सदा वुद्धि, प्रकाम [श मु] सुखकाम्यया ॥४६॥
तथाहि स्वादते मद्य, निद्राऽत्यन्त सुखायते । विकथा प्रतिभात्युच्चैरस्याऽनेकविकल्पना ॥४७॥
इप्ट क्रोध प्रियो मानो, माया चात्यन्तवल्लभा । लोभ प्राणसमो मन्ये, रागद्वेपो मनोगता(रतौ प्र) ॥४८॥
कान्त स्पर्शो रसोऽभीप्ट, काम गन्धश्च सुन्दर । अत्यन्तदयित रुप, रोचते च कलध्वनि ॥४९॥
विलेपनानि ताम्वूलमलङ्कारा सुभोजनम् । माल्य वरस्त्रियो वस्त्र, सुन्दर प्रतिभासते ॥50॥
आसन ललित यानं, शयन द्रव्यसञ्चया । अलीककीर्तिश्च जने, रुचिताऽस्य दुरात्मन ॥५१॥
चित्तवृत्तिमहाटव्या, भद्रे! सततवाहिनी । महानदी वहत्युच्चै, सेयमस्य प्रमत्तता ॥५२॥
यथा च तदवस्थस्य, राजपुत्रस्य सुन्दरि! । समुत्पन्ना विलासेच्छा, जात[यातु मु]मुद्यानिका मन[मति मु] ॥५३॥

## उद्यानिकाकाङ्क्षा

कारितानि च भोज्यानि, लोल्येन प्राशितानि च । निर्गतश्च विलासेन, पुरात्प्राप्तश्च कानने ॥५४॥
निविष्टमासन दिव्यमुपविष्टश्च तत्र स । विस्तारित पुरो भक्त, नानाखाद्यकसयुतम् ॥५५॥
तथास्यापि प्रमत्तस्य, जीवस्य वरलोचने! । कर्माजीर्णात्समुत्पन्ने, भीपणेऽपि मनोज्वरे ॥५६॥
जायन्ते चित्तकल्लोला, नानारूपा क्षणे क्षणे । यथोपार्ज्य धन भूरि, विलसामि यथेच्छया ॥५७॥

करोम्यन्त पुर दिव्य, भुञ्जे राज्य मनोहरम् । महाप्रासादसङ्घात, कारये काननानि च [षड्भि कुलकम्] ॥५८॥
ततश्च–महाविभवसपन्न, क्षपिताखिलवैरिक । श्लाघित सर्वलोकेन, पूरितार्थमनोरथ ॥५९॥
शब्दादिसुखसन्दोहसागरे मग्नमानस । तिष्ठामि सततानन्दो, नान्यन्मानुष्यके फलम् ॥60॥
सेयमुद्यानिकाकाङ्क्षा, विज्ञेया सुन्दरि! त्वया । ततो जीवो महारम्भै, कुरुते द्रव्यसञ्चयम् ॥६१॥
यथेष्ट दैवयोगेन, विधत्तेऽन्त पुरादिकम् । शब्दादिसुखलेश च, किंचिदास्वादयेदपि ॥६२॥
अस्य जीवस्य जानीहि, तदिद मृगवीक्षणे! । कारण मृष्टभोज्याना, तल्लवाना च भक्षणम् ॥६३॥
ततोऽलीकविकल्पैश्च, सुखनिर्भरमानस । विलासलास्यसङ्गीतहास्यविब्बोकतत्पर ॥६४॥
युतो दुर्ललितैर्नित्य, द्यूतमद्यरतिप्रिय । सन्मार्गनगराद् दूरे, याति दौशील्यकानने ॥६५॥
एतन्महाविमर्दन, पुरनिर्गमन मतम् । उद्यानप्रापण चेद, विद्धि नीलाब्जलोचने ॥६६॥
स मिथ्याभिनिवेशाख्ये, स्थितो विस्तीर्णविष्टरे । कर्माख्यपरिवारेण, रचितानि ततोऽग्रत ॥६७॥
मनोहराणि चित्राणि, लब्धास्वादो विशेषत । प्रमादवृन्दभोज्यानि, सुन्दरत्वेन मन्यते [युग्मम्] ॥६८॥
प्रमत्ततामहानद्या, पुलिन पद्मलोचने ! । तत्तद्विलसित विद्धि, वृत्तान्तस्यास्य कारणम् ॥६९॥

## धर्माचार्यमहावैद्यकृतवारणनिष्फलताया हेतु

ततो यथाऽन्नलेशेन, भक्षितेन तनुज्वर । वायुस्पर्शादिभिश्चोच्चैर्वर्धितस्तस्य दारुण ॥70॥
लक्षितश्च सुवैद्येन, वारितश्च सुभोजनात् । न चासौ बुध्यते किंचिद्भोजनाक्षिप्तमानस ॥७१॥
जीवस्यापि तथा भद्रे! कर्माजीर्णोद्भवो ज्वर । प्रमादात्तेन वर्धेत, तथैवाज्ञानवायुना ॥७२॥
लक्षयन्ति च त वृद्ध, धर्माचार्या महाधिय । समयज्ञमहावैद्या, वारयन्ति च देहिनम् [चतुर्भि कलापकम्] ॥७३॥
कथम्?–अनादिभवकान्तारे, भ्रान्त्वा भद्रातिसुन्दरम् । अवाप्य मानुष जन्म, महाराज्यमिवातुलम् ॥७४॥
कर्माजीर्णज्वराक्रान्त, प्रमादमधुनाऽपि भो ! । मा सेवस्व महामोहसन्निपातस्य कारणम् ॥७५॥
कुरुष्व ज्ञानचारित्रसम्यग्दर्शनलक्षणाम् । चित्तज्वरविघाताय, जैनी भद्र! प्रतिक्रियाम् ॥७६॥
स तु प्रमादभोज्येषु, क्षिप्तचित्तो न बुध्यते । तत्तादृश गुरोर्वाक्य, पापो जीव प्रपञ्चितम् ॥७७॥
ततश्च–उन्मत्त इव मत्त इव, ग्रह[ग्राह मु]ग्रस्त इवातुर । गाढसुप्त इवोद्भ्रान्तो, विपरीत विचेष्टते ॥७८॥
स एष भद्रे! सर्वोऽपि, चित्तविक्षेपमण्डप । महानदीकूलसस्थो, जीवस्यास्य विजृम्भते ॥७९॥

## तृष्णाप्रभाव

यथा च राजपुत्रेण, भोजन चारुलोचने ! । अगच्छदपि कण्ठेन, गमित लौल्यदोषत ॥80॥
तदनन्तरमेवोच्चैर्वान्त तत्रैव भोजने । जीवस्यापि विजानीहि, समानमिदमञ्जसा ॥८१॥
तथाहि–कर्माजीर्णज्वरग्रस्त, सदा विह्वलमानस । जराजीर्णतनुक्षामो, रोगार्दितशरीरक ॥८२॥
सर्वेषामक्षमो भोगे, भोगानामेष वर्तते । तथापि जायते नास्य, स्तोकाऽपि विरतौ मति ॥८३॥
ततश्च गाढलौल्येन, तथाभूतोऽपि सेवते । प्रमादवृन्दभोज्यानि, वार्यमाणो विवेकिभि ॥८४॥
शतप्राप्तौ सहस्रेच्छा, सहस्रे लक्षरोचनम् । लक्षे कोटिगता बुद्धि, कोटौ राज्यस्य वाञ्छनम् ॥८५॥
राज्ये देवत्ववाञ्छाऽस्य, देवत्वे शक्रतामति । शक्रत्वेऽपि गतस्यास्य, नेच्छापूर्ति कथञ्चन ॥८६॥
सुपुत्रैर्वरयोषाभि, सर्वकामैर्मुहुर्मुहु । नास्याभिलाषविच्छित्ति, कोटिशोऽपि निषेवितै ॥८७॥
सगृह्णाति ततो मूढ, सर्वार्थान् सुखकाम्यया । ते तु दुखाय जायन्ते, सज्वरस्येव भोजनम् ॥८८॥
जलज्वलनदायादचौरराजादिभिस्तथा । तस्यार्थभोजनस्यौच्चैर्वलाद्वान्तिर्विधाप्यते ॥८९॥
हृत्कलमलक घोर, वम्यमान सहत्ययम् । आराटीर्मुञ्चति प्राज्या, कृपाहेतुर्विवेकिनाम् ॥90॥
तदेषा चारुसर्वाङ्गि ! चित्तविक्षेपमण्डपे । जीवस्य विलसत्युच्चैस्तृष्णानाम्नी सुवेदिका ॥९१॥

## विपर्यासमाहिमा

यत्पुनश्चिन्तयत्येव, तदा वेल्लहल किल । वाताक्रान्त शरीर मे, ततोऽभूद्मन मम ॥९२॥

एतच्च रिक्तकोष्टचाद्वायुनाऽभिभविष्यते । अत सपी[सप्रा मु]णयामीद, भुञ्जे भूयोऽपि भोजनम् ॥९३॥
जीवोऽपि चिन्तयत्येव, तदिद तारवीक्षणे । । पापज्वरवशादुच्चैर्नष्टे विभवसञ्चये ॥९४॥
मृतेषु च कलत्रेषु, पुत्रेषु स्वजनेषु च । अन्येषु च विनष्टेषु, चित्तावन्धेषु मन्यते ॥९५॥
न मया चेष्टित नीत्या, न कृत चारु पौरुषम् । नाश्रितो वा वरस्वामी, न कृता वा प्रतिक्रिया ॥९६॥
तेनेद मम सर्वस्व, पत्नी वा चारुदर्शना । पुत्रा वा बान्धवा वाऽपि, विनष्टा पश्यतोऽपि मे ॥९७॥
न चैषा विरहे नून, वर्तेऽह क्षणमप्यत । उपार्जयामि भूयोऽपि, तान्येवोत्साहयोगत ॥९८॥
उपार्जितानि सन्नीत्या, रक्षिष्यामि प्रयतत । अजागलस्तनस्येव, जीवितव्य वृथाऽन्यथा ॥९९॥
सर्वमस्य विजानीहि, तदिद सुभ्रु । भावत । जीवस्याऽस्य विपर्यासनामविष्टरचेष्टितम् ॥100॥

अविद्यामहामोहविजृम्भितम्

यथा च भोक्तुमारब्ध, स निर्लज्जतया पुन । पश्यत सर्वलोकस्य, वान्तिसमिश्रभोजनम् ॥१०१॥
तत सपरिवारेण, तेन पूत्कुर्वता भृशम् । वारित समयज्ञेन, तद्दोषाश्च निवेदिता ॥१०२॥
स तु तत्र गुणारोपाद्भोजने बद्धमानस । त रटन्तमनालोच्य, भक्षण कृतवानिति ॥१०३॥
तथाऽयमपि चार्वङ्गि । जीव कर्ममलीमस । भुक्तोत्सृष्टेषु भोगेषु, निर्लज्ज सप्रवर्तते ॥१०४॥
परमाणुमया ह्येते भोगा शब्दादयो मता । सर्वे चैकैकजीवेन, गृहीता परमाणव ॥१०५॥
गृहीत्वा मुक्तपूर्वाश्च, बहुशो भवकोटिषु । भुक्तवान्तास्तत सत्यमेते शब्दादयोऽनघे। ॥१०६॥
यच्चास्य किञ्चिल्लोकेऽत्र, चित्तावन्धविधायकम् । जीवस्य वस्तु सन्नेत्रे। तत्सर्वं पुद्गलात्मकम् ॥१०७॥
तथापि भद्रे। पापात्मा, पश्यता विमलात्मनाम् । आबद्धचित्तस्तत्रैव जम्बाले सप्रवर्तते ॥१०८॥
कृपापरीतचित्ताश्च, भोगकर्दमलम्पटम् । त जीव वारयन्त्येते, धर्माचार्या प्रयत्नत ॥१०९॥
**कथम्?**–अनन्तानन्दसद्वीर्यज्ञानदर्शनरूपक । देवस्त्व भद्र। नो युक्तमतो भोगेषु वर्तनम् ॥110॥
अन्यच्चामी विवर्तन्ते, सर्वे भोगा क्षणे क्षणे । अपरापररूपेण, तुच्छमास्थानिबन्धनम् ॥१११॥
वान्ताशुचिसमाश्चैते वर्णितास्तत्त्वदर्शिभि । भद्र परमदेवोऽपि, नातोऽमून् भोक्तुमर्हति ॥११२॥
दुखोपढौकिताश्चामी दुखरूपाश्च तत्त्वत । दुखस्य कारण तेन, वर्जनीया मनीषिणा ॥११३॥
ये च बाह्याणुनिष्पन्नास्तुच्छा गाढमनात्मका । तेषु क पण्डितो राग, कुर्यादात्मस्वरूपवित् ॥११४॥
अतो ममोपरोधेन, भद्र। भोगेषु कुत्रचित् । अन्येषु च प्रमादेषु, मा प्रवर्तिष्ट साम्प्रतम् ॥११५॥
तदेव पद्मपत्राक्षि। निवारयति सद्गुरौ । प्रमादभोजने सक्त, स जीवो हृदि मन्यते ॥११६॥
अहो विमूढ खल्वेष, वस्तुतत्त्व न बुध्यते । आह्लादजनकानेष, यो भोगानपि निन्दति ॥११७॥
**तथाहि**–मद्य वरस्त्रियो मास, गान्धर्वं मृष्टभोजनम् । माल्यताम्बूलनेपथ्यविस्तारा सुखमासनम् ॥११८॥
अलङ्कारा सुधाशुभ्रा, कीर्तिर्भुवनगामिनी । सद्रत्ननिचया शूर, चतुरङ्ग महाबलम् ॥११९॥
राज्य प्रणतसामन्त, यथेष्टा सर्वसम्पद । यद्येतद्दुखहेतुस्ते, किमन्यत्सुखकारणम्? [त्रिभिविशेषकम्] ॥120॥
विप्रलब्धा कुसिद्धान्तै, शुष्कपाण्डित्यगर्विता । ये नूनमीदृशा लोके, भोगभोजनवञ्चिता ॥१२१॥
ते मोहेन स्वय नष्टा, परानपि कृतोद्यमा । नाशयन्ति हितात्तेऽतो[हित ते मु]वर्जनीया विजानता ॥१२२॥
**तथाहि**–यो भोगरहितो मोक्षो, वञ्चन तदुदाहृतम् । तदर्थं कस्त्यजेद् दृष्टमिद भोगसुखामृतम्? ॥१२३॥
एवविधविकल्पैश्च, गुरुवाक्यपराड्मुख। अभूतगुणसङ्घात, तेषु भोगेषु मन्यते ॥१२४॥
**कथम्?**–स्थिरा ममैते शुद्धाश्च, सुखरूपाश्च तत्त्वत । एतदात्मक एवाहमलमन्येन केनचित् ॥१२५॥
आस्तामेष गृहीतेन, मोक्षेण प्रशमेन वा । अह तु नेदृशैर्वाक्यैरात्मान वञ्चयामि भो। ॥१२६॥
**ततश्च**–सद्धर्मावेदनव्याजाद्गाढ पूत्कुर्वतोऽग्रत । गुरोरपि प्रवर्तेत प्रमादाशुचिकर्दमे ॥१२७॥
सा सर्वेयमविद्याख्या जीवस्यास्य वरानने। । महामोहनरेन्द्रस्य, गात्रयष्टिर्विजृम्भते ॥१२८॥
यथा स भोजन भूयो, भक्षयित्वा पुनर्वमन् । सजातसन्निपातत्वात्पतितस्तत्र भूतले ॥१२९॥

लुठन्नितस्ततो गाढ, मुञ्चन्नाक्रन्दभैरवान् । अनाख्येयामचिन्त्या च, प्राप्तोऽवस्था सुदारुणाम् ॥130॥
न त्रात केनचिल्लोके, तदवस्थ स्थित परम् । तथायमपि विज्ञेयो, जीव सर्वाङ्गसुन्दरि। ॥१३१॥
**तथाहि**–यदा प्रमत्ततायुक्तस्तद्विलासपरायण । विक्षिप्तचित्तस्तृष्णार्तो, विपर्यासवश गत ॥१३२॥
अविद्याऽन्धीकृतो जीव, सक्त ससारकर्दमे । आरोपितगुणव्रातस्तत्रैव विषयादिके ॥१३३॥
सर्वज्ञ धर्मसूरि च, वारयन्त मुहुर्मुहु । सुवैद्यसन्निभ जीवो, विमूढमिति मन्यते [त्रिभिविशेषकम्] ॥१३४॥
**ततश्च**–पापोऽजीर्णज्वराक्रान्त, स जीवो वान्तिसन्निभे । त रटन्तमनालोच्यासत्प्रमादे प्रवर्तते ॥१३५॥
तदा नि शेषदोषौघभरपूरितमानसे । सन्निपातसमो घोरो, महामोहोऽस्य जृम्भते [युग्मम्] ॥१३६॥
**ततश्च** तद्वशेनाय, जीव सुन्दरलोचने। पश्यतामेव निश्चेष्टो, भवत्येव विवेकिनाम् ॥१३७॥
मूत्रान्त्राशुचिजम्बालवसारुधिरपूरिते । निर्बोल निपतत्येव, नरके वान्तिपिच्छले ॥१३८॥
लुठतीतस्ततस्तत्र, मुञ्चन्नाक्रन्दभैरवान् । सहते तीव्रदु खौघ, यद्वाचा गोचरातिगम् ॥१३९॥
तथा विचेष्टमान च, वरगात्रि। तपोधना । ज्ञानालोकेन पश्यन्ति, त जीव शुद्धदृष्टय ॥140॥
केवलं सन्निपातेन, समाक्रान्त भिषग्वरा । अचिकित्स्यमिम ज्ञात्वा, वर्जयन्ति महाधिय ॥१४१॥
ततश्च तदवस्थस्य, तस्य तारविलोचने। । कोऽन्य स्यात्त्रायको जन्तोर्घोरे दु खौघसागरे ॥१४२॥
अन्यच्च तदवस्थोऽपि, जीवोऽय वल्गुभाषिणि। । प्रमादभोजनास्वादलाम्पटय नैव मुञ्चति ॥१४३॥
दोपा प्रवलता यान्तस्ततो मुष्णन्ति चेतनाम् । अत्यर्थ च महामोहसन्निपातो विवर्धते ॥१४४॥
**एवं च स्थिते**–ससारचक्रवालेऽत्र, रोगमृत्युजराकुले । अनन्तकालमासीनस्त्यक्त सद्धर्मवान्धवै ॥१४५॥
तदिद निजवीर्येण, जीवस्यास्य महावल । सन्निपातसमो भद्रे। महामोहो विचेष्टते ॥१४६॥
**किञ्च**–प्रवर्तकश्च सर्वेषा, कार्यभूतश्च तत्त्वत । महामोहनरेन्द्रोऽय, नद्यादीना सुलोचने ॥१४७॥
तदेव राजपुत्रीयो, दृष्टान्तोऽनेन सुन्दरि। । महानद्यादिवस्तूना, दर्शितो भेदसिद्धये ॥१४८॥
अथाद्यापि न ते जाता, प्रतीति सुपरिस्फुटा । भूयोऽपीद समासेन, प्रस्पष्ट कथयामि ते ॥१४९॥

### प्रमत्ततादीना सक्षिप्तस्वरूपम्

विषयोन्मुखता याऽस्य, सा विज्ञेया प्रमत्तता । तत्तद्विलसित विद्धि, यद्भोगेषु प्रवर्तनम् ॥150॥
प्रवृत्तौ लौल्यदोषेण, शून्यत्व यत्तु चेतस । ज्ञेय स चित्तविक्षेपो, जीवस्यास्य मृगेक्षणे ॥१५१॥
तृप्तेरभावो भोगेषु, यो भुक्तेपु सुवहुष्वपि । उत्तरोत्तरवाञ्छा च, तृष्णा गीता मनीषिभि ॥१५२॥
पापाद्भोगेषु जातेषु, जातनष्टेषु॰वा पुन । बाह्योपायेपु यो यतो, विपर्यास स उच्यते ॥१५३॥
अनित्याशुचिदु खेषु, गाढ भिन्नेषु जीवत । विपरीता मतिस्तेषु, या साऽविद्या प्रकीर्तिता ॥१५४॥
एतेषामेव वस्तूना, सर्वेषा य प्रवर्तक । एतैरेव च यो जन्यो, महामोह स गीयते ॥१५५॥
तदेव भिन्नरूपाणि, तानि सर्वाणि सुन्दरि। । महानद्यादिवस्तूनि, चिन्तनीयानि यत्नत ॥१५६॥
प्राहाऽगृहीतसङ्केता, चारु चारु निवेदितम् । सत्य प्रज्ञाविशालाऽसि, नास्ति मे सशयोऽधुना ॥१५७ऽ
तत्तिष्ठ त्व विशालाक्षि। साम्प्रतं विगतश्रम । निवेदयतु ससारिजीव एव तत परम् ॥१५८॥
नरवाहनराजाय, यद्विचक्षणसूरिणा । निवेदित प्रकर्षाय, विमर्शेन च धीमता ॥१५९॥
तत ससारिजीवेन, प्रोक्त विमललोचने। । निवेदयाम्यह तत्ते, विमर्शेन यदीरितम् ॥160॥
तत प्रोक्त विमर्शेन, भद्र। ज्ञातो यदि त्वया । महानद्यादिभावार्थस्ततोऽन्यत्कि निवेद्यताम् ? ॥१६१॥
प्रकर्ष प्राह मे माम । नामतो गुणतोऽधुना । महामोहनरेन्द्रस्य, परिवार निवेदय ॥१६२॥
या चेय दृश्यते स्थूला, राजविष्टरसस्थिता । एपा किनामिका ज्ञेया ? किगुणा वा वराङ्गना ? ॥१६३॥

### महामूढताप्रभाव

विमर्श प्राह नन्वेषा, प्रसिद्धा गुणगह्वरा । भो । महामूढता नाम, भार्याऽस्य पृथिवीपते ॥१६४॥
चन्द्रिकेव निशानाथे, स्वप्रभेव दिवाकरे । एपा देवी नरेन्द्रेऽस्मिन्, देहाऽभेदेन वर्तते ॥१६५॥

अत एव गुणा ऽस्य, वर्णिता भद्र! भूपते । ज्ञेयास्त एव नि शेषास्त्वयाऽमुष्या विशेषत ॥१६६॥
प्रकर्ष प्राह यद्येव, ततोऽतिनिकटे स्थित । महाराजाधिराजस्य, कृष्णवर्ण सुभीषण ॥१६७॥
निरीक्षमाणो नि शेष, राजक वक्रचक्षुषा । य एष दृश्यते सोऽय, कतमो माम! भूपति ? ॥१६८॥

## मिथ्यादर्शनमहिमा

विमर्श प्राह विख्यातो, राज्यसर्वस्वनायक । मिथ्यादर्शननामाय, महामोहमहत्तम ॥१६९॥
अनेन तन्त्रित राज्य, वहत्यस्य महीपते । वलसम्पादकोऽत्यर्थममीपामेष भूभुजाम् ॥170॥
अत्रैव सस्थितो भद्र! निजवीर्येण देहिनाम् । यदेष वहिरङ्गाना, कुरुते तन्निवोध मे ॥१७१॥
अदेवे देवसङ्कल्पमधर्मे धर्ममानिताम् । अतत्त्वे तत्त्ववुद्धि च, विधत्ते सुपरिस्फुटम् ॥१७२॥
अपात्रे पात्रतारोपमगुणेषु गुणग्रहम् । ससारहेतौ निर्वाणहेतुभाव करोत्ययम् [युग्मम] ॥१७३॥
तथाहि–हसितोद्गीत विव्वोकनाटचाटोपपरायणा । हता कटाक्षविक्षेपैर्नारीदेहार्धधारिण ॥१७४॥
कामान्धा परदारेषु, सक्तचित्ता क्षतत्रपा । सक्रोधा सायुधा घोरा, वैरिमारणतत्परा ॥१७५॥
शापप्रसादयोगेन, लसच्चित्तमलाविला । ईदृशा भो! महादेवा, लोकेऽनेन प्रतिष्ठिता [त्रिभिर्विशेषकम्] ॥१७६॥
ये वीतरागा सर्वज्ञा, ये शाश्वतसुखेश्वरा । क्लिष्टकर्मकलातीता, निष्कलाश्च महाधिय ॥१७७॥
शान्तक्रोधा गताटोपा, हास्यस्त्रीहेतिवर्जिता । आकाशनिर्मला धीरा, भगवन्त सदाशिवा ॥१७८॥
शापप्रसादनिर्मुक्तास्तथापि शिवहेतव । त्रिकोटिशुद्धशास्त्रार्थदेशका परमेश्वरा ॥१७९॥
ये पूज्या सर्वदेवाना, ये ध्येया सर्वयोगिनाम् । ये चाज्ञाकारणाराध्या, निर्द्वन्द्वफलदायिन ॥180॥
ते मिथ्यादर्शनाख्येन, लोकेऽनेन स्ववीर्यत । देवा प्रच्छादिता भद्र!, न ज्ञायन्ते विशेषत [पञ्चभि कुलकम्] ॥१८१॥
तथा–हिरण्यदान गोदान, धरादान मुहुर्मुहु । स्नान पान च धूमस्य, पञ्चाग्नितपन तथा ॥१८२॥
तर्पण चण्डिकादीना, तीर्थान्तरनिपातनम् । यतेरेकगृहे पिण्डो, गीतवाद्ये महादर ॥१८३॥
वापीकूपतडागादिकारण च विशेषत । यागे मन्त्रप्रयोगेण, मारण पशुसहते ॥१८४॥
कियन्तो वा भणिष्यन्ते? भूतमर्दनहेतव । रहिता शुद्धभावेन, ये धर्मा केचिदीदृशा ॥१८५॥
सर्वेऽपि वलिनाऽनेन, मुग्धलोके प्रपञ्चत । ते मिथ्यादर्शनाह्वेन, भद्र! ज्ञेया प्रवर्त्तिता । [पञ्चभि कुलकम्] ॥१८६॥
क्षान्तिमार्दवसन्तोषशौचार्जवविमुक्तय । तप सयमसत्यानि, व्रह्मचर्यं शमो दम ॥१८७॥
अहिसास्तेयसद्बुद्ध्या वैराग्यगुरुभक्तय । अप्रमादसदैकाग्र्यनैर्ग्रन्थ्यपरतादय ॥१८८॥
ये चान्ये चित्तनैर्मल्यकारिणोऽमृतसन्निभा । सद्धर्मा जगदानन्दहेतवो भवसेतव ॥१८९॥
तेषामेष प्रकृत्यैव, महामोहमहत्तम । भद्र । [भवेत् मु]प्रच्छादनो लोके, मिथ्यादर्शननामक [चतुर्भि कलापकम्] ॥190॥
तथा–श्यामाकतण्डुलाकारस्तथा पञ्चधनुशत । एको नित्यस्तथा व्यापी, सर्वस्य जगतो विभु ॥१९१॥
क्षणसन्तानरूपो वा, ललाटस्थो हृदि स्थित । आत्मेति ज्ञानमात्र वा, शून्य वा सचराचरम् ॥१९२॥
पञ्चभूतविवर्तो वा, व्रह्मोप्तमिति वाऽखिलम् । देवोप्तमिति वा ज्ञेय, महेश्वरविनिर्मितम् ॥१९३॥
प्रमाणवाधित तत्त्व, यदेवविधमञ्जसा । सद्बुद्धि कुरुते तत्र, महामोहमहत्तम [चतुर्भि कलापकम्] ॥१९४॥
जीवाजीवौ तथा पुण्यपापसवरनिर्जरा । आस्रवो वन्धमोक्षौ च, तत्त्वमेतन्नवात्मकम् ॥१९५॥
सत्य प्रतीतित सिद्ध, प्रमाणेन प्रतिष्ठितम् । तथापि निह्नुते भद्र! तदेष जनदारुण [युग्मम्] ॥१९६॥
तथा–गृहिणो ललनाऽवाच्यमर्दका भूतघातिन । असत्यसन्धा पापिष्ठा, सङ्ग्रहोपग्रहे रता ॥१९७॥
तथाऽन्ये पचने नित्यमासक्ता पाचनेऽपि च । मद्यपा परदारादिसेविनो मार्गदूषका ॥१९८॥
तप्तायोगोलकाकारास्तथापि यतिरूपिण । ये तेषु कुरुते भद्र! पात्रवुद्धिमय जने [त्रिभिर्विशेषकम्] ॥१९९॥
सज्ज्ञानध्यानचारित्रतपोवीर्यपरायणा । गुणरत्नधरा[ना मु]धीरा, जङ्गमा कल्पपादपा ॥200॥
ससारसागरोत्तारकारिणो दानदायिनाम् । अचिन्त्यवस्तुवोहित्थतुल्या ये पारगामिन ॥२०१॥
तेषु निर्मलचित्तेषु, पुरुषेषु जडात्मनाम् । एषोऽपात्रधिय धत्ते, महामोहमहत्तम [त्रिभिर्विशेषकम्] ॥२०२॥

तथा–कौतुक कुहक मन्त्रमिन्द्रजाल रसक्रियाम् । निर्विषीकरण तन्त्रमन्तर्धानं सविस्मयम् ॥२०३॥
औत्पातमान्तरिक्ष च, दिव्यमाङ्ग स्वर तथा । लक्षण व्यञ्जनं भौम, निमित्तं च शुभाऽशुभम् ॥२०४॥
उच्चाटनं सविद्वेषमायुर्वेद सजातकम् । ज्योतिष गणित चूर्णं, योगलेपास्तथाविधा ॥२०५॥
ये चान्ये विस्मयकरा, विशेषा. पापशास्त्रजा । अन्ये भूतोपमर्दस्य, हेतव शाठ्यकेतव ॥२०६॥
तानेव ये विजानन्ति, नि शङ्काश्च प्रयुञ्जते । न धर्मबाधा मन्यन्ते, शठा पापपरायणा. ॥२०७॥
त एव गुणिनो धीरास्ते पूज्यास्ते मनस्विन । त एव वीरास्ते लाभभाजिनस्ते मुनीश्वरा. ॥२०८॥
इत्येवं निजवीर्येण, बहिरङ्गजनेऽमुना । मिथ्यादर्शनसञ्ज्ञेन, भद्र । पापा प्रकाशिता [सप्तभि कुलकम्] ॥२०९॥
ये पुनर्मन्त्रतन्त्रादिवेदिनोऽप्यतिनि स्पृहा । निवृत्ता लोकयात्राया, धर्मातिक्रमभीरव. ॥210॥
मूकान्धा परवृत्तान्ते, स्वगुणाभ्यासने रता । असक्ता निजदेहेऽपि, किं पुनर्द्रविणादिके? ॥२११॥
कोपाहङ्कारलोभाद्यैर्दूरत परिवर्जिता । तिष्ठन्ति शान्तव्यापारा, निरपेक्षास्तपोधना ॥२१२॥
न दिव्यादिकमाख्यान्ति, कुहकादि न कुर्वते । मन्त्रादीन्नानुतिष्ठन्ति, निमित्त न प्रयुञ्जते ॥२१३॥
लोकोपचार नि शेष, परित्यज्य यथासुखम् । स्वाध्यायध्यानयोगेषु, सक्तचित्ता सदाऽऽसते ॥२१४॥
ते निर्गुणा अलोकज्ञा, विमूढा भोगवञ्चिता । अपमानहता दीना, ज्ञानहीनाश्च कुर्कुटा· ॥२१५॥
इत्येव निजवीर्येण, बहिरङ्गजनेऽमुना । ते मिथ्यादर्शनाह्वेन, स्थापिता भद्र। साधव· [सप्तभिः कुलकम्] ॥२१६॥
तथा–उद्वाहन च कन्याना, जनन पुत्र सहते । निपातन च शत्रूणा, कुटुम्बपरिपालनम् ॥२१७॥
यदेवमादिक कर्म, घोरससारकारणम् । तद्धर्म इति सस्थाप्य, दर्शित भवतारणम् [युग्मम्] ॥२१८॥
य पुनर्ज्ञानचारित्रदर्शनाढ्यो विमुक्तये । मार्ग सर्वोऽपि सोऽनेन, लोपितो लोकवैरिणा ॥२१९॥
ततश्च भद्र। यत्तुभ्य, समासेन मयोदितम् । वीर्यं महत्तमस्यास्य, ब्रुवाणेन पुरा यथा ॥220॥
अदेवे देवसङ्कल्पमधर्मे धर्ममानिताम् । अतत्त्वे तत्त्वबुद्धि च, करोत्येप जडात्मनाम् ॥२२१॥
अपात्रे पात्रतारोपमगुणेषु गुणाऽऽग्रहम् [गुणग्रहम् मु]। ससारहेतौ निर्वाणहेतुभावं करोत्ययम् ॥२२२॥
तदिद लेशत सर्वं, प्रविवेच्य निवेदितम् । विस्तरेण पुनर्वीर्यं, कोऽस्य वर्णयितुं क्षम· ? ॥२२३॥
अन्यच्चाय निजे चित्ते, मन्यते भद्र। सर्वदा । मदोद्धत प्रकृत्यैव, महामोहमहत्तम ॥२२४॥
निक्षिप्तभर एवाय(ह?), राज्यसर्वस्वनायक । महामोहनरेन्द्रेण, कृत सर्वत्र वस्तुनि ॥२२५॥
एवञ्च स्थिते–विश्रम्भार्पितचित्ताय, मयाऽस्मै हितमुच्चकै । अन्यव्यापारशून्येन, कर्तव्य ननु सर्वदा ॥२२६॥

## चित्तविक्षेपतृष्णाविपर्यासमहिमा

ततश्च मण्डपं चित्तविक्षेप, तृष्णानाम्नी च वेदिकाम् । गाढ समारयत्येप, विपर्यासं च विष्टरम् ॥२२७॥
समारितानि चानेन, यदेतानि वहिर्जने । कुर्वन्ति तदहं वच्मि, समाकर्णय साम्प्रतम ॥२२८॥
यदुन्मत्तग्रहग्रस्तसन्निभो भद्र। सर्वदा । जनो दोलायतेऽत्यर्थं, धर्मबुद्ध्या वराकक. ॥२२९॥
कथम्?–करोति भैरवे पातं, याति मूढो महापथम् । शीतेन म्रियते माघे, कुर्वाणो जलगाहनम् ॥230॥
पञ्चाग्नितपने रक्तो, दह्यते तीव्रवह्निना । गवाश्वत्थादिवन्दाक्यास्फोटयति मस्तकम ॥२३१॥
कुमारीब्राह्मणादीनामतिदा[या मु]नेन निर्धन । सहते दुःखसङ्घातं(तीव्रवेदनाः प्र)श्राद्ध· कृतमलः किल ॥२३२॥
परित्यज्य धनं गेहं, वन्धुवर्गं च दुःखित । अटाट्यते विदेशेषु, तीर्थयात्राभिलापुकः ॥२३३॥
पितृतर्पणकार्येण, देवाऽऽराधनकाम्यया । निपातयति भूतानि, विधत्ते च धनव्ययम ॥२३४॥
[illegible]वनैः खाद्यैर्भक्तिनिर्भरमानस । तप्तायोगोलकाकारं, तर्पयते जनम ॥२३५॥
[illegible] विवेकिलोकस्य, धर्मबुद्ध्या विनाटित. । [illegible] धर्मं, करोत्येप पृथग्जनं ॥२३६॥
न लक्षयन्ति मूढात्मा, भूतमर्दं मुदाकमम् । [illegible], [illegible] ॥२३७॥
[illegible], स्वपापस्य विशुद्धये । [illegible] ॥२[illegible]
[illegible], कुरुते जीवमर्दनम् । [illegible] नैव, [illegible] ॥[illegible]

तिला भस्मीकृता वह्नौ, दग्ध पेय *तवेत्यहो* । धनमुद्दालित धूर्तैर्जनस्तु हृदि भावित ॥240॥
न च सन्मार्गवक्तार, पूत्कुर्वन्तोऽप्यनेकधा । लोकेनानेन गण्यन्ते, प्रोच्यन्ते च विमूढका ॥२४१॥
तदिद भद्र! नि शेष, मिथ्यादर्शनसञ्ज्ञिना । अमुना सस्कृतस्यास्य, मण्डपस्य विजृम्भितम् ॥२४२॥
यत्पुनर्म्रियमाणोऽपि, लोकोऽय नैव मुञ्चति । भद्र! कामार्थलाम्पट्य नानाकारैर्विडम्बनै ॥२४३॥
कथम्? अप्सरोऽर्थं करोत्येष, नदीकुण्डप्रवेशनम् । पत्यु सङ्गमनार्थं च, दहत्यात्मानमग्निना ॥२४४॥
स्वर्गार्थं भूतिकामेन, पुत्रस्वजनकाम्यया । अग्निहोत्राणि यागाश्च, कुरुतेऽन्यच्च तादृशम् ॥२४५॥
दान ददाति चाशास्ते, भूयादेतन्मृतस्य मे । आशास्ते क्लेशनिर्मुक्त, न फल मोक्षलक्षणम् ॥२४६॥
यत्किञ्चित्कुरुते कर्म, तन्निदानेन दूषितम् । अर्थकामप्रद मेऽद, परलोके भविष्यति ॥२४७॥
तदस्य सकलस्येय, मिथ्यादर्शनसस्कृता । वृत्तान्तस्येह तृष्णाख्या, वेदिका भद्र ! कारणम् ॥२४८॥
यत्पुनर्भद्र! लोकोऽय, दिङ्मूढ इव मानव । शिव गन्तुमनास्तूर्णं, विपरीत पलायते ॥२४९॥
**कथम्** ?–देव विगर्हते मूढ, सर्वज्ञ सर्वदर्शिनम् । वेदा प्रमाणमित्येव, भाषते निष्प्रमाणकम् ॥250॥
धर्मं च दूषयत्येष, जडोऽहिंसादिलक्षणम् । प्रख्यापयति यत्नेन, याग पशुनिबर्हणम् ॥२५१॥
जीवादितत्त्व मोहेनापहुतेऽलीकपण्डित । सस्थापयति शून्य वा, पञ्चभूतात्मकादि वा ॥२५२॥
ज्ञानादिनिर्मलं पात्र, निन्दत्येष जडात्मक (दुरात्मक प्र) । सर्वारम्भप्रवृत्तेभ्यो, दानमुच्चै प्रयच्छति ॥२५३॥
तप क्षमा निरीहत्वममून्दोषाश्च मन्यते । शाठ्यमुक्तौ (युक्त) पिशाचत्व, षिङ्गत्व मनुते गुणान् ॥२५४॥
शुभ्र ज्ञानादिक मार्गं, मन्यते धूर्तकल्पितम् । कोलमार्गादिक मूढो, मनुते शिवकारणम् ॥२५५॥
कलयत्यतुल धर्मं, विशेषेण गृहाश्रमम् । नि शेषद्वन्द्वविच्छेदा, गर्हते यतिरूपताम् ॥२५६॥
तदनेनात्र रूपेण, मिथ्यादर्शनसस्कृतम् । लोके भो ! विलसत्येतद्विपर्यासाख्यविष्टरम् ॥२५७॥
अन्यच्चास्यैव सामर्थ्याल्लोका ध्वान्तवशगता । यदन्यदपि कुर्वन्ति, भद्र! तत्ते निवेदये ॥२५८॥
जराजीर्णकपोला ये, हास्यप्रायाश्च योषिताम् । वलीपलितखालित्यपिप्लुव्यङ्गादिदूषिता ॥२५९॥
तेऽपि त्रपन्ते जरसा, विकाररसनिर्भरा । कथयन्त्याऽऽत्मनो जन्म, गाढमित्वरकालिकम् युग्मम् ॥260॥
अनेकद्रव्ययोगैश्च, काष्ण्र्यसम्पत्तये किल । तमसेव स्व[स मु]हार्दैन, रञ्जयन्ति शिरोरुहान् ॥२६१॥
जनयन्ति मृजा देहे, नानास्नेहैर्मुहुर्मुहु । यथा कपोलशैथिल्य, यत्नतश्छादयन्ति ते ॥२६२॥
भ्रमन्ति विकट मूढास्तरुणा इव लीलया । वयस्तम्भनिमित्त च, भक्षयन्ति रसायनम् ॥२६३॥
स्वच्छाया दर्पणे विम्व, निरीक्षन्ते जलेषु च । क्लिश्यन्ते राढया नित्य, देहमण्डनतत्परा ॥२६४॥
आहूतास्तात तातेति, ललनाभिस्तथापि ते । पितामहसमा सन्त, कामयन्ते विमूढका ॥२६५॥
सर्वस्य प्रेरणाकारा, सन्तोऽपि नितरा पुन । कुर्वन्तो हास्यविव्वोकान्, गाढ गच्छन्ति हास्यताम् ॥२६६॥
जराजीर्णशरीराणा, येषामेषा विडम्बना । ते भद्र! सति तारुण्ये, कीदृशा सन्तु जन्तव ? ॥२६७॥
श्लेष्मान्त्रक्लेदजम्वालपूरिते ते कलेवरे । आसक्तचित्ता खिद्यन्ते, यावज्जीव वराकका ॥२६८॥
अनन्तभवकोटीभिर्लब्ध मानुष्यक भवम् । वृथा कुर्वन्ति निर्ह्रीका, धर्मसाधनवर्जिता ॥२६९॥
आयति न निरीक्षन्ते, देहतत्त्व न जानते । आहारनिद्राकामार्त्तास्तिष्ठन्ति पशुसन्निभा ॥270॥
ततस्तेषामपारेऽत्र, पतिताना भवोदधौ । निर्नष्टशिष्टचेष्टाना, पुनरुत्तरण कुत ? ॥२७१॥
तदनेनापि रूपेण, मिथ्यादर्शनसस्कृतम् । इद विजृम्भते भद्र! विपर्यासाऽऽख्यमासनम् ॥२७२॥
**अन्यच्च**–प्रशमानन्दरूपेषु, सारेषु नियमादिषु । वशेनास्य भवेद्भद्र! दु खवुद्धिर्जडात्मनाम् ॥२७३॥
गत्वरेषु सुतुच्छेषु, दु खरूपेषु देहिनाम् । भोगेषु सुखवुद्धि स्यादासनस्यास्य तेजसा ॥२७४॥
तथैष भुवनख्यात, प्रधानोऽत्र महावल । वहिरङ्गजनस्योच्चै, सर्वानर्थविधायक ॥२७५॥
मया भद्र! समासेन, मिथ्यादर्शननामक । महामोहनरेन्द्रस्य, कथितस्ते महत्तम ॥२७६॥
तत प्रकर्षो हृष्टात्मा[ऽदुष्टात्मा मु] श्रुत्वा मातुलभाषितम् । उत्क्षिप्य दक्षिण पाणि, त प्रतीदमभाषत ॥२७७॥

चारु चारु कृत माम। यदेष कथितस्त्वया । या त्वेषाऽर्धासनेऽस्यैव, सा किनाम्नी वराङ्गना ? ॥२७८॥

### कुदृष्टिजाता पाखण्डिन

विमर्शोऽवददेषाऽपि, समानबलसाहसा । अस्यैव भार्या विज्ञेया, कुदृष्टिर्नाम विश्रुता ॥२७९॥
ये दृश्यन्ते विमार्गस्था, बहिरङ्गजने सदा । भद्र! पाषण्डिन केचित्तेषामेषैव कारणम् ॥280॥
ते चामी नामभिर्भद्र! वर्ण्यमाना मया स्फुटम् । ज्ञेया देवादिभेदेन, विभिन्नाश्च परस्परम् ॥२८१॥
**तद्यथा**—शाक्यास्त्रैदण्डिका शैवा, गौतमाश्चरकास्तथा । सामानिका सामपरा, वेदधर्माश्च धार्मिका ॥२८२॥
आजीविकास्तथा शुद्धा, विद्युद्दन्ताश्च चुञ्चुणा । माहेन्द्राश्चारिका धूमा, बद्धवेषाश्च खुड्खुका ॥२८३॥
उल्का पाशुपता कोला, काणादाश्चर्मखण्डिका । सयोगिनस्तथोलूका, गोदेहा यज्ञतापसा ॥२८४॥
घोषपाशुपताश्चान्ये, कन्दच्छेदा दिगम्बरा । कामर्दका कालमुखा, पाणिलेहास्त्रिराशिका ॥२८५॥
कापालिका· क्रियावादा, गोव्रता मृगचारिण । लोकायता शङ्खधमा, सिद्धवादा कुलतपा ॥२८६॥
तापसा गिरिरोहाश्च, शुचयो राजपिण्डका । ससारमोचकाश्चान्ये, सर्वावस्थास्तथा परे ॥२८७॥
अज्ञानवादिनो ज्ञेयास्तथा पाण्डुरभिक्षव । कुमारव्रतिकाश्चान्ये, शरीररिपवस्तथा ॥२८८॥
उत्कन्दाश्चक्रवालाश्च, त्रपवो हस्तितापसा । चित्तदेवा बिलावासास्तथा मैथुनचारिण ॥२८९॥
अम्वरा असिधाराश्च, तथा माठरपुत्रका । चन्द्रोद्गमिका(ख्या)श्चान्ये, तथैवोदकमृत्तिका ॥290॥
एकैकस्थालिका मङ्खा, पक्षापक्षा गजध्वजा । उलूकपक्षा मात्रादिभक्ता कण्टकमर्दका ॥२९१॥
कियन्तो वाऽत्र गण्यन्ते ? नानाभिप्रायसस्थिता । पाषण्डिनो भवन्त्येते, भो! नानाविधनामका ॥२९२॥
देवैर्वादैस्तथा वेषै, कल्पैर्मोक्षविशुद्धिभि । वृत्तिभिश्च भवन्त्येते, भिन्नरूपा परस्परम् ॥२९३॥
**तथाहि**— रुद्रेन्द्रचन्द्रनागेन्द्रबुद्धोपेन्द्रविनायका । निजाकूतवशादेतैरिष्टा देवा पृथक् पृथक् ॥२९४॥
ईश्वरो नियति कर्म, स्वभाव काल एव वा । जगत्कर्तेति वादोऽय, सर्वेषा भिन्नरूपक ॥२९५॥
त्रिदण्डकुण्डिकामुण्डवल्कचीवरभेदत । वेष परस्पर भिन्न, स्फुट एवोपलक्ष्यते ॥२९६॥
कल्पोऽपि भक्ष्याभक्ष्यादिलक्षण स्वधिया किल । अन्योऽन्य भिन्न एवैषा, तीर्थिना भद्र! वर्तते ॥२९७॥
विध्यातदीपरूपाभ, सुखदु खविवर्जित । एषा पाषण्डिना भद्र! मोक्षो भिन्न परस्परम् ॥२९८॥
निजाकूतवशेनैव, विशुद्धिरपि तीर्थिकै । अमीभिर्भद्र! सत्त्वाना, भिन्नरूपा निवेदिता ॥२९९॥
कन्दमूलफलाहारा, केचिद्धान्याशिनोऽपरे । वृत्तितोऽपि विभिद्यन्ते, ततस्ते भद्र! तीर्थिका ॥300॥
एव च स्थिते—अमी वराका सर्वेऽपि, दोलायन्ते भवोदधौ । अस्या कुदृष्टिर्वीर्येण, शुद्धधर्मबहिष्कृता ॥३०१॥
तत्त्वमार्गमजानन्तो, विवदन्ते परस्परम् । स्वाग्रह नैव मुञ्चन्ति, रूष्यन्ति हितभाषिणे ॥३०२॥
तदेषा भुवनख्याता, मिथ्यादर्शनवत्सला । कुदृष्टिर्विलसत्येव, वहिरङ्गजनाहिता ॥३०३॥
यस्त्वेष विष्टरे तुङ्गे, निविष्ट प्रविलोक्यते । प्रसिद्ध एव भद्रस्य, स नून रागकेसरी ॥३०४॥
एन राज्ये निधायोच्चैर्महामोहनराधिप । गतचिन्ताभरो नून, कृतार्थो वर्ततेऽधुना ॥३०५॥
केवल दत्तराज्येऽपि, महामोहनरेश्वरे । सविशेष करोत्येष, विनय नयपण्डित ॥३०६॥
महामोहनरेन्द्रोऽपि, सर्वेषामग्रत स्फुटम् । अस्यैव भो सुपुत्रस्य, प्रभुत्व ख्यापयत्यलम् ॥३०७॥
तदेव स्नेहसबद्धौ, पितापुत्रौ परस्परम् । एतावेव वशीकर्तुं, क्षमौ भद्र! जगत्त्रयम् ॥३०८॥
यावद्विप्रतपत्येष, नरेन्द्रो रागकेसरी । वहिरङ्गजने तावत्कौतस्त्य सुखसङ्गम ? ॥३०९॥
यतोऽय भद्र! ससारसागरोदरवर्तिषु । बहिर्लोके पदार्थेषु, प्रीतिमुत्पादयत्यलम् ॥310॥
सक्लिष्टपुण्यजन्येषु, सक्लिष्टेषु स्वरूपत । सक्लेशजनकेष्वेव, सवध्नाति पृथग्जनम् ॥३११॥

### रागत्रयम्

अन्यच्च भद्र! पार्श्वस्थ, यदस्य पुरुषत्रयम् । रक्तवर्णमतिस्निग्धदेह च प्रविभाव्यते ॥३१२॥
एते हि निजवीर्येण, शरीरादविभेदिन । अनेन विहिता भद्र! त्रयोऽप्यात्मवयस्यका ॥३१३॥

अतत्त्वाभिनिवेशाख्य, प्रथमोऽय नरोत्तम । दृष्टिराग इति प्रोक्त, स एवापरसूरिभि ॥३१४॥
अय हि भद्र। तीर्थ्यानामात्मीयात्मीयदर्शने । करोति चेतसोऽत्यन्तमावन्धमनिवर्तकम् ॥३१५॥
द्वितीयो भवपाताख्य, पुरुषो भद्र। गीयते । अयमेवापरै प्राज्ञै, स्नेहराग इतीरित ॥३१६॥
अय तु कुरुते द्रव्यपुत्रस्वजनसन्ततौ । मूर्च्छातिरेकतो भद्र। चेतसो गाढवन्धनम् ॥३१७॥
अभिष्वङ्गाभिधानोऽय, तृतीय पुरुष किल । गीतो विषयरागाख्य, स एव मुनिपुङ्गवै ॥३१८॥
अय तु भद्र। लोकेऽत्र, भ्रमन्नुद्दामलीलया । शव्दादिविषयग्रामे, लौल्यमुत्पादयत्यलम् ॥३१९॥
नरत्रयस्य सामर्थ्यादस्य भद्र। जगत्रयम् । आक्रान्तमेव मन्येऽह, रागकेसरिणा पुन ॥320॥
सन्मार्गमत्तमातङ्गकुम्भनिर्भेदनक्षम । स्ववीर्याक्रान्तभुवन, सत्योऽय रागकेसरी ॥३२१॥

### मूढता

यात्वेषा दृश्यते भद्र। निविष्टाऽस्यैव विष्टरे। अस्यैव भार्या सा ज्ञेया, मूढता लोकविश्रुता ॥३२२॥
ये केचिदस्य विद्यन्ते, गुणा भद्र। महीपते । तेऽस्या सर्वे सुभार्याया, विज्ञेया सुप्रतिष्ठिता ॥३२३॥
यत शरीरनिक्षिप्ता, पार्वतीमिव शङ्कर । एनामेष सदा राजा, धारयत्येव मूढताम् ॥३२४॥
ततश्च–अन्योऽन्याऽनुगतो नित्य, यथा देहस्तथाऽनयो । अविभक्ता विवर्तन्ते, गुणा अपि परस्परम् ॥३२५॥
यस्त्वेष वामके पार्श्वे, निविष्टोऽस्यैव भूपते । भद्र। द्वेषगजेन्द्रोऽसौ, प्रतीत प्रायशस्तव ॥३२६॥

### द्वेषगजेन्द्र

अत्रापि च महामोहनरेन्द्रस्य सुतोत्तमे । चित्त विश्रान्तमेवोच्चैर्गुणा कल्याणकारका ॥३२७॥
यत.–जन्मना लघुरप्येष, रागकेसरिणोऽधुना । वीर्येणाभ्यधिको लोके, नरेन्द्रो भद्र। वर्तते ॥३२८॥
तथाहि–न भय यान्ति दृष्टेन, रागकेसरिणा जना । दृष्ट्वा द्वेषगजेन्द्र तु, जायन्ते भीत[त्वमु]कम्पिता ॥३२९॥
यावदेष महावीर्यश्चित्ताटव्या विजृम्भते । वहिरङ्गजने तावत्कौतस्त्य प्रीति(सुख प्र)सङ्गम ? ॥330॥
येऽत्यन्तसुहृदो लोका, स्नेहनिर्भरमानसा । तेषामेष प्रकृत्यैव, चित्तविश्लेषकारक ॥३३१॥
चित्तवृत्तिमहाटव्या, चलत्येष यदा यदा । तदा तदा भवन्त्येव, जनास्तेऽत्यन्तदु खिता ॥३३२॥
परलोके पुनर्यान्ति, नरके तीव्रवेदने । आवद्धमत्सरा वैर, प्रविधाय परस्परम् ॥३३३॥
भद्र। द्वेषगजेन्द्रोऽय, यथार्थो नात्र सशय । यस्य गन्धेन भज्यन्ते, विवेका कलभा इव ॥३३४॥
या त्वस्य भार्या तद्वार्त्ता, शोकेनैव निवेदिता । अत एव न पार्श्वस्था, दृश्यते साऽविवेकिता ॥३३५॥

### मकरध्वजवेदत्रयरतय

प्रकर्ष प्राह यस्त्वेष, निविष्टस्तुङ्गविष्टरे । नरत्रयपरीवार, पृष्ठतोऽस्यैव भूपते ॥३३६॥
रक्तवर्णोऽतिलोलाक्षो, विलासोल्लासतत्पर । पृष्ठापीडिततूणीर, सचाप पञ्चवाणक ॥३३७॥
भ्रमद्भ्रमरझङ्कारहारिगीतविनोदित । विलसद्दीप्तिलावण्यवर्ण[र्ण्य मु]या वरयोषिता ॥३३८॥
अस्या एव तनुश्लेषवक्त्रचुम्बनलालस । कमनीयाकृति सोऽय, कतमो माम । भूपति ? चतुर्भि कलापकम् ॥३३९॥
विमर्श प्राह नन्वेष, महाश्चर्यविधायक । उद्दामपौरुषो लोके, प्रसिद्धो मकरध्वज ॥340॥
यद्येषोऽद्भुतकर्तव्यो, भवता नावधारित । न किञ्चिदपि विज्ञात, भद्राद्यापि ततस्त्वया ॥३४१॥
यो भद्र। श्रूयते लोके, परमेष्ठी पितामह । सोऽनेन कारितो गौरीविवाहे वालविप्लवम् ॥३४२॥
स एव चाप्सरोनृत्त(नृत्य प्र)रूपविक्षिप्तमानस । अनेनैव कृतो भद्र। पञ्चवक्त्रधर किल ॥३४३॥
यो लोके जगतो व्यापी, श्रूयते किल केशव । अनेन कारित सोऽपि, गोपीना पादवन्दनम् ॥३४४॥
अन्यच्च भद्र। सोऽनेन, सुप्रसिद्धो महेश्वर । दापितोऽर्धं शरीरस्य, गौर्यै विरहकातर ॥३४५॥
उल्लासितवृहल्लिङ्ग, स एव सुरकानने । तद्भार्याक्षोभणे रक्तस्तथाऽनेन विनाटित ॥३४६॥
उत्पाद्य सुरते तृष्णा, स एवानेन धारित । दिव्य वर्षसहस्र भो, रतस्थ इति गीयते ॥३४७॥
अन्येऽपि वहवो लोके, मुनयो देवदानवा । वशीकृत्य कृता सर्वे, भद्रानेनात्मकिङ्करा ॥३४८॥

कोऽस्य लङ्घयितु शक्तो, नूनमाज्ञा जगत्त्रये? । आत्मभूत महावीर्यं, यस्येद पुरुषत्रयम् ॥३४९॥
अय हि प्रथमो भद्र! पुरुषोऽनघपौरुष । नाम्ना विज्ञाततद्वीर्यै, पुवेद इति गीयते ॥350॥
अमुष्य तात! वीर्येण, बहिरङ्गा मनुष्यका पारदार्ये प्रवर्तन्ते, जायन्ते कुलदूषणा ॥३५१॥
द्वितीय पुरुषो ह्येष, स्त्रीवेद इति सूरिभि । व्यावर्णितो महातेजा, व्यालुप्तभुवनोदर ॥३५२॥
अस्य धाम्ना पुनस्तात । योषितो विगतत्रपा । विलङ्घ्य कुलमर्यादा, रज्यन्ते परपुरुषे ॥३५३॥
तृतीय पुरुषो भद्र! षण्डवेद इति स्मृत । येन दन्दह्यते लोको, बहिरङ्ग स्वतेजसा ॥३५४॥
आलप्यालमिद तावदस्य वीर्यविचेष्टितम् । अनिवेद्य जने येन, विगुप्यन्ते नपुसका ॥३५५॥
एतन्नरत्रय भद्र! पुरस्कृत्य प्रवर्तते । अविज्ञातबलोऽन्येषा, नूनमेष जगत्त्रये ॥३५६॥
या त्वेषा पद्मपत्राक्षी, रूपसौन्दर्यमन्दिरम् । अस्यैव वल्लभा भार्या, रतिरेषाऽभिधीयते ॥३५७॥
येऽनेन निर्जिता लोका, नरवीर्यपुरसरम् । तेषामेषा प्रकृत्यैव, सुखबुद्धिविधायिका ॥३५८॥
**तथाहि**–अस्या वीर्येण भो! लोका, दुखिता परमार्थत । तथापि तेऽदो मन्यन्ते, मकरध्वजनिर्जिता ॥३५९॥
**यदुत**–आह्लादजनकोऽस्मभ्य, हितोऽय मकरध्वज । प्रतिकूला पुनर्येऽस्य, कुतस्तेषा सुखोद्भव? ॥360॥
ततो रत्याऽनया भद्र! ते वशीकृतमानसा । जाता निर्मिथ्यभावेन, मकरध्वजकिङ्करा ॥३६१॥
तदादेशेन कुर्वन्ति, हास्यस्थान विवेकिनाम् । आत्मन सतत मूढा, नानारूप विडम्बनम् ॥३६२॥
**कथम्?**–रचयन्त्यात्मनो वेष, योषिता चित्तरञ्जनम् । आचरन्ति च मोहेन, देहे भूषणविभ्रमम् ॥३६३॥
तुष्यन्ति कामिनीलोललोचनार्धविलोकिता । वहन्ति हृदये प्रीति, तदालापैर्मनोरमै ॥३६४॥
भ्रमन्ति विकटै पादैरुन्नामितशिरोधरा । रामाकटाक्षविक्षिप्ता, सुभगा इति गर्विता ॥३६५॥
कुलटादृष्टिमार्गेषु तच्चित्ताक्षेपलम्पटा । निष्पी[निष्क्री मु]डयन्ति मोहान्धा, दन्तकान्[दत्त मु]कारण विना ॥३६६॥
इतस्तत प्रधावन्ति, दर्शयन्ति पराक्रमम् । तासा मनोऽनुकूल हि, ते कि कि यन्न कुर्वते ? ॥३६७॥
कुर्वन्ति चाटुकर्माणि, भाषन्ते किङ्करा इव । पतन्ति पादयोस्तासा, जायन्ते कर्मकारका ॥३६८॥
सहन्ते योषिता पादप्रहारान्मस्तकेन ते । मन्यमाना निजे चित्ते, मोहतस्तदनुग्रहम् ॥३६९॥
आस्वाद्य मद्यगण्डूष, योषावक्त्रसमर्पितम् । श्लेष्मोन्मिश्र च मन्यन्ते, स्वर्गादभ्यधिक सुखम् ॥370॥
ये नरा वीर्यभूयिष्ठा, ललनाभि स्वलीलया । भ्रूक्षेपेणैव कार्यन्ते, तेऽशुचेरपि मर्दनम् ॥३७१॥
तत्सङ्गमार्थं दह्यन्ते, सुरतेषु न तोषिण । दूयन्ते विरहे तासा, म्रियन्ते शोकविह्वला ॥३७२॥
अवधूताश्च खिद्यन्ते, रुण्टन्ति च बहिष्कृता । पररक्तस्वनारीभि, पात्यन्ते दुखसागरे ॥३७३॥
ईर्ष्यया च वितुद्यन्ते, स्वभार्यारक्षणोद्यता । एता विडम्बना भद्र! प्राप्नुवन्तीह ते भवे ॥३७४॥
परलोके पुनर्यान्ति, घोरे ससारनीरधौ । ये जाता रतिवीर्येण, मकरध्वजकिङ्करा ॥३७५॥
बहवश्चेदृशा प्रायो, बहिरङ्गा मनुष्यका । ये त्वस्य शासनातीता, विरलास्ते मनीषिण ॥३७६॥
तदय यस्त्वया पृष्टो, लेशोद्देशादसौ मया । परिवारयुतो भद्र! वर्णितो मकरध्वज ॥३७७॥
प्रकर्ष प्राह–मामेद, सुन्दर विहित त्वया । यमन्यमपि पृच्छामि, सन्देह त निवेदय ॥३७८॥
मकरध्वजपार्श्वस्थ, यदिद प्रविभाव्यते । कि नाम? कि गुण चेद? माम! मानुषपञ्चकम् ॥३७९॥

## हासतुच्छताऽरतय

विमर्श प्राह यस्तावदेष शुक्लो मनुष्यक । स हास इति विज्ञेयो, विषमोऽत्यन्तदुष्कर ॥380॥
अय हि कुरुते भद्र! निजवीर्येण मानुषम् । बहिरङ्ग विना कार्यं, सशब्दमुखकोटरम् ॥३८१॥
किञ्चिन्निमित्तमासाद्य, निमित्तविरहेण वा । स्व वीर्य दर्शयत्युच्चैर्येषामेष महाभट ॥३८२॥
महाकहकहध्वानैर्हसन्त शिष्टनिन्दिता । निर्वादितमुखास्तुच्छास्ते जने यान्ति लाघवम् युग्मम् ॥३८३॥
आशङ्काया पद लोके, जायन्ते निर्निमित्तकम् । जनयन्ति परे वैर, लभन्ते वक्त्रविभ्रमम् ॥३८४॥
मक्षिकामशकादीनामुपघात च देहिनाम् । आचरन्ति विना कार्य, परेषा च पराभवम् ॥३८५॥

तदिद भद्र। निशेषमिह लोके विजृम्भते । हासोऽय परलोकेऽस्मात्कर्मवन्ध सुदारुण ॥३८६॥
अस्त्यस्य तुच्छता नाम, सद्भार्या हितकारिणी । देहस्थाऽस्यैव पश्यन्ति, ता भो गम्भीरचेतस ॥३८७॥
एनमुल्लासयत्येव, निमित्तेन विना सदा । हास सा तुच्छता वत्स । लघुलोके यथेच्छया ॥३८८॥
यतो गम्भीरचित्ताना, निमित्ते सुमहत्यपि । मुखे विकासमात्र स्यान्न हास्य वहुदोषलम् ॥३८९॥
या त्वेषा कृष्णवर्णाङ्गी, गाढ बीभत्सदर्शना । दृश्यते ललना सेयमरतिर्नाम विश्रुता ॥390॥
किञ्चित्कारणमासाद्य, वहिरङ्गजने सदा । करोत्येष मनोदुख, जृम्भमाणासु(ऽति मु)दुसहम् ॥३९१॥

भयहीनसत्त्वते

यस्त्वेष दृश्यते भद्र। कम्पमानशरीरक । पुरुष स भयो नाम, प्रसिद्धो गाढदुसह ॥३९२॥
विलसन्नेष महाटव्यामेतस्या किल लीलया । वहिरङ्गजनानुच्चै, कुरुते कातराननान् ॥३९३॥
कथम् ?–त्रस्यन्तीह मनुष्यादे, कम्पन्ते पशुसहते । अर्थादिहानि मन्वाना, पलायन्तेऽतिकातरा ॥३९४॥
*अकस्मादेव जायन्ते, त्रस्तास्तरललोचना । जीविष्याम कथ चेति, चिन्तया सन्ति विह्वला* ॥३९५॥
मरिष्यामो मरिष्याम, इत्येव भावनापरा । मुधैव जीवित हित्वा, म्रियन्ते सत्त्ववर्जिता ॥३९६॥
जने च मा भूदश्लाघेत्येव भावेन विह्वला । नोचितान्यपि कुर्वन्ति, कर्माणि पुरुषाधमा (पुरुषा हता प्र) ॥३९७॥
स एष निकटस्थायिसप्तमानुषसम्पदा । विजृम्भते भयो भद्र।, वहिरङ्गजने सदा ॥३९८॥
छिद्रेऽच–पलायन रणे दैन्यमरीणा पादवन्दनम् । अस्यादेशेन निर्लज्जास्ते कुर्वन्ति नराधमा ॥३९९॥
तदेव भद्र। लोकेऽत्र, ये भयस्य वश गता । विनाटिता परत्राऽपि, यान्ति भीमे भवोदधौ ॥400॥
अस्यापि च शरीरस्था, भार्याऽस्ति पतिवत्सला । सवर्धिका कुटुम्वस्य, प्रोच्यते हीनसत्त्वता ॥४०१॥
ता हीनसत्त्वता देहाद्भार्यामेष न मुञ्चति । नून हि म्रियते भद्र। भयोऽय रहितस्तया ॥४०२॥

शोकदारुणे

भद्र। प्रत्यभिजानीषे, किमेन तु न साम्प्रतम्? । त तत्र नगरे शोक, यममु द्रक्ष्यसि स्फुटम् ॥४०३॥
अनेनैव तदा वार्ता, समस्ताऽपि निवेदिता । सोऽय समागतस्तूर्णं, शोको भद्र। पुनर्वले ॥४०४॥
अपेक्ष्य कारण किञ्चिदय लोके वहिर्गते । आविर्भूत करोत्येव, दैन्याक्रन्दनरोदनम् ॥४०५॥
इष्टैर्वियुक्ता ये लोका, निमग्नाश्च महापदि । अनिष्टै सप्रयुक्ताश्च, तस्य स्युर्वशवर्तिन ॥४०६॥
न लक्षयन्ति ते मूढा, यथैष रिपुरुच्चकै । अस्यादेशेन मुञ्चन्ति, आराटी केवल जडा ॥४०७॥
एष शोक किलास्माक, दुखत्राण करिष्यति । अय तु वर्धयत्येव, तेषा दुख निषेवित ॥४०८॥
न साधयन्ति ते स्वार्थं, धर्माद् भ्रश्यन्ति मानवा । प्राणैरपि वियुज्यन्ते, मूर्च्छासमीलितेक्षणा ॥४०९॥
ताडन शिरसोऽत्यर्थं, लुञ्चन कचसहते[सन्तते मु]। कुट्टन वक्षसो भूमौ, लोठन गाढविक्लवम् ॥410॥
तथाऽऽत्मोल्लम्वन रज्ज्वा, पतन च जलाशये । दहन वह्निना शैलशिखरादात्ममोचनम् ॥४११॥
भक्षण कालकूटादे, शस्त्रेणात्मनिपातनम् । प्रलापनमुन्माद च, वैक्लव्य दैन्यभाषणम् ॥४१२॥
अन्तस्ताप महाघोर, शब्दादिसुखवञ्चनम् । लभन्ते पुरुषा भद्र, ये शोकवशवर्तिन ॥४१३॥
इत्थ भूरितर दुख, प्राप्नुवन्तीह ते भवे । कर्मवन्ध विधायोच्चैर्यान्त्यमुत्र च दुर्गतौ ॥४१४॥
तदेष वहिरङ्गाना, दुखदो भद्र। देहिनाम् । किञ्चिल्लेशेन शोकस्ते, वर्णित पुरतो मया ॥४१५॥
अस्यापि च शरीरस्था, भावस्था[भवस्था मु]नाम दारुणा । विद्यते पतिका वत्स । शोकस्य गृहनायिका ॥४१६॥
साऽस्य सवर्धिका ज्ञेया, ता विना नैष[व मु]जीवति । अत एव शरीरस्था, धारयत्येष ता सदा[सर्वदा मु] ॥४१७॥

जुगुप्सा

या त्वेषा दृश्यते कृष्णा, भो सकोचितनासिका । नारी सा सूरिभिर्भद्र। जुगुप्सा परिकीर्तिता ॥४१८॥
इय तु वहिरङ्गाना, लोकाना मनसोऽधिकम् । व्यलीकभावमाधत्ते, तत्त्वदर्शनवर्जिनाम् ॥४१९॥
कृमिजालोल्वण देह, पूयक्लिन्न मलाविलम् । वस्तु दुर्गन्धि बीभत्स, ते हि दृष्ट्वा कथचन ॥420॥

कुर्वन्ति शिरस कम्प, नासिकाधूननं जडा । दूरत प्रपलायन्ते, मीलयन्ति च लोचने ॥४२१॥
हु हु हुमिति जल्पन्ति, वक्रा कुर्वन्ति कन्धराम् । विशन्ति शौचवादेन, सचेला शीतले जले ॥४२२॥
नासिका कुञ्चयन्त्युच्चैर्निष्ठीवन्ति मुहुर्मुहु । आश्लेषे वर्त्मचेलादे (वेलादे प्र) क्रुद्धा स्नान्ति पुन पुन ॥४२३॥
छायामपि च नेच्छन्ति, परेषा स्प्रष्टुमात्मना । जायन्ते शौचवादेन, वेताला इव दुखिता ॥४२४॥
चित्तशूकावशादेव, साक्षादुन्मत्तका अपि । केचिद्भद्र! प्रजायन्ते, ये जुगुप्सावश गता ॥४२५॥
परलोके पुनर्यान्ति, तत्त्वदर्शनवर्जिता । तमोऽभिभूतास्ते मूर्खा, घोरससारचारके ॥४२६॥
तदेव बहिरङ्गानां, लोकानां बहुदुखदा । किञ्चित्ते वर्णिता भद्र! जुगुप्साऽपि मयाऽधुना ॥४२७॥
प्रकर्ष प्राह दृश्यन्ते, यान्येतानि पुरो मया । निविष्टानि नरेन्द्राणामुत्सङ्गादिषु लीलया ॥४२८॥
गाढ दुर्दान्तचेष्टानि, चटुलानि विशेषत । आरक्तकृष्णवर्णानि, डिम्भरूपाणि षोडश ॥४२९॥
अमूनि नामभिर्मामं । गुणैश्च सुपरिस्फुटम् । अधुना वर्ण्यमानानि, श्रोतुमिच्छाम्यह त्वया ॥430॥

## कषायस्वरूपम्

विमर्श प्राह सर्वेषामेतेषा सूरिभि पुरा । सामान्यत कषायाख्या, भद्र! लोके प्रकाशिता ॥४३१॥
विशेषत पुनर्भद्र! यान्येतानीह वीक्षसे । महत्तमानि दुष्टानि, सर्वोषामग्रतस्तथा ॥४३२॥
चत्वारि गर्भरूपाणि, रौद्राकाराणि भावत । तान्यनन्तानुबन्धीनि, गीतानि किल सज्ञया ॥४३३॥
अमूनि च प्रकृत्यैव, मिथ्यादर्शननामक । अय महत्तमो भद्र! स्वात्मभूतानि पश्यति ॥४३४॥
ततश्च बहिरङ्गाना, लोकाना निजवीर्यत । एतान्यपि प्रकुर्वन्ति, मिथ्यादर्शनभक्तताम् ॥४३५॥
यत यावदेतानि जृम्भन्ते, डिम्भरूपाणि लीलया । चित्तवृत्तिमहाटव्या, तावत्ते बाह्यमानुषा ॥४३६॥
अनन्यचित्ता सततमेनमेव महत्तमम् । लोकवाक्यनिराकाङ्क्षा, सद्भक्त्या पर्युपासते ॥४३७॥
अत एव च—चित्तवृत्तिमहाटव्यामुल्लसत्स्वेषु ते जना । न तत्त्वमार्ग भावेन, प्रपद्यन्ते कदाचन ॥४३८॥
**एव स्थिते** —ये दोषा वर्णिता पूर्व, मिथ्यादर्शनसश्रया । बहिर्जनाना सर्वेषा, तेषामेतानि कारणम् ॥४३९॥
एतेभ्यो लघुरूपाणि, यानि चत्वारि सुन्दर! । अप्रत्याख्याननामानि, तानि गीतानि पण्डितै ॥440॥
एतानि निजवीर्येण, बहिरङ्गमनुष्यकान् । प्रवर्तयन्ति पापेषु, वारयन्ति निवर्तनम् ॥४४१॥
किम्वहुना?—यावदेतानि गाहन्ते, चित्तवृत्तिमहाटवीम् । तावद्भद्र । निवर्तन्ते, न ते पापादणोरपि ॥४४२॥
तत्त्वमार्गं प्रपद्येरन्नेतेषु विलसत्स्वपि । लभन्ते तद्बलात्सौख्य, विरति तु न कुर्वते ॥४४३॥
ततस्तेचात्र[ऽमुत्र मु] सतप्ता, निपतन्ति परत्र च । विधाय पापसघात, ससारगहने जना ॥४४४॥
यान्येतानि पुनर्भद्र! लघीयासि ततोऽपि च । प्रत्याख्यावारकाणीह, बुधास्तानि प्रचक्षते ॥४४५॥
अमूनि किल वल्गन्ते, यावदत्रैव मण्डपे । बहिरङ्गजना सर्वं, तावन्मुञ्चन्त्यघ न वै ॥४४६॥
किञ्चिन्मात्र तु मुञ्चेयु, पाप बाह्यजना किल । चित्तवृत्तिमहाटव्यामेतेषु विलसत्सु भो ॥४४७॥
एतान्यपि स्वरूपेण, तस्मात् सन्तापकारणम् । बहिर्जनाना कल्याणे विरतिस्तत्र कारणम् ॥४४८॥
एतेभ्योऽपि लघीयासि, यान्येतानीह सुन्दर! । वर्तन्ते गर्भरूपाणि, चत्वारि तव गोचरे ॥४४९॥
तानि सज्वलनाख्यानि, गीतानि मुनिपुङ्गवै । लीलया चटुलानीत्थमुल्लसन्ति मुहुर्मुहु ॥450॥
एतानि सर्वपापेभ्यो, विरतानामपि देहिनाम् । इहोल्लसन्ति कुर्वन्ति, बाह्याना चित्तविप्लवम् ॥४५१॥
दूषयन्ति ततो भूय, सर्वपापनिबर्हणम् । ते सातिचारा जायन्ते, वीर्येणैषा बहिर्जना ॥४५२॥
न सुन्दराणि सर्वेषा, तदेतान्यपि देहिनाम् । लघुरूपाणि दृश्यन्ते, तात! यद्यपि जन्तुभि ॥४५३॥
चतुष्टयानि चत्वारि, तदेतानि विशेषत । एतेषा नामभिर्भद्र । गुणैश्च कथितानि ते ॥४५४॥
प्रत्येक यानि नामानि, ये गुणाश्च विशेषत । एतेषा तत्पुनर्भद्र! को वा वर्णयितु क्षम? ॥४५५॥
तस्मात्ते कथयिष्यामि, विश्रब्ध कुत्रचित्पुन । प्रस्तावागतमेवेह, वीर्यमेषा विशेषत ॥४५६॥
**अन्यच्च** —एतेषा गर्भरूपाणा, मध्येऽष्टौ परया मुदा । यान्येतानि प्रनृत्यन्ति, रागकेसरिणोऽग्रत ॥४५७॥

तान्यस्मादेव जातानि, रागकेसरिण किल । अत्यन्तवल्लभान्यस्य, मूढतानन्दनानि च [युग्मम्] ॥४५८॥
यानि त्वेतानि चेष्टन्ते, क्रीडयाऽष्टौ मुहुर्मुहु । पुरो द्वेषगजेन्द्रस्य, गर्भरूपाणि सुन्दर। ॥४५९॥
अस्मादेव प्रसूतानि, प्रियाणि द्वेषभूपते । माताऽविवेकिताऽमीषा, सर्वेषा भद्र! गीयते [युग्मम्] ॥460॥
एव च स्थिते–महामोहनरेन्द्रस्य, यानि पौत्राणि सुन्दर। तत्पुत्रयोरपत्यानि, तात। विख्यातवीर्ययो ॥४६१॥
तेषाममीषा लोकेऽत्र, दोर्लालित्यविराजितम् । वीर्यं सहस्रजिह्वोऽपि, को निवेदयितु क्षम ? [युग्मम्] ॥४६२॥
पश्य पश्यात एवैषामेतानि निजचेष्टितै । शौर्ये सिद्धार्थकायन्ते, सर्वेषामेव भूभुजाम् ॥४६३॥
तदिद ते समासेन, मया तात । निवेदितम् । महामोहनरेन्द्रस्य, स्वाङ्गभूत कुटुम्बकम् ॥४६४॥
ये त्वमी वेदिकाऽभ्यर्णे, विवर्तन्ते महीभुज । ते महामोहराजस्य, स्वाङ्गभूता पदातय ॥४६५॥

विषयाभिलाष

तत्र च –य एष दृश्यते भद्र। रागकेसरिणोऽग्रत । आश्लिष्टललनो मृष्ट, ताम्बूल स्वादयन्नलम् ॥४६६॥
रणद्द्विरेफरिञ्छोलिसूचितोत्कटगन्धकम् । लीलाकमलमत्यर्थमाजिघ्रंश्च मुहुर्मुहु ॥४६७॥
स्वभार्याऽमलवक्त्राब्जे, कुर्वाणो दृष्टिविभ्रमम् । वल्लकीनूपुरारावकाकलीगीतलम्पट ॥४६८॥
यश्चैव विषयानेष, पञ्चापि किल लीलया । भुञ्जानो मन्यते सर्वमात्मनो मुष्टिमध्यगम् ॥४६९॥
भद्र। सोऽयमिहायाता, वय यस्य दिदृक्षया । रागकेसरिणो मन्त्री, लोके विख्यातपौरुष [पञ्चभि कुलकम्] ॥470॥
अस्यैव तानि वर्तन्ते, पुत्रभाण्डानि सुन्दर। । यानि मिथ्याभिमानेन, कथितानि पुराऽऽवयो ॥४७१॥
तद्वशेन जगत्सर्वं, वशीकृत्य महावल । भद्र। नून करोत्येव, चेष्टया तुल्यमात्मन ॥४७२॥
तथाहि–एतत्प्रयुक्तैर्ये दृष्टा, मानुषैर्भद्र। देहिन । ते स्पर्शरससद्गन्धरूपशब्देपु लालसा ॥४७३॥
कार्याऽकार्यं न पश्यन्ति, वुध्यन्ते नो हिताऽहितम् । भक्ष्याऽभक्ष्य न जानन्ति, धर्माऽऽचारवहिष्कृता ॥४७४॥
तन्मात्रलब्धसौहार्दा, वर्तन्ते सार्वकालिकम् । नान्यत्किञ्चन वीक्षन्ते, यथाऽसौ वर्तते जड [त्रिभिर्विशेषकम्] ॥४७५॥
दर्शनादेव निर्णीतो, वुद्ध्या च परिनिश्चित । रसनाजनको भद्र। स एवाय न सशय ॥४७६॥
रागकेसरिणो राज्य, तन्त्रयन्निखिल सदा । परवुद्धिप्रयोगेण, नेवेष प्रतिहन्यते ॥४७७॥
पुरुषा पण्डितास्तावद्वहिरङ्गा दृढव्रता । यावदेष स्ववीर्येण, तान्नो क्षिपति कुत्रचित् ॥४७८॥
यदा पुनर्महाप्राज्ञस्तानेष सचिव क्वचित् । आरभेत स्ववीर्येण, वहिरङ्गमनुष्यकान् ॥४७९॥
तदा ते निहतप्राया, वालिशा इव किङ्करा । व्रताऽऽग्रह विमुच्यास्य, जायन्ते विगतत्रपा [युग्मम्] ॥480॥
वर्धयत्येष साम्राज्यमेतेषामेव भूभुजाम् । वहिरङ्गजनस्यायममात्यो दु खद सदा ॥४८१॥
यत –अस्यादेशेन कुर्वन्ति, पाप ते वाह्यमानुषा । तच्च पाप कृत तेषामिहाऽमुत्र च दु खदम् ॥४८२॥
निपुणो नीतिमार्गेषु, गाढ निर्व्याजपौरुष । भेदक परचित्तानामुपायकरणे पटु ॥४८३॥
विदिताऽशेषवृत्तान्त, सन्धिविग्रहकारक । विकल्पवहुलो लोके, सचिवो नास्त्यमूदृश [युग्मम्] ॥४८४॥
कि चात्र वहुनोक्तेन? तावदेते नरेश्वरा । यावदेष महामन्त्री, तन्त्रको राज्यसहते ॥४८५॥

तत सहर्ष प्रकर्षोऽव्रवीत्–साधु माम। साधु, सुन्दर निर्णीत मामेन, न तिलतुषत्रिभागमात्रयाऽपि चलतीद, एवविध एवाय विषयाभिलाषो महामन्त्री, नास्त्यत्र सन्देह, तथाहि →

आकारदर्शनादेव, ते गुणा मम मानसे । आदावेव समारूढा, येऽस्य सवर्णितास्त्वया ॥४८६॥
विमर्श प्राह नाश्चर्यं, लक्षयन्ति भवादृशा । नराणा दृष्टमात्राणा, यद्गुणाऽगुणरूपताम् ॥४८७॥
तथाहि–ज्ञायते रूपतो जातिर्जाते शील शुभाऽशुभम् । शीलाद्गुणा प्रकाशन्ते, गुणै सत्त्व महाधियाम् ॥४८८॥
न केवल त्वयाऽस्यैव, दर्शनादेव लक्षिता । गुणा कि तर्हि? सर्वेषा, नूनमेषा महीभुजाम् ॥४८९॥
वुद्धेर्जातस्य ते भद्र। कि वा स्यादविनिश्चितम्? । यत्तु मा प्रश्नयस्येव, तात। सा तेऽभिजातता ॥490॥
प्रकर्ष प्राह→यद्येव, ततो माम। निवेद्यताम् । किनामिकेय भार्याऽस्य? मन्त्रिणो मुग्धलोचना ॥४९१॥

## महामोहपरिवारानन्त्यम्

विमर्शः प्राह→भद्रेय, भोगतृष्णाऽभिधीयते । गुणैस्तु तुल्या विज्ञेया, सर्वथाऽस्यैव मन्त्रिण ॥४९२॥
ये त्वेते पुरत केचित्पार्श्वत पृष्ठतोऽपरे । दृश्यन्ते भूभुजो भद्र। मन्त्रिणोऽस्य नतानना ॥४९३॥
दुष्टाभिसन्धिप्रमुखास्ते विज्ञेया महाभटा । महामोहनरेन्द्रस्य, स्वाङ्गभूता पदातय [युग्मम्] ॥४९४॥
अन्यच्च–महामोहनृपस्येष्टा, रागकेसरिणो मता । भृत्या द्वेषगजेन्द्रस्य, सर्वेऽप्येते महीभुज. ॥४९५॥
अनेन मन्त्रिणाऽऽदिष्टा, राज्यकार्येषु सर्वदा । एते भद्र। प्रवर्तन्ते, निवर्तन्ते च नान्यथा ॥४९६॥
ये केचिद्बाह्यलोकानां, क्षुद्रोपद्रवकारिण । अन्तरङ्गा महीपालास्तेऽमीषा मध्यवर्तिन ॥४९७॥
नार्यो डिम्भाश्च ये केचिदन्येऽप्येवविधा जने । अमीषां मध्यगा सर्वे, द्रष्टव्यास्ते महीभुजाम् ॥४९८॥
तदेते परिमातीता, निवेद्यन्ता कथ मया? । संक्षेपत समाख्याता, स्वाङ्गभूता पदातय ॥४९९॥
प्रकर्ष प्राह ये त्वेते, वेदिकाद्वारवर्तिन । निविष्टा भूभुज· सप्त, माम। मुत्कलमण्डपे ॥500॥
युक्ता सत्परिवारेण, नानारूपविराजिन । एते किनामका ज्ञेया ? किगुणा वा महीभुज ? ॥५०१॥

## ज्ञानावरणाद्या

विमर्श प्राह भद्रैते, सप्तापि वरभूभुज । महामोहनृपस्यैव, बहिर्भूता पदातय ॥५०२॥
तत्र च–य एष दृश्यते भद्र। सयुक्त पञ्चभिर्नरै । ज्ञानसवरणो नाम, प्रसिद्ध स महीपति ॥५०३॥
अत्रैव वर्तमानोऽय, बहि स्थ सकलं जनम् । करोत्यन्धं स्ववीर्येण, ज्ञानोद्योतविवर्जितम् ॥५०४॥
किं च–सान्द्राज्ञानान्धकारेण, यतो मोहयते जनम् । ततोऽय शिष्टलोकेन, मोह इत्यपि कीर्तित ॥५०५॥
यस्त्वेष नवभिर्युक्तो, मानुषै प्रविभाव्यते । दर्शनावरणो नाम, विख्यात स महीतले ॥५०६॥
दृश्यन्ते पञ्च या नार्यस्ता स्ववीर्येण सुन्दरा । करोत्येष जगत्सर्वं, घूर्णमानमतिक्रियम् ॥५०७॥
ये त्वमी पुरुषा भद्र। चत्वारोऽस्य पुर स्थिता । एतत्सामर्थ्ययोगेन, जगदन्ध करोत्ययम् ॥५०८॥
नरद्वयसमायुक्तो, य पुनर्भद्र। दृश्यते । स एष वेदनीयाख्यो, राजा विख्यातपौरुष ॥५०९॥
सातनामा प्रसिद्धोऽस्य, जगति प्रथमो नर । करोत्याह्लादसन्दोहनन्दित भुवनत्रयम् ॥510॥
द्वितीय पुरुषो भद्र। यस्त्वस्य प्रविलोक्यते । असातनामक सोऽय, जगत्सन्तापकारक ॥५११॥
दीर्घह्रस्वै समायुक्तश्चतुर्भिर्डिम्भरूपकै । विवर्तते महीपालो, यस्त्वेष तव गोचरे ॥५१२॥
आयुर्नामा प्रसिद्धोऽय, सर्वेषां भद्र। देहिनाम् । निजे भवे किलाऽवस्था, कुरुते डिम्भतेजसा [युग्मम्] ॥५१३॥
द्विचत्वारिंशता युक्तो, मानुषाणा महाबल । यस्त्वेष दृश्यते भद्र। नामनामा महीपति ॥५१४॥
निजमानुषवीर्येण, जगदेष चराचरम् । विडम्बयति यत्तात । तदाख्यातु न पार्यते [युग्मम्] ॥५१५॥
तथाहि–चतुर्गतिकससारे, नरनारकरूपताम् । ये दधाना विवर्तन्ते, पशुदेवतया परे ॥५१६॥
एकेन्द्रियादिभेदेन, नानादेहविवर्तिन । नानाङ्गोपाङ्गसबद्धा, सघातकरणोद्यता ॥५१७॥
भिन्नसहनना सत्त्वा, नानासस्थानचारिण । वर्णगन्धरसस्पर्शभेदेन, विविधास्तथा ॥५१८॥
गौरवेतरहीनाश्च, स्वोपघातपरायणाः । पराघातपरा केचिदिष्टजन्मानुपूर्विण ॥५१९॥
सदुच्छ्वासातपोद्योतविहायोगतिगामिन. । त्रसस्थावरभेदाश्च, सूक्ष्मबादररूपिण ॥520॥
पर्याप्तकेतरा केचिदन्ये प्रत्येकचारिण । साधारणा स्थिरा केचित्तथान्येऽस्थिररूपिण ॥५२१॥
शुभाऽशुभत्व बिभ्राणा, सुभगा दुर्भगास्तथा । सुस्वरा दुस्वरा लोके, ये चादेया मनोहरा ॥५२२॥
अनादेया स्ववर्गेऽपि, यश कीर्त्तिसमन्विता । अयश कीर्त्तियुक्ताश्च, निर्मिताऽऽत्मशरीरका ॥५२३॥
प्रणताशेषगीर्वाणमौलिमालार्चितक्रमा । ये च तीर्थकरा लोके, भवन्ति भवभेदिन ॥५२४॥
निजमानुषवीर्येण, सर्वमेष नराधिप । तदिद जृम्भते वत्स । नामनामा महाबल [दशभि कुलक] ॥५२५॥
य पुनर्भद्र। भूपोऽय, वीक्ष्यते पुरत स्थितम् । आत्मभूत महावीर्यं, नीचोच्च पुरुषद्वयम् ॥५२६॥
गोत्राभिधानो विख्यात, स एष जगतीपति । देहिना कुरुते भद्र। सुन्दरेतरगोत्रताम् ॥५२७॥

नरपञ्चकसेव्योऽय, य पुन प्रविभाव्यते । अन्तराय इति ख्यात, स तात। वरभूपति ॥५२८॥
अय तु नरवीर्येण, कुरुते बाह्यदेहिनाम् । दानभोगोपभोगाप्तिवीर्यविघ्न नराधिप ॥५२९॥
तदेते कथितास्तात। नामभिर्गुणलेशत । सप्तापि भूभुजस्तुभ्य, समासेन मयाऽधुना ॥530॥
वीर्यवक्तव्यतामेषा, विस्तरेण पुनर्यदि । वर्णयामि ततोऽत्येति, तत्रैव मम जीवितम् ॥५३१॥
तदेवमतिगम्भीर, श्रुत्वा मातुलजल्पितम् । प्रकर्षो हृष्टचित्तत्वादिद वचनमब्रवीत् ॥५३२॥
चारु माम। कृत चारु, मोचितो मोहपञ्जरात् । एतेषा वर्णन राज्ञां, कुर्वतैवमहं त्वया ॥५३३॥
केवल कञ्चिदद्यापि, माम पृच्छामि सशयम् । तमाकर्ण्य पुनर्मामो, मह्यमाख्यातुमर्हति ॥५३४॥
ततो विमर्शस्तुष्टात्मा, तं प्रतीदमभाषत । पृच्छ यद्रोचते तुभ्य, भद्र। विश्रब्धचेतसा ॥५३५॥
प्रकर्ष प्राह मामाऽय विस्मयो मम मानसे । एषु सकीर्त्यमानेषु, राजसु प्रतिभासते ॥५३६॥
यदाऽमूत्मण्डपान्तस्थान्निरीक्षे नायकानहम् । परिवार न पश्यामि, तदाऽमीषा निज निजम् ॥५३७॥
यदा विलोकयाम्युच्चे, परिवार विशेषत । तदा विस्फारिताक्षोऽपि, नेवेक्षे नायकानहम् ॥५३८॥
भवता तु परीवारो, नायकाश्च पृथक् पृथक् । नामतो गुणतश्चैव, कीर्त्तिता वत तत्कथम्? ॥५३९॥

## सामान्यविशेषयोर्भेदाभेदौ

विमर्शेनोदित—›वत्स। न विधेयोऽत्र विस्मय । नेकदोभयवेत्ताऽत्र, कश्चिदन्योऽपि विद्यते ॥540॥
यत—ये निरावरणज्ञाना, केवलालोकभास्करा । प्रभु परिकर चैषा, नैकदा तेऽपि जानते ॥५४१॥
यत—सामान्यरूपा राजान, सर्वेऽपि परिकीर्त्तिता । विशेषरूपा विज्ञेया, सर्वे चामी परिच्छदा ॥५४२॥
तथाहि—अवयव्यत्र सामान्य, विशेषोऽवयवा स्मृता । राजानश्चाशिनो ज्ञेयास्तदशास्तु पदातय ॥५४३॥
इह च—नायात कस्यचित्साक्षादेकदा ज्ञानगोचरम् । यथैतौ प्रकृतिस्तात। सा सामान्यविशेषयो ॥५४४॥
देशकालस्वभावैश्च, भेदोऽपि च न विद्यते । तादात्म्यादेतयोस्तात। तेनेक प्रतिभाति ते ॥५४५॥
तथाहि—के तरोर्भेदिन सन्तु, धवाम्रखदिरादय । धवाम्रादिविनाभूत, कस्तरुर्वा? प्रकाश्यताम्? ॥५४६॥
श्रुतस्कन्धातिरेकेण, नास्त्यध्ययनसभव । न चाध्ययननिर्मुक्त, श्रुतस्कन्धोऽस्ति कश्चन ॥५४७॥
केवल यौगपद्येन, न दृष्टौ तावितीयता । नादृष्टावेव तौ वत्स। कालभेदेन दर्शनात् ॥५४८॥
तथाहि—दृश्यते हि तरुर्दूरान्न लक्ष्यन्ते धवादय । अभ्यर्णे तेऽपि दृश्यन्ते लक्ष्यते न तरु पृथक् ॥५४९॥
तथापि तदद्वय दृष्ट, कालभेदेऽपि कीर्त्यते । यथाक्रमेण दृष्टत्वाद्रूपा[भूपा म]द्याश्चक्षुरादिभि ॥550॥
अतो भेदेन दृष्टत्वाद्भिन्नमेवेदमिष्यताम् । अभिन्नस्य हि नो भिन्न, कालभेदेऽपि दर्शनम् ॥५५१॥
तथाहि—अभेदेऽपि स्वभावाद्येर्यत्सामान्यविशेषयो । संख्यासज्ञाऽङ्ककार्येभ्यो, भेदोऽप्यस्ति परिस्फुट ॥५५२॥
तेन तद्द्वारज सर्वो, व्यवहारो न दुष्यति । भेदाऽभेदात्मके तत्त्वे, भेदस्येत्थ निदर्शनात् ॥५५३॥
तथाहि—सख्यया तरुरित्येको, भूयास खदिरादय । सज्ञाऽपि तरुरित्येषा, धवाम्रार्कादिभेदिनाम् ॥५५४॥
अनुवृत्तिस्तरोस्तेषु, लक्षण पृथगीक्ष्यते । धवाश्वत्थादिभेदाना, व्यावृत्तिश्च परस्परम् ॥५५५॥
कार्यं तु तरुमात्रेण, साध्य छायादिक पृथक् । विशिष्टफलपुष्पाद्यमन्यदेवाम्रकादिभि ॥५५६॥
व्यवहारोऽपि सामान्ये, श्रुतस्कन्धेऽन्य एव हि । अन्य एवास्य भेदेषु, यदुद्देशादिलक्षण ॥५५७॥
तस्मात्त भेदमाश्रित्य, सख्यासज्ञादिगोचरम् । अभेद च तिरोधाय, देशकालस्वभावजम् ॥५५८॥
राजान परिवाराश्च, मया वत्स। पृथक् पृथक् । नामतो गुणसख्याभ्या, तवाग्रे परिकीर्तिता युग्मम् ॥५५९॥
एव च भेदिनोऽप्येते, न परस्परभेदिन । यौगपद्येन भासन्ते, भद्र। तन्मुञ्च सशयम् ॥560॥
न चान्यत्रापि कर्तव्यो, विस्मयो लक्षणादिभि । कथ्यमाने मया भेदे, भो सामान्यविशेषयो ॥५६१॥
प्रकर्षेणोदित माम। नष्टोऽय सशयोऽधुना । ममेष माम। सन्देह, परिस्फुरति मानसे ॥५६२॥
यदुत—य एते सप्त राजान, एतेषा मध्यवर्तिन । तृतीयश्च चतुर्थश्च, पञ्चम षष्ठ एव च ॥५६३॥
एते महीपाश्चत्वारो यथा व्यावर्णितास्त्वया । तथा जनस्य लक्ष्यन्ते, सुन्दरेतरकारिण ॥५६४॥

नैकान्तेनैव सर्वेषामपकारपरायणा । एते हि बाह्यलोकाना, केषाञ्चित्सुखहेतव त्रिभिर्विशेषकम् ॥५६५॥
आद्यो राजा द्वितीयश्च, यश्च पर्यन्तभूपति । दु खदा एव सर्वेषा, त्रयोऽप्येते तु देहिनाम् ॥५६६॥
तत सपरिवारेण महामोहमहीभुजा । एतैश्च हतसाराणा, तेषां किं नाम जीवितम्? ॥५६७॥

### अप्रमत्तजने महामोहादीनामप्रभाव

एव च स्थिते–किं विद्यन्ते जना केचिद् बहिरङ्गेषु देहिषु? । अमीभिर्न कदर्थ्यन्ते, ये चतुर्भिररातिभि ॥५६८॥
किं वा न सभवन्त्येव, तादृशा माम! देहिन । येऽमीषा निजवीर्येण, प्रतापक्षतिकारिण ॥५६९॥
तत्श्रुत्वा भागिनेयोक्त, वचन विहितादर । अवादीदीदृश वाक्य, विमर्शो मधुराक्षरै ॥570॥
विद्यन्ते बहिरङ्गेषु, वत्स! लोकेषु तादृशा । एतेषा वीर्यनिर्णाशा, केवल विरला जना ॥५७१॥
**तथाहि**–सद्भूतभावनामन्त्रतन्त्रशास्त्रा महाधिय । कृतात्मकवचा नित्य, ये तिष्ठन्ति बहिर्जना ॥५७२॥
अप्रमादपरास्तेषामेते सर्वेऽपि भूभुज । महामोहादयो वत्स! नोपतापस्य कारका युग्मम् ॥५७३॥

### तेषा मोहादिनाशकभावना

**यत**–सतत भावयन्त्येव, निर्मलीमसमानसा । जगत्स्वरूप ये धीरा, श्रद्धासशुद्धबुद्धय ॥५७४॥
**कथम्** ?–अनादिनिधनो घोरो, दुस्तरोऽय भवोदधि । राधावेधोपमा लोके, दुर्लभा च मनुष्यता ॥५७५॥
मूल हि सर्वकार्याणामाशापाशनिबन्धनम् । जलबुद्बुदसकाश, दृष्टनष्ट च जीवितम् ॥५७६॥
बीभत्समशुचे पूर्णं, कर्मज भिन्नमात्मन । गम्य रोगपिशाचाना, शरीर क्षणभङ्गुरम् ॥५७७॥
यौवन च मनुष्याणा, सन्ध्यारक्ताभ्रविभ्रमम् । चण्डवातेरिताम्भोदमालारूपाश्च सम्पद ॥५७८॥
आदौ सपादिताह्लादा, पर्यन्तेऽत्यन्तदारुणा । एते शब्दादिसम्भोगा किम्पाकफलसन्निभा ॥५७९॥
माता भ्राता पिता भार्या, पुत्रो जातेति जन्तव । जाता सर्वेऽपि सर्वेषामनादिभवचक्रके ॥580॥
उषित्वैकतरौ रात्रौ, यथा प्रातर्विहङ्गमा । यथायथ व्रजन्त्येव[ व मु], कुटुम्बे विश्व[श्र मु]बान्धवा ॥५८१॥
इष्टै समागमा सर्वे, स्वप्नप्राप्तनिधिरूपताम् । नून समाचरन्त्येव, वियोगानलतापिन ॥५८२॥
जरा जर्जरयत्येव, देह सर्वशरीरिणाम् । दलयत्येव भूतानि, भीमो मृत्युमहीधर ॥५८३॥
**ततश्च**–तेषामेवविधानेकभावनाभ्यासलासिनाम् । निर्धूततमसा पुसा, निर्मलीभूतचेतसाम् ॥५८४॥
भद्र! नैष महीपालो, महामोह सभार्यक । जायते बाधको नापि, सवधूकाविमौ सुतौ युग्मम् ॥५८५॥
**अन्यच्च**–न शोको नारतिस्तेषा, न भयो नापि शेषका । दुष्टाभिसन्धिप्रमुखा, नून बाधाविधायका ॥५८६॥
नामूनि डिम्भरूपाणि, न चान्ये भद्र! तादृशा । यैरेवं भावनाशस्त्रै, पिता पुत्रा अमी जिता· युग्मम् ॥५८७॥
**तथा**–सर्वज्ञागमतत्त्वेषु, ये सन्ति सुविनिश्चिता । ये पुन सद्विचारेण, क्षालयन्त्यात्मकल्मषम् ॥५८८॥
नयन्ति स्थिरता चित्त, सर्वज्ञागमचिन्तया । पश्यन्त्युन्मार्गयायित्व, मूढाना च कुतीर्थिनाम् ॥५८९॥
तेषामेष जनाना भो, निर्मलीभूतसद्धियाम् । न बाधक प्रकृत्यैव, महामोहमहत्तम त्रिभिर्विशेषकम् ॥590॥
याऽप्येषा गृहिणी पूर्वं, वर्णिता वीर्यशालिनी । कुदृष्टि सापि तद्वीर्याद्दूरत प्रपलायते ॥५९१॥
ये पुनर्भावयन्त्येव, मध्यस्थेनाऽन्तरात्मना । शरीरचित्तयो रूप, योषिता परमार्थत ॥५९२॥
**यदुत**–सितासिते विशाले ते, ताम्रराजिवराजिनी । जीव! चिन्तय निर्मिथ्यमक्षिणी मासगोलकौ ॥५९३॥
सुमासकौ सुसस्थानौ, सुश्लिष्टौ वक्त्रभूषणौ । लम्बमानाविमौ वर्ध्रौ, कर्णौ यौ ते मनोहरौ ॥५९४॥
यावेतावुल्लसद्दीप्ती, भवतश्चित्तरञ्जकौ । ततचर्मावृत स्थूलमस्थिमात्र कपोलकौ ॥५९५॥
ललाटमपि तादृक्ष, यत्ते हृदयवल्लभम् । दीर्घोत्तुङ्गा सुसस्थाना, नासिका चर्मखण्डकम् ॥५९६॥
यदिद मधुनस्तुल्यमधरौष्ठ विभाति ते । मासपेशीद्वय स्थूरमिद लालामलाविलम् ॥५९७॥
ये कुन्दकलिकाकारा, रदनाश्चित्तहारिण । एतेऽस्थिखण्डकानीति, पद्धतिस्थानि लक्षय ॥५९८॥
य एषोऽलिकुलच्छाय, केशपाशो मनोहर । योषिता तत्तमो हार्दं, प्रकाशमिति चिन्तय ॥५९९॥
यौ काञ्चनमहाकुम्भविभ्रमौ हृदि ते स्थितौ । स्त्रीस्तनौ मूढ! बुध्यस्व, तौ स्थूलौ मासपिण्डकौ ॥600॥

यल्लासयति ते चित्त, ललित दोर्लताद्वयम् । ततचर्मावृत दीर्घं, तदस्थियुगल चलम् ॥६०१॥
अशोकपल्लवाकारौ, यौ करौ ते मनोहरौ । तावस्थिघटितो विद्धि, चर्मनद्धो करङ्कौ ॥६०२॥
यद्रञ्जयति ते चित्त, वलित्रयविराजितम् । उदर मूढ! तद्विष्ठामूत्रान्त्रमलपूरितम् ॥६०३॥
यदाक्षिपति ते स्वान्त, श्रोणीविम्व विशालकम् । प्रभूताशुचिनिर्वाहद्वारमेतद्विभाव्यताम् ॥६०४॥
यौ मूढैर्हाटकस्तम्भसन्निभौ परिकल्पितो । तावूरू पूरितौ विद्धि, वसामज्जाशुचेर्नलो ॥६०५॥
सञ्चारिरक्तराजीववन्धुर भाति यच्च ते । तदङ्घ्रियुगल स्नायुवद्धास्थि पञ्जरद्वयम् ॥६०६॥
यत्ते कर्णामृत भाति, मन्मनोल्लापजल्पितम् । तन्मारणात्मक मूढ! विष हालाहल तव ॥६०७॥
शुक्रशोणितसभूत, नवच्छिद्र मलोल्वणम् । अस्थिशृङ्खलिकामात्र, हन्त योषिच्छरीरकम् ॥६०८॥
न चास्माद्भिद्यते जीव!, तावकीन शरीरकम् । कश्चैव ज्ञाततत्त्वोऽपि, कुर्यात्कङ्कालमीलकम् ॥६०९॥
प्रचण्डपवनोद्धूतध्वजचेलाग्रचञ्चलम् । चित्त तु विदुषा स्त्रीणा, कथ रागनिवन्धनम्? ॥610॥
विलसल्लोलकल्लोलजालमालाकुले जले । शशाङ्कविम्ववल्लोकेरतद् ग्रहीतु न पार्यते ॥६११॥
स्वर्गापवर्गसन्मार्गनिसर्गार्गलिकासमा । एता हि योषितो नून, नरकद्वारदेशिका ॥६१२॥
न भुक्तासु न युक्तासु, न वियुक्तासु देहिनाम् । विद्यमानासु नारीषु, सुखगन्धोऽपि विद्यते ॥६१३॥
याश्चैव योषितोऽनेकमहानर्थविधायिका । सुखमार्गार्गलास्तासु, तुच्छ स्नेहनिवन्धनम् ॥६१४॥
एव व्यवस्थिते नृणां, यदिद मूढचेष्टितम् । तदीदृश ममाभाति, पर्यालोचयतोऽधुना ॥६१५॥
**यदुत**–महाविगोपको भूषा[भूयान् मु], हसन च विडम्बनम् । विव्वोका वध्यभूमीषु, गच्छता पटहोपमा ॥६१६॥
नाट्य तु प्रेरणाकार, गान्धर्वं रोदनोपमम् । विवेकिकरुणास्थान, योषिदात्मनिरीक्षणम् ॥६१७॥
विलासा सन्निपातानामपथ्याहारसन्निभा । उच्चैर्विनाटन योषिदाश्लेषसुरतादिकम् ॥६१८॥
तदेवविधसद्भूतभावनाभावितात्मभि । तैर्जितो भद्र! सत्पुम्भिरेषोऽपि मकरध्वज [चतुर्भि कलापकम्] ॥६१९॥
**अन्यच्च**–याप्येषा वर्णिता पूर्वं, महावीर्या रतिर्मया । भार्याऽस्य साऽपि तैर्नून, भावनावलतो जिता ॥620॥
तथैवविधसद्भावभावनाऽऽसक्तचेतसाम् । तेषामेषोऽप्यहो हासो, दूराद्दूरतर गत ॥६२१॥
**तथा**–सद्भावनिर्मलजले, क्षालितामलचेतसाम् । सर्वत्र निर्व्यलीकाना, जुगुप्सापि न वाधिका ॥६२२॥
**तथाहि**–यैस्तत्त्वतो विनिर्णीता, शरीराशुचिरूपता । जलशोचाग्रहस्तेषा, नात्यन्त मनस. प्रिय ॥६२३॥
यदेव चेतस शुद्धे, सम्पादकमनिन्दितम् । तदेव शौच विज्ञेय, यत एतदुदाहृतम् ॥६२४॥
**सत्य शौच तप शौच, शौचमिन्द्रियनिग्रह । सर्वभूतदया शौच,** जलशौच तु पञ्चमम् ॥६२५॥
एव च स्थिते–कार्यं जलैर्न नोऽकार्यं, किं तु तत्कार्यमीदृशम् । विधीयमान यच्छौच, भूताना नोपघातकम् ॥६२६॥
तच्च सजायते नून, वहिर्मलविशुद्धये । नान्तरङ्गमलक्षालि, यत उक्त मनीषिभि ॥६२७॥
चित्तमन्तर्गत दुष्ट, न स्नानाद्यैर्विशुध्यति । शतशोऽपि हि तद्धौत, सुराभाण्डमिवाशुचि ॥६२८॥
किञ्च–शरीरमलमप्येतज्जलशौच कृत जनै । तेषा विशोधयत्येक, क्षणमात्रं न सर्वदा ॥६२९॥
यत–रोमकूपादिभिर्जन्तो, शरीर शतजर्जरम् । धौत धोत स्रवत्येव, नैतच्छुचि कदाचन ॥630॥
**तथाहि**–क्वचित्प्रवर्तमानाना, देवताऽतिथिपूजने । केषाञ्चित्कारण भक्तेर्जलशौचमनिन्दितम् ॥६३१॥
केवल नाग्रह कार्यो, विदुषा तत्त्ववेदिना । तत्रैव जलजे शोचे, स हि मूर्खत्वकारणम् ॥६३२॥
**ततश्च**–एव विशुद्धवुद्धीना, जलशौचादि कुर्वताम् । सज्ञानपरिपूताना, तेषां तात! महात्मनाम् ॥६३३॥
याप्येषा कथिता पूर्वमिहामुत्र च दुखदा । जुगुप्सा साऽपि नष्टत्वान्नैव वाधाविधायिका [युग्मम्] ॥६३४॥
यावप्येतौ जगच्छत्रू, पूर्वं व्यावर्णितौ मया । ज्ञानसवरणो राजा, दर्शनावरणस्तथा ॥६३५॥
तौ सर्वज्ञागमाभ्यासवासनावासितात्मनाम् । अप्रमादपराणा च, नैव तेषा कदर्थकौ [युग्मम्] ॥६३६॥
योऽप्यन्तरायनामाय, राजा पर्यन्तसस्थित । दानादिविघ्नहेतुस्ते, मया पूर्वं निवेदित ॥६३७॥
निराशाना निरीहाना, दायिनां वीर्यशालिनाम् । तेषा भद्र! मनुष्याणा, सोऽपि किं किं करिष्यति? [युग्मम्] ॥६३८॥

यैस्त्विद धर्मबुद्ध्यैव, भक्ष्यते स्वर्गकाम्यया । कालकूटविष नूनमद्युस्ते जीवितार्थिन ॥४८॥
अहिसा परमो धर्म, स कुतो मासभक्षणे? । अथ हिसा भवेद्धर्म, स्यादग्निर्हिमशीतल ॥४९॥
किमत्र बहुना?—धर्मार्थं रसगृद्ध्या वा, मास खादन्ति ये नरा । निघ्नन्ति प्राणिनो वा ते, पच्यन्ते नरकाग्निना ॥50॥
अन्यच्च—यथा गोमायुघाताय, ताम्यत्येष निरर्थकम् । आखेटके रतात्मानस्तथैवान्येऽपि जन्तव ॥५१॥
यावच्च वर्णयत्येव, विमर्शस्तस्य चेष्टितम् । तावल्ललनवृत्तान्तो, यो जातस्त निबोधत ॥५२॥
स जम्बुकविनाशार्थं, धावन्नुच्चैर्दुस्तरे । सतुरङ्गो महागर्ते, पतितोऽधोमुखस्तले ॥५३॥
तत सचूर्णिताङ्गोऽसौ, क्षुद्यमानो हयेन च । अत्राणो विरटन्नुच्चैस्तत्रैव निधन गत ॥५४॥
तत प्रकर्षेणाभिहितम्—अधुनैवामुना प्राप्त, मृगयाव्यसने फलम् । विमर्श प्राह न फल, पुष्पमेतद्विभाव्यताम् ॥५५॥
फल तु नरके घोरे, स्यादेवविधकर्मणाम् । तथापि मूढा खादन्ति, मास हिसन्ति देहिन ॥५६॥

## विकथाफलम्

इतश्च राजपुरुषैर्जिह्वामुत्पाट्य दारुणै । तप्त ताम्र नर कश्चित्पाय्यमानो निरीक्षित ॥५७॥
ततो दयापरीतात्मा, प्रकर्ष प्राह मातुलम् । हा हा किमेष पुरुषो, निर्घृणैर्माम। पीड्यते? ॥५७॥

विमर्शेनोक्त—भद्र। आकर्णय, अय पुरुषोऽत्रैव मानवावासान्तर्भूते चणकपुरे वास्तव्यो महाधन सुमुखो नाम सार्थवाह, अय च बालकालादारभ्य वाक्पारुष्यव्यसनी, ततो लोकैर्गुणनिष्पन्नमस्य दुर्मुख इति नाम प्रतिष्ठित, प्रकृत्यैव चास्य प्रतिभासते स्त्रीकथा, रोचते भक्तकथा, मनोऽभीष्टा राजकथा, हृदयिता देशकथा । सर्वथा जल्पे सति न कथञ्चिन्निजतुण्ड धारयितु पारयति । इतश्च चणकपुराधिपतिरेव तीव्रो नाम राजा गतो रिपूणामुपरि, विक्षेपेण लग्नमायोधन, जिता रिपव । इतश्च निर्गते तस्मिन्नास्थायिकाया प्रस्तुताऽनेन राजकथा यदुत प्रबलास्ते रिपव, पराभविष्यन्ति राजान, आगमिष्यन्ति ते पुरलुण्टनार्थं, ततो यथाशक्त्या पलायध्व यूयम् । तदाकर्ण्य नष्ट समस्त पुर, समागतो राजा, दृष्ट तन्निरुद्वस चणकपुर, किमेतदिति पृष्टमनेन, कथित केनचिद् व्यतिकर, कुपितो दुर्मुखस्योपरि तीव्रनरेन्द्र, तत पुनरावासिते पुरे प्रख्याप्य त दुर्वचनभाषणलक्षणमपराध पौराणामेवविधोऽस्य दण्डो निर्वर्त्तितो राज्ञेति ।

प्रकर्षेणोदित माम। महाकष्टकमीदृशम् । यद्दुर्भाषणमात्रेण, सप्राप्तोऽय वराकक ॥१॥
मातुलेनोदित वत्स। विकथाऽऽसक्तचेतसाम् । अनियन्त्रिततुण्डाना, कियदेतद्दुरात्मनाम् ? ॥२॥
इय हि कुरुते वैर, देहिना निर्निमित्तकम् । विधत्ते जनसन्ताप, मुत्कला भद्र। भारती ॥३॥
ते धन्यास्ते महात्मानस्ते श्लाघ्यास्ते मनस्विन । ते वन्द्यास्ते दृढास्तत्त्वे, ते जगत्यमृतोपमा ॥४॥
येषा मिताक्षरा सत्या, जगदाह्लादकारिणी । काले सद्बुद्धिपूता च, वर्तते भद्र। भारती [युग्मम्] ॥५॥
ये तु मुत्कलवाणीका, व[त मु]दन्तेऽर्दवितर्दकम् । तैरत्रैव महानर्था, नेदृशा वत्स। दुर्लभा ॥६॥
सुश्लिष्टा मोचयत्येषा, भारती तात। देहिनाम् । उच्छृङ्खला पुनर्वत्स। तामेषा बन्धयत्यलम् ॥७॥
तदस्य विकथामूल, दुर्भाष्यव्यसने फलम् । इदमीदृशमापन्न, परलोके च दुर्गति ॥८॥
अत्रान्तरे प्रकर्षेण, राजमार्गे निपातिता । दृष्टिर्दृष्टश्च तत्रैक, शुक्लवर्णाऽम्बरो नर ॥९॥

## हर्षविषादवृत्तान्त

तत पप्रच्छ त वीक्ष्य, क एष इति मातुलम् । तेनोक्त वत्स। हर्षोऽय, रागकेसरिसैनिक ॥10॥
अस्त्यत्र मानवावासे, वासवो नाम वाणिज । इद च दृश्यतेऽभ्यर्णे, तस्य गेह महाधनम् ॥११॥
बालकाले वियुक्तश्च, वयस्योऽत्यन्तवल्लभ । धनदत्त समायातो, वासवानन्ददायक ॥१२॥
इद कारणमुद्दिश्य, भवनेऽत्र प्रवेक्ष्यति । अय हर्ष प्रविष्टश्च, पश्य कि कि करिष्यति? ॥१३॥
ततो विस्फारिताक्षोऽसौ, प्रकर्षस्तन्निरीक्षते । इतश्च वासवस्तेन, धनदत्तेन मीलित ॥१४॥
तत प्रविष्टस्तद्गेहे, स हर्ष सकुटुम्बके । सजात च वणिग्गेह, बृहदानन्दसुन्दरम् ॥१५॥
आहूता बान्धवा सर्वे, प्रवृत्तश्च महोत्सव । ततो गायन्ति नृत्यन्ति, वादितानन्दमर्दला ॥१६॥
अपि च—वरभूषणमुज्ज्वलवेषधर, प्रमदोद्धुरखादनपानपरम् । धनदत्तसमागमजातसुख, तदभूदथ वासवगेहसुखम् ॥१७॥

अथ तादृशि विस्मयसञ्जनके, क्षणमात्रविवर्धितवर्धनके । निजमाममवोचत बुद्धिसुत, प्रविलोकनकौतुकतोषयुत ॥१८॥
यदिद वेल्लते माम। सर्वमर्दीवितर्दकम् । वासवीयगृह तत्कि, तेन हर्षेण नाटितम्? ॥१९॥
विमर्शेनोदित–वत्स। साधु साधु विनिश्चितम् । अकाण्डसदनक्षोभे, हर्ष एवात्र कारणम् ॥20॥
अत्रान्तरेऽतिवीभत्स, कृष्णवर्णधरो नर । दृष्टो द्वारि प्रकर्षेण, तस्य वासवसद्मन ॥२१॥
ततस्तेनोदित माम। क एष पुरुषाधम ? । विमर्शेनोक्त–वत्स। शोकवयस्योऽय, विषादो नाम दारुण ॥२२॥
यश्चैष पथिक कश्चित्प्रवेष्टुमिह वाञ्छति । प्रविष्टेऽत्र विषादोऽय, भवनेऽत्र प्रवेक्ष्यते ॥२३॥
तत प्रविश्य पान्थेन, तेन वासवसन्निधौ । एकान्ते वासवस्यैव, गुह्य किञ्चिन्निवेदितम् ॥२४॥
अत्रान्तरे प्रविष्टोऽसौ, विषादस्तच्छरीरके । मूर्च्छया पतितश्चासौ, वासवो नष्टचेतन ॥२५॥
हा हा किमेतदित्युच्चैर्विलपन्निखिलो जन । तत समागतस्तस्य, निकटे भयविह्वल ॥२६॥
अथ वायुप्रदानाद्यै, पुन सजातचेतन । प्रलाप कर्तुमारब्ध, सविषाद स वासव ॥२७॥
कथम्?–हा पुत्र ! तात वत्साऽतिसुकुमारशरीरक । ईदृशी तव सजाता, काऽवस्था मम कर्मणा? ॥२८॥
निर्गतोऽसि ममाऽपुण्यैर्वत्स। वारयतो मम । दैवेन निर्घृणेनेद, तव जात। विनिर्मितम् ॥२९॥
हा हतोऽस्मि निराशोऽस्मि, मुषितोऽस्मि विलक्षण । एव व्यवस्थिते वत्स। त्वयि कि मम जीवति ॥30॥
यावच्च प्रलपत्येव, स पुत्रस्नेहकातर । तावद्विषाद सर्वेषु, प्रविष्ट स्वजनेष्वपि ॥३१॥
अथ ते तस्य माहात्म्यात्सर्वे वासववान्धवा । हाहारवपरा गाढ, प्रलाप कर्तुमुद्यता ॥३२॥
ततश्च–क्षणेन विगतानन्द, दीनविह्वलमानुषम् । रुदन्नारीजन मूढ, जात वासवमन्दिरम् ॥३३॥
ततस्तत्तादृश दृष्ट्वा, प्रकर्ष प्राह मातुलम् । किमिद माम। सजात, गृहे तु प्रेक्षणान्तरम्? ॥३४॥
विमर्श प्राह तत्तुभ्यमादावेव निवेदितम् । मया यथाऽन्तरयत्ता वहिरङ्गा इमे जना ॥३५॥
ततश्चेद तथा पूर्वं, हर्षेण प्रविनाटितम् । अधुना नाटयत्येव, विषादोऽसौ वराककम् ॥३६॥
तदत्र भवने लोका, कि कुर्वन्तु तपस्विन ? । ये हि हर्षविषादाभ्या, क्षणार्धेन विनाटिता ॥३७॥
प्रकर्ष प्राह कि गुह्य, कर्णाभ्यर्णविवर्तिना । अनेन वासवस्याऽस्य, पुरुषेण निवेदितम् ? ॥३८॥
विमर्शेनोदित वत्स।, समाकर्णय साम्प्रतम् । अस्त्यस्य वर्धनो नाम, पुत्रो हृदयवल्लभ ॥३९॥
स चैक एव पुत्रोऽस्य, यौवनस्थो मनोहर । उपयाचितकोटीभिर्जातो विनयतत्पर ॥40॥
अनेन वार्यमाणोऽपि, स धनार्जनकाम्यया । प्रविधाय महासार्थं, गतो देशान्तरे पुरा ॥४१॥
स चोपार्ज्य धन भूरि, स्वदेशागमकामुक । कादम्वर्यां महाटव्या, गृहीतो वत्स । तस्करै ॥४२॥
विलुप्त धनसर्वस्व, हत सार्थ सवान्धव । बद्धा गृहीता वन्द्यश्च, तस्करैर्धनकामिभि ॥४३॥
तासा मध्ये गृहीतश्च, वर्धन क्रूरकर्मभि । स सार्थवाह इत्येववादिभिर्भद्र। तस्करै ॥४४॥
नीत्वा पल्लि ततोऽनेकयातनाशतपीडित । स चौरैर्विहितो वत्स। वर्धनो धनवाञ्छया ॥४५॥
अय च पुरुषस्तस्य, सर्वदा पादधावक । वत्स। लम्बनको नाम, गृहजो दासदारक ॥४६॥
ततस्त तादृश दृष्ट्वा, स्वामिन चौरपीडितम् । नष्ट्वा कथञ्चिदायातो, वृत्तान्तस्य निवेदक ॥४७॥
निवेदिते च वृत्तान्ते, तथा वासववाणिज । यदकार्षीत्त्वया तच्च, दृष्टमेव तत परम् ॥४८॥
प्रकर्षेणोदित माम। प्रलापाक्रन्दरोदनै । किममीभि परित्राण, तस्य सजनित कृतै ? ॥४९॥
विमर्शेनोदित वत्स। नैतदेव तथापि च । एवमेते प्रकुर्वन्ति, विषादेन विनाटिता ॥50॥
धनदत्तागम प्राप्य, ये हर्षवशवर्तिन । वर्धनापदमासाद्य, विषादेन विनाटिता ॥५१॥
तेषा हर्षविषादाभ्यामेतेषा पीडितात्मनाम् । कीदृशी वा भवेत्तात। पर्यालोचितकारिता? ॥५२॥
ततश्च–अवीक्ष्य वस्तुनस्तत्त्वमनालोच्य हिताहितम् । एते विडम्वयन्त्येवमात्मान तद्वशानुगा ॥५३॥
किञ्च–नाऽत्र केवलमीदृक्ष, वासवीये गृहोदरे । आभ्या हर्षविषादाभ्या, प्रेक्षण वत्स। नाट्यते ॥५४॥
किन्तर्हि?–सर्वत्र भवचक्रेऽस्मिन्, कारणैरपरापरै । एतौ नर्तयतो नित्य, जनमेन गृहे गृहे ॥५५॥

यत –पुत्र राज्य धन मित्रमन्यद्वा सुखकारणम् । हर्षस्यास्य वश यान्ति, प्राप्याऽस्मिन् मूढजन्तव ॥130॥
ततस्ते तत्परायत्ता, सद्बुद्धिविकला नरा । वत्स। किं किं न कुर्वन्ति, हास्यस्थान विवेकिनाम्? ॥१३१॥
न चिन्तयन्ति ते मूढा, यथेद पूर्वकर्मणा । पुत्रराज्यादिक सर्वं, जन्तूनामुपपद्यते ॥१३२॥
तत कर्मपरायत्ते, तुच्छे बाह्येऽतिगत्वरे । कथञ्चित्तत्र सपन्ने, हर्ष स्यात्केन हेतुना? ॥१३३॥
तथा–विषादेन च बाध्यन्ते, वियोग प्राप्य वल्लभै । अनिष्टै सप्रयोग च, नानाव्याधिशतानि च ॥१३४॥
बाधितास्च विषादेन, सदाऽमी मूढदेहिन । आक्रन्दनं मनस्ताप, दैन्यमेवं च कुर्वते ॥१३५॥
न पुनर्भावयन्त्येव, यथेद पूर्वसचितै । कर्मभिर्जनित दु ख, विषादाऽवसर कथम्? ॥१३६॥
अन्यच्च–विषादो वर्धयत्येव, तद्दु ख तात। देहिनाम् । न त्राणकारकस्त्राण, केवलं शुभचेष्टितम् ॥१३७॥
यत·–दु खानि पापमूलानि, पाप च शुभचेष्टितै । सर्वं प्रलीयते वत्स। ततो दुःखोद्भव कुतः? ॥१३८॥
प्रकर्ष प्राह–यद्येव, तत सुन्दरचेष्टिते । वरमेभि कृतो यत्नो, न विषादस्य शामन ॥१३९॥
विमर्शेनाभिहित–चारु चारूदित वत्स। केवल मूढजन्तव । इदमेते न जानन्ति, भवचक्रनिवासिन ॥140॥
अन्यच्चात्र–कियन्ति सविधानानि, शृङ्गग्राहिकया तव । मया निवेदयिष्यन्ते, नगरे ... ॥१४१॥
इतश्च–अस्य स्वरूपविज्ञाने, बलवत्ते कुतूहलम् । अत समासतो वत्स। तुभ्यमेतन्निवेद्यते ॥१४२॥
आरूढ पर्वते तात। विवेकाऽऽख्येऽत्र निर्मले । इद विलोकयस्वे[न्येमु]व, स्पष्ट ... ॥१४३॥
गुणतश्च पुनर्वत्स। वर्ण्यमान मया स्फुटम् । इद यथावद्बुध्यस्व, भवचक्र महापुरम् ॥१४४॥

गतिचतुष्कवर्णनम् ॥१४५॥

अवान्तरपुरैर्वत्स। भूरिभि परिपूरितम् । यद्यपीद तथाप्यत्र, श्रेष्ठ पुरचतुष्टयम् ॥१४६॥
एक हि मानवावास, द्वितीय विबुधालयम् । तृतीय पशुसस्थान, चतुर्थं पापिपञ्जरम् त्रिभिर्विशेषकम् ॥१४७॥
एतानि तानि चत्वारि, प्रधानानीह पत्तने । पुराणि व्यापकानीति, सर्वेषा ... ॥१४८॥
तत्रेद मानवावास, महामोहादिभि सदा । अन्तरङ्गजनैर्व्याप्तमेतै कलकलाकुलम्
कथम्?–क्वचिदिष्टजनप्राप्तौ, तोषनिर्भरमानस[नुष मु]म् । क्वचिद् द्वेष्यजन... ॥१४९॥
क्वचिद्धनलवावाप्तिजनितानन्दसुन्दरम् । क्वचिद् द्रविणनाशोत्थबृहत्सन्तापतापितम् ॥150॥
क्वचिद्दुर्लभसत्सूनुजन्माद्भुतमहोत्सवम् । क्वचिदत्यन्तचित्तेष्टमरणाक्रन्दसङ्कुलम् ॥१५१॥
क्वचित्सुभटसङ्घातप्रारब्धरणभीषणम् । क्वचिन्मिलितसन्मित्रविमुक्तनयनोदकम् ॥१५२॥
क्वचिद्दारिद्र्यदौर्भाग्यविविधव्याधिपीडितम् । क्वचिच्छब्दादिसंभोगादलीकसुखनिर्भरम् रणम् ॥१५३॥
क्वचित्सन्मार्गदूरस्थपापिष्ठजनपूरितम् । क्वचिच्च धर्मबुद्ध्याऽपि, विपरीतविचेष्टितम् ॥१५४॥
कि चेह बहुनोक्तेन? चरितानि पुरा मया। यावन्ति वर्णितान्युच्चैर्महामोहादिचेष्टितैः ॥१५५॥
तावन्ति वत्स। दृश्यन्ते, सर्वाण्यत्र विशेषत । सतत मानवावासे, कारणं ... ॥१५६॥
तदिद मानवावास, किञ्चिल्लेशेन वर्णितम् । अधुना कथ्यते तुभ्य, ... ॥१५७॥
नाकरूपमिद ज्ञेय, सत्पुर विबुधालयम् । सत्पारिजातमन्दारसन्तानकवनाकुलम् चतुर्भि कलापकम् ॥१५८॥
उल्लसद्भिश्च गन्धाढ्यैर्नमेरुहरिचन्दनै । सदा विकसितै रम्य, कह्लार... ॥१५९॥
पद्मरागमहानीलवज्रवैडूर्यराशिभि । दिव्यहाटकसम्मिश्रैर्घटितानेकपाटकम् ॥१60॥
प्रेङ्खन्मणिप्रभाजालै, सदा निर्नष्टतामसम् । विचित्ररत्नसङ्घातमयूखै प्रति ... तयो ॥१६१॥
दिव्यभूषणसद्गन्धमाल्यसभोगलालितम् । नित्यप्रमोदमुद्दामगीतनृत्यमनोहरम ... पार्यते ॥१६२॥
नित्य प्रमुदितैर्दिव्यैस्तेजोनिर्जितभास्करै । लसत्कुण्डलकेयूरमलिहारवि ... टन्ति सविह्वला ॥१६३॥
कलालिकुलझङ्कारहारिमन्दारदामभि । अम्लानवनमालाभिर्नित्यम ... न किञ्चन ॥१६४॥
रतिसागरमध्यस्थै, प्रीणितेन्द्रियसुस्थितै । सदेदमीदृशैर्लोकै, नारका ॥१६५॥
य पूर्वं वेदनीयाख्यनृपते पुरुषो मया । साताभिधानस्ते ता। ॥१६६॥

स कर्मपरिणामेन, जनाह्लादविधायक । विहितो निखिलस्यास्य, पुरस्य वरनायक युग्मम् ॥९३॥
ततस्तेन लसद्भोग, सतताह्लादसुन्दरम् । इद हि वत्स! निशेष, धार्यते विवुधालयम् ॥९४॥
प्रकर्षेणोदित माम! महामोहादिभूभुजाम् । किमत्र प्रसरो नास्ति? येनेदमतिसुन्दरम् ॥९५॥
विमर्श प्राह मा मैव, मन्येथास्त्व कथञ्चन । प्रभवन्ति विशेषेण[प्रकर्षेण मु]यतोऽत्रान्तरभूभुज ॥९६॥
ईर्ष्याशोकभयक्रोधलोभमोहमदभ्रमै । सतताकुलित वत्स! पुर हि विवुधालयम् ॥९७॥
प्रकर्ष प्राह यद्येव, ततोऽत्र ननु कि सुखम्? । कि वेद हृष्टचित्तेन, भवता चारु वर्णितम् ? ॥९८॥
ततस्तेनोदित वत्स! न सुख परमार्थत । नाप्यत्र सुन्दर किञ्चित्तत्त्वतो विवुधालये ॥९९॥
केवल मुग्धवुद्धीना, विषयामिषवाञ्छिनाम् । अत्रास्था महती वत्स! मयेद तेन वर्णितम् ॥100॥
इतरथा–महामोहनरेन्द्रस्य, परिवारसमायुज । क्व राज्यम्? क्व च लोकाना, सुखवार्तेति दुर्घटम्(दुर्घटा प्र)? ॥१०१॥
तदिद ते समासेन, कथित विवुधालयम् । अधुना पशुसस्थान, कथ्यमान निवोधत[मे मु] ॥१०२॥
वुभुक्षारतिसन्तापपिपासावेदनातुरा । दाहशोक(ष प्र)भयोद्वेगवन्धताडनपीडिता ॥१०३॥
सतत दुखिता लोका, धार्यन्तेऽत्र पुरेऽखिला । महामोहादिभिर्वत्स! दीना शरणवर्जिता ॥१०४॥
धर्माऽधर्मविवेकेन, विकला कलुषात्मका । तिष्ठन्त्यनन्तजातीया, पुरेऽत्र पुरुषा किल ॥१०५॥
तदिद पशुसस्थान, वर्णित ते महापुरम् । इदानी वर्ण्यते वत्स! तदिद पापिपञ्जरम् ॥१०६॥
येऽत्र लोका महापापप्राग्भारभरपूरिता । वसन्ति तेषा दुखस्य, नास्ति विच्छेदसम्भव ॥१०७॥
योऽसौ ते वेदनीयाख्यनृपते पुरुषो मया । असातनामक पूर्वं, वर्णितस्तत्र मण्डपे ॥१०८॥
तस्येद भो! महामोहराजेन निखिल पुरम् । क्वचित्तोषितचित्तेन, भटभुक्त्या समर्पितम् ॥१०९॥
ततस्तेन पुरे सर्वे, परमाधार्मिनामकै । अत्र लोका कदर्थ्यन्ते, पुरुषै स्वनियोजितै ॥110॥
कथम्?–पाय्यन्ते तप्तताम्राणि, नीयन्ते क्षतचूर्णताम् । खाद्यन्ते निजमासानि, दह्यन्ते तीव्रवह्निना ॥१११॥
शाल्मलीरभिरोह्यन्ते, वज्रकण्टकसकुला । तार्यन्ते क्लेदवहुला, वत्स! वैतरणी नदीम् ॥११२॥
छिद्यन्ते करुणाहीनैरसिपत्रवनेरितै । कुन्ततोमरनाराचकरवालगदाशतै ॥११३॥
पच्यन्ते कुम्भपाकेन, पाट्यन्ते क्रकचादिभि । कलम्ववालुकापृष्ठे, भ्रज्ज्यन्ते चणका इव ॥११४॥
अन्यच्च–पाटका सन्ति सप्तात्र, तत्राद्ये पाटकत्रये । परमाधार्मिकैरित्थ, जन्यते दुखपद्धति ॥११५॥
परस्पर च कुर्वन्ति, दुखमेते निरन्तरम् । षट्सु पाटेषु भिद्यन्ते, सप्तमे वज्रकण्टकै ॥११६॥
किञ्च–वुभुक्षया कदर्थ्यन्ते, प्रपीड्यन्ते पिपासया । काष्ठीभवन्ति शीतेन, वेदनावेगविह्वला ॥११७॥
क्षणेन द्रवता यान्ति, क्षणेन स्थिररूपताम् । क्षणेन च विलीयन्ते, गृह्णन्ति च शरीरकम् ॥११८॥
न शक्त कोटिजिह्वोऽपि, दुख वर्णयितु जन । वसतामत्र लोकाना, यादृश पापिपञ्जरे ॥११९॥
एकान्तदुखगर्भार्थं, तदिद पापिपञ्जरम् । कथित ते समासेन, पुर वत्स! मयाऽधुना ॥120॥
तस्मादेतानि चत्वारि, विज्ञातानि यदि त्वया । पुराणि विदित वत्स! भवचक्र ततोऽधुना ॥१२१॥
अत्रान्तरे–आकर्ण्य मातुलीया ता, भारती भगिनीसुत । अदादादरतो दृष्टि, भवचक्रे समन्तत ॥१२२॥
ततो निशेषतो वीक्ष्य, तारविस्फारितेक्षण । त्वरयोद्विग्नचेतस्को, निजगाद ससभ्रम ॥१२३॥
कथम्?–हा हा हा माम! दृश्यन्ते, कष्टा सप्त महेलिका । असूर्या नगरेऽमुष्मिन्, दारुणाकारधारिका ॥१२४॥
आक्रान्ताशेषधामान, कृष्णा वीभत्सदर्शना । वेताल्य इव नाम्नाऽपि, लोककम्पविधायिका ॥१२५॥
एता का? किंप्रयुक्ता वा? कि वीर्या? कि परिच्छदा? । चेष्टन्ते कस्य वाधायै, तथैवकृतनिश्चया? ॥१२६॥
इद मे सर्वमाख्यात, यावदद्यापि नो त्वया । तावत्प्रतारण मन्ये, भवचक्रस्य वर्णनम् ॥१२७॥
अत समस्त मामोऽदो, मह्यमाख्यातुमर्हति । विमर्शेनोदित वत्स! निवोध त्व निवेद्यते ॥१२८॥

### जराजृम्भितम्

जरा रुजा मृतिश्चेति, खलता च कुरूपता । दरिद्रता दुर्भगता, नामतोऽमू प्रकीर्तिता ॥१२९॥

तत्र–सा कालपरिणत्याख्या, भार्या या मूलभूपते । तया प्रयोजिता तावज्जरेय भुवनोदरे ॥130॥
वाह्यान्यपि निमित्तानि, वर्णयन्तीह केचन । अस्या प्रयोजकानीति, लवणाद्यानि मानवा ॥१३१॥
वीर्यं पुनरदोऽमुष्या, यदाश्लेषेण देहिनाम् । हरत्यशेषसद्वर्णलावण्य वलशालिनाम् ॥१३२॥
गाढाश्लेषात्पुनर्वत्स! विपरीतमनस्कताम् । कुरुते शोच्यतां लोके, देहिना वीर्यशालिनाम् ॥१३३॥
वलीपलितखालित्यपिप्लुव्यङ्गकुवर्णता । कम्पकर्कशिकाशोकमोहशैथिल्यदीनता ॥१३४॥
गतिभङ्गान्ध्यबाधिर्यदन्तवैकल्यरीणता । जरापरिकर प्रोढो, वायुरत्र वलाग्रणी ॥१३५॥
अनेन परिवारेण, परिवारितविग्रहा । जरेयं विलसत्यत्र, मत्तेव[त्तावद् मु]गन्धहरितनी ॥१३६॥
अधुना यस्य बाधायै, चेष्टते कृतनिश्चया । जरेयमेव त वत्स! विपक्ष ते निवेदये ॥१३७॥
तस्या एव महादेव्या, विद्यतेऽनुचर पर । यौवनाख्ये महावीर्यश्चञ्चदुद्दामपोरुष ॥१३८॥
स च योगी तदादेशात्प्रविश्याङ्गेपु देहिनाम् । तनोति बलमौर्जित्य, वन्धुराकारधारिताम् ॥१३९॥
किञ्च–विलासहासविव्वोकविपर्यासपराक्रमै । वल्गनोत्प्लवनोल्लासलासधावनसम्मदै ॥140॥
गर्वशोण्डीर्यपिङ्गत्वसाहसादिभिरुद्धतै । युत पदातिभिर्लोकेर्लीलया स विजृम्भते ॥१४१॥
तत्सम्वन्धादमी भोगसम्भोगसुखनिर्भरम् । आत्मान मन्वते लोका, भवचक्रनिवासिन ॥१४२॥
ततस्त निजवीर्येण, यौवनाख्यमिय जरा । मृद्नाति सपरीवार, क्रुद्धा कृत्येव साधकम् ॥१४३॥
ततस्ते जरसा वत्स! जना मर्दितयौवना । परीता दु खकोटीभिर्जायन्ते दीनविक्लवा ॥१४४॥
स्वभार्ययाऽप्यवज्ञाता, परिवाराऽवधीरिता । उत्प्रास्यमाना स्वापत्यैस्तरुणीभिरितिरस्कृता ॥१४५॥
स्मरन्त पूर्वभुक्तानि, कासमना मुहुर्मुहु । श्लेष्माणमुद्गिरन्तश्च, लुठन्तो जीर्णमञ्चके ॥१४६॥
परतप्तिपरा प्राय, क्रुध्यन्तश्च पदे पदे । आक्रान्ता जरया वत्स! केवल शेरते जना [त्रिभिर्विशेषकम्] ॥१४७॥
एपा जरा समासेन, लोकपीडनतत्परा । वर्णिता तेऽधुना वक्ष्ये, रुजा वैवस्वती भुजाम् ॥१४८॥

## रुजारौद्रता

यो वेदनीयनृपतेरसाताख्यो वयस्यक । वर्णितस्तत्प्रयुक्तेय, रुजा तेन दुरात्मना ॥१४९॥
वर्णयन्ति निमित्तानि, बहिर्भूतानि सूरय । अस्या प्रयोजकान्युच्चैर्नानाकाराणि शास्त्रत ॥150॥
धीधृतिस्मृतिविभ्रश, सम्प्राप्ति कालकर्मणाम् । असात्म्यार्थागमश्चेति, रुजाहेतुरय गण ॥१५१॥
वातपित्तकफाना च, यद्यत्सक्षोभकारणम् । रजस्तमस्कर चेति, तत्तदस्या प्रयोजकम् ॥१५२॥
किन्तु–वाह्यान्यपि निमित्तानि, स एव परमार्थत । असाताख्य प्रयुङ्क्तेऽत, स एव परकारणम् ॥१५३॥
प्रविष्टेय शरीरेपु, योगित्वेन शरीरिणाम् । स्वास्थ्य निहत्य वीर्येण, करोत्यातुरता पराम् ॥१५४॥
ज्वराऽतिसारकुष्ठार्श प्रमेहप्लीहधूमका । अम्लकग्रहणीश्वाकहिक्काश्वासक्षयभ्रमा ॥१५५॥
गुल्महृद्रोगसमोहहृल्लासानाहकम्पका । कण्डूकोष्ठारुचीशोफभगन्दरगलामया ॥१५६॥
पामाजलोदरोन्मादशोपवीसर्पच्छर्दय । नेत्ररोगशिरोरोगविद्रधिप्रमुखा भटा ॥१५७॥
सर्वेऽप्यस्या परीवार, स्वात्मभूतो महावल । यत्प्रभावादिय वत्स! रुजा जेतु न पार्यते [चतुर्भि कलापकम्] ॥१५८॥
अस्ति नीरोगता नाम, वेदनीयाख्यभूपते । पदातिनेह सातेन, प्रयुक्ता भवचक्रके ॥१५९॥
सा वर्णवलसोन्दर्यधीधृतिस्मृतिपाटवै । परीता कुरुते लोक, सुखसन्दर्भनिर्भरम् ॥१60॥
ता चेपा दारुणा हत्वा, क्षणान्नीरोगता रुजा । प्रवर्तयति लोकाना, तीव्रार्ति तनुचित्तयो ॥१६१॥
तेनेय तद्विघाताय, रुजेत्थ वत्स! वल्गते । एतदाक्रान्तमूर्तीना, चेष्टाऽऽख्यातु न पार्यते ॥१६२॥
तथाहि–कूजन्ति करुणध्वानै, क्रन्दन्ति विकृतस्वरा । रुदन्ति दीर्घपूत्कारैरारटन्ति सविह्वला ॥१६३॥
गाढ दीनानि जल्पन्ति, रुण्टन्ति च मुहुर्मुहु । लुठन्तीतस्ततो मूटाश्चेतयन्ते न किञ्चन ॥१६४॥
नित्यमार्ता सदोद्विग्ना, विक्लवास्त्राणवर्जिता । भयोद्भ्रान्तधियो दीना, नरकेष्विव नारका ॥१६५॥
भवन्ति भवचक्रेऽत्र, सत्त्वा पापिष्ठयाऽनया । हत्वा नीरोगता वत्स! रुजया परिपीडिता ॥१६६॥

तदेषा लेशतो वत्स! रुजा ते गदिता मया । मृतिर्मर्दितविश्वेय, साम्प्रत ते निवेद्यते ॥१६७॥

## मृतिमारकता

योऽसौ ते दर्शित पूर्वमायुर्नामा महीपति । चतुर्नरपरीवारस्तत्क्षयोऽस्या प्रयोजक ॥१६८॥
प्रयुज्यते विचित्रैश्च, वहिर्हेतुशतैरियम् । विषाग्निशस्त्रपानीयगिरिपातातिसाध्वसे ॥१६९॥
बुभुक्षाव्याधिदुर्व्यालपिपासोष्णहिमश्रमै । वेदनाहारदुर्ध्यानपराघाताऽरतिभ्रमे ॥170॥
प्राणापानोपरोधाद्ये, कि तु तैरप्युदीरिता । तमेवायु क्षय प्राप्य, मृतिरेषा विवल्गते ॥१७१॥
वीर्यं पुनरदोऽमुष्या, यदिय देहिना क्षणात् । हरत्युच्छ्वासनिश्वास, चेष्टा भाषा सचेतनाम् ॥१७२॥
विधत्ते रक्तनिर्नाश, वैकृत्य काष्ठभूतताम् । दौर्गन्ध्य च क्षणादूर्ध्वं, स्वपन दीर्घनिद्रया ॥१७३॥
परिवारस्तु नास्त्यस्या, न चेय तमपेक्षते । इय हि तीव्रवीर्येण, सदेका किमनुष्यिका ॥१७४॥
यतोऽस्या नाममात्रेण, भुवन सचराचरम् । सनरेन्द्र सदेवेन्द्र, कम्पते त्रस्तमानसम् ॥१७५॥
सद्वीर्यवलभाजोऽपि, प्रभवोऽपि जगत्त्रये । आसन्नामपि मत्त्वेना, भवन्ति भयकातरा ॥१७६॥
अत परिच्छदेनास्यास्तात! कि वा प्रयोजनम्? । एकिकापि करोत्येषा, दूरे यत्श्रूयतेऽद्भुतम् ॥१७७॥
अत एव सदेश्वर्यादियमुद्दामचारिणी । किञ्चिन्नापेक्षते वत्स! विचरन्ती यथेच्छया ॥१७८॥
ईश्वरेषु दरिद्रेषु, वृद्धेषु तरुणेषु च । दुर्वलेषु वलिष्ठेषु, धीरेषु करुणेषु च ॥१७९॥
आपद्गतेषु हृष्टेषु, वैरभाजिषु वन्धुषु । तापसेषु गृहस्थेषु, समेषु विषमेषु च ॥180॥
किञ्चात्र वहुनोक्तेन? सर्वावस्थागतेष्वियम् । प्रभवत्येव लोकेषु, भवचक्रनिवासिषु ॥१८१॥
अस्त्यङ्गभूता सद्भार्या, जीविका नाम विश्रुता । तस्यायुर्नामनृपतेर्लोकाह्लादनतत्परा ॥१८२॥
तद्वलादवतिष्ठन्ते, निजस्थानेष्वमी जना । अतो हितकरत्वेन, सा सर्वजनवल्लभा ॥१८३॥
अतस्ता जीविका हत्वा, मृतिरेषा सुदारुणा । लोक स्वस्थानतोऽन्यत्र, प्रेषयत्येव लीलया ॥१८४॥
प्रहिताश्च तथा यान्ति, दृश्यन्ते न यथा पुन । नीयन्ते च तथा केचिद्यथाऽसो रिपुकम्पन ॥१८५॥
व्रजन्तश्च धन गेह, वन्धुवर्गं परिच्छदम् । सर्वं विमुच्य गच्छन्ति, मृत्यादेशेन ते जना ॥१८६॥
एकाकिन कृतोद्योगा, सुकृतेतरशम्वला । दीर्घ मार्गं प्रपद्यन्ते, सुखदुखसमाकुलम् ॥१८७॥
तन्निजास्तु तथा कृत्वा, रोदनाक्रन्दगुन्दलम् । लगन्ति स्वीयकृत्येषु, खादन्ति च पिवन्ति च ॥१८८॥
विभजन्ते धन भगै[भोगै मु]युध्यन्ते च तदर्थिन । सारमेया इवासाद्य, किञ्चिदामिषखण्डकम् ॥१८९॥
तदर्थं तु कृताघौधास्ते जना दुखकोटिभि । केवला परिपीड्यन्ते मृत्यादिष्टा वहिर्गता ॥190॥
एव च स्थिते—निवेदिता मृतिर्वत्स! नानाकारेषु धामसु । सचार्यते यया लोको, भवचक्रे मुहुर्मुहु ॥१९१॥

## खलताऽऽख्यानम्

अधुना वर्ण्यमानेय, खलताऽप्यवधार्यताम् । एतत्स्वरूपविज्ञाने, यद्यस्ति तव कौतुकम् ॥१९२॥
अस्ति पापोदयो नाम, सेनानीर्मूलभूपते । प्रयुक्ता तात! तेनेषा, खलता भवचक्रके ॥१९३॥
वहिर्निमित्तमप्यस्या, किल दुर्जनसङ्गम । केवल तत्त्वत सोऽपि, पापोदयनिमित्तक ॥१९४॥
वीर्यमस्या शरीरेषु, वर्तमानेयमुच्चकै । कुरुते देहिना दुष्ट, मन पापपरायणम् ॥१९५॥
शाठ्यपैशुन्यदौशील्यवैभाष्यगुरुविप्लवा । मित्रद्रोहकृतघ्नत्वनैर्लज्ज्यमदमत्सरा ॥१९६॥
मर्मोद्घट्टनवैयात्ये, परपीडननिश्चया । ईर्ष्यादयश्च विज्ञेया, खलतापरिचारिका युग्मम् ॥१९७॥
अस्ति पुण्योदयो नाम, द्वितीयो मूलभूपते । सेनानीस्तत्प्रयुक्तोऽस्ति, सौजन्याख्यो नरोत्तम ॥१९८॥
स वीर्यधैर्यगाम्भीर्यप्रश्रयस्थैर्यपेशलै । परोपकारदाक्षिण्यकृतज्ञत्वार्जवादिभि ॥१९९॥
युत पदातिभिस्तात! जन वन्धुरमानसम् । कुर्वाणो निजवीर्येण, सत्सुधाक्षोदपेशलम् ॥200॥
सद्धर्मलोकमर्यादा, सदाचारं सुमित्रताम् । घटयश्चातुला लोके, सद्विश्रम्भसुखासिकाम् ॥२०१॥
जनयत्येव केषाञ्चिद्भवचक्रेऽपि देहिनाम् । निर्मिथ्य चारुतावुद्धि, गाढ सौन्दर्ययोगत ॥२०२॥

तस्येय खलता तात! नितरा परिपन्थिनी । यत सोऽमृतमेषा तु, कालकूटविषाधिका ॥२०३॥
अतो निहत्य त वीर्यादियं पापिष्ठमानसा । एव विवर्तते वत्स! पुरेऽत्र सपरिच्छदा ॥२०४॥
एनया हतसौजन्याश्चेष्टन्ते यादृश जना । तदुक्त्याऽल तथापीषद्भणित्वा तव कथ्यते ॥२०५॥
चर्चितानेकदुर्माया, परवञ्चनतत्परा । निष्पिष्टा द्वेषयन्त्रेण, मुक्तस्नेहा खला स्फुटा ॥२०६॥
अगृह्यमाणा सत्कृत्यैर्भषन्त· सस्तुतेष्वपि । खादन्तो निजवर्गांश्च, ते खला मण्डलाधिका ॥२०७॥
उत्पादयन्तश्छिद्राणि, पातयन्त स्थिरामपि । कार्ये त्रिपिटिका कुर्युरुद्वेग ते खला खलु ॥२०८॥
चित्तेन चिन्तयन्त्यन्यदन्यज्जल्पन्ति भाषया । क्रिययाऽन्यत्र(च्च) चेष्टन्ते, ते खला खलताहता ॥२०९॥
क्वचिदुष्णा क्वचिच्छीता, क्वचिन्मध्यमता गता । नैकरूपा भवन्त्येते, सान्निपाता इव ज्वरा ॥210॥
किञ्च–तवानुरोधतो वत्स! कथाप्येषा मया कृता । स्वय त्वमीषां नामापि, नाहमाख्यातुमुत्सहे ॥२११॥

## कुरूपताक्रूरता

तदेषा खलता तात । लेशतो गदिता मया । निबोध साम्प्रत वत्स । वर्ण्यमाना कुरूपताम् ॥२१२॥
योऽसौ ते पूर्वमाख्यातो, नामनामा महीपति । स दौष्ट्येन युनक्त्येना, भवचक्रे कुरूपताम् ॥२१३॥
बाहुविध्य दधत्युच्चैर्बहिरङ्गानि भावत । तस्यैवादेशकारीणि, यान्यस्या कारणानि भो । ॥२१४॥
तथाहि–दुष्टाहारविहाराद्यै, प्रकुप्यन्त कफादय । भूयासो देहिना देहे, जनयन्ति कुरूपताम् ॥२१५॥
वीर्यं पुनरदोऽमुष्या, यदेषा देहवर्तिनी । सदा हि कुरुते रूप, दृष्टेरुद्वेगकारणम् ॥२१६॥
खञ्जताकुण्टताकाण्यवामनत्वविवर्णता । कुब्जत्वान्धत्ववाडव्यहीनाऽङ्गत्वादि(ति)दीर्घता ॥२१७॥
इत्याद्या परिवारेऽस्या, वर्तन्ते वत्स! दुर्जना । यत्सम्पर्कादिय हृष्टा, विलसत्यतिलीलया युग्मम् ॥२१८॥
अस्ति प्रयुक्ता तेनैव, नामनाम्ना सुरूपता । सुप्रसन्नेन तन्मूलवहिरङ्गनिमित्तजा ॥२१९॥
तथाहि–शुभाहारविहाराद्यै, प्रसीदन्त कफादय । हेतवो देहिना देहे, जनयन्ति सुरूपताम् ॥220॥
सा जन भवचक्रेऽत्र, दृष्टेराह्लादकारणम् । प्रसन्नवर्णं पद्माक्ष, सुविभक्ताङ्गभूषणम् ॥२२१॥
गजेन्द्रगामिन रम्य, सुराकारानुकारिणम् । करोति निजवीर्येण, लोकमोदनकारिणी ॥२२२॥
तस्या विपक्षभूतेय, प्रकृत्यैव कुरूपता । तां हत्वाऽऽविर्भवत्येषा, देहिदेहेषु योगिनी ॥२२३॥
तत सुरूपताहीना, प्रादुर्भूतकुरूपता । भवन्ति ते जना वत्स! दृष्टेरुद्वेगकारिण ॥२२४॥
अनादेया स्वहीनत्वशङ्किता हास्यभूमय । भवन्ति क्रीडनस्थान, बालाना रूपगर्विणाम् ॥२२५॥
निर्गुणाश्च भवन्त्येते, प्रायशो वामनादय । आकृतौ च वसन्त्येते, प्रकृत्या निर्मला गुणा ॥२२६॥

## दरिद्रतादौशील्यम्

विडम्बनकारी लोके, तदिय ते कुरूपता । निरूपिताऽधुना वत्स! कथयामि दरिद्रताम् ॥२२७॥
प्रयुक्ता तावदेषाऽपि, वत्स! तेनैव पापिना । अन्तराय पुरस्कृत्य, पापोदयचमूभृता ॥२२८॥
प्रयुञ्जते पुनर्लोके, हेतवो ये बहिर्गता । एना दरिद्रता तात! तानह ते निवेदये ॥२२९॥
जलज्वलनलुण्टाकराजदायादतस्करा । मद्यद्यूतादिभोगित्ववेश्याव्यसनदुर्नया ॥230॥
ये चान्ये कुर्वते केचिद्धनहानि वयस्यिकाम् । अस्यास्ते हेतव सर्वे, वत्स! ज्ञेया प्रयोजका युग्मम् ॥२३१॥
केवल तत्त्वतस्तेऽपि, सान्तराय चमूभृतम् । पापोदयाख्य कुर्वन्ति, प्रह्वमस्या प्रयोजकम् ॥२३२॥
दुराशापाशसमूढ, धनगन्धविवर्जितम् । वीर्येण कुरुते लोकमेषा तात! दरिद्रता ॥२३३॥
दैन्य परिभवो मौढ्य, प्रायशो बह्वपत्यता । हृदयन्यूनता याच्ञा, लाभाऽभावो दुरिच्छता ॥२३४॥
बुभुक्षाऽरतिसन्तापा, कुटुम्बपरिदेवनम् । अस्या इत्यादयो वत्स! भवन्ति परिचारका युग्मम् ॥२३५॥
अस्ति पुण्योदयाख्येन, प्रयुक्त पृथिवीतले । जनाह्लादकरोऽत्यन्तमैश्वर्याख्यो नरोत्तम ॥२३६॥
स सौष्ठवमहोत्सेकहृदयोन्नतिगौरवै । जनवाल्लभ्यलालित्यमहेच्छादिविवेष्टित ॥२३७॥
सुभूरिधनसम्भारपूरित जनताधिकम् । करोति सुखित मान्य, लोकमुद्दामलीलया ॥२३८॥

इय हि चेष्टते तात। परिवारसमेयुषी । तदुद्दलनचातुर्यमाविभ्राणा दरिद्रता ॥२३९॥
न तेन सार्धमेतस्या, सहावस्थानमीक्ष्यते । एतत्त्रासादसो वत्स। दूरत प्रपलायते ॥240॥
ततोऽनया हतैश्वर्यास्ते जना दुखपीडिता । गाढ विह्वलता यान्ति, विधुरीभूतमानसा ॥२४१॥
दुराशापाशवद्धत्वाद्, भूयो धनलवेच्छया । नानोपायेपु वर्तन्ते, ताम्यन्ति च दिवानिशम् ॥२४२॥
ते च पापेदयेनैषामुपाया वहवोऽप्यलम् । प्रवलेन विपाट्यन्ते, खे घना इव वायुना ॥२४३॥
ततो च स्फटन्त्यमी मूढा, खिद्यन्ते मनसाऽधिकम् । शोचन्ति पुरतोऽन्येपा, वाञ्छन्ति परसम्पद ॥२४४॥
कुतो घृत कुतस्तैल, कुतो धान्य क्व चेन्धनम्? । कुटुम्वचिन्तया दग्धा, इति रात्रौ न शेरते ॥२४५॥
कुर्वन्ति निन्द्यकर्माणि, धर्मकर्मपराड्मुखा । व्रजन्ति शोच्यता लोके लघीयासरतृणादपि ॥२४६॥
परप्रेष्यकरा दीना क्षुत्क्षामा मलपूरिता । भूरिदुखशतैर्ग्रस्ता, प्रत्यक्षा इव नारका ॥२४७॥
भवन्ति ते जनास्तात। येपामेपा दरिद्रता । ऐश्वर्याख्य निहत्युच्चै, करोत्यालिङ्गन मुदा ॥२४८॥

## दुर्भगतादुष्टता

तदेवमीरिता तात। तुभ्यमेपा दरिद्रता । इयं दुर्भगतेदानीं, गद्यमाना निशम्यताम् ॥२४९॥
रूष्टेन भवचक्रेऽत्र, केषाञ्चिद्देहिनामलम् । प्रयुक्तेयं विशालाक्षी, तेन नाममहीभुजा ॥250॥
वहिरङ्ग भवेदस्यास्तात। चित्र प्रयोजकम् । वेरूप्यदुस्वभावत्वदुष्कर्मवचनादिकम् ॥२५१॥
तत्तु नैकान्तिक ज्ञेय, स एव परमार्थत । हेतुरैकान्तिकोऽमुष्या, नामनामा महीपति ॥२५२॥
वीर्यं तु वर्णयन्त्यस्या, ज्ञाततत्त्वा मनीपिण । अवल्लभमतिद्वेष्य, यदेपा कुरुते जनम् ॥२५३॥
दीनताऽभिभवो लज्जा, चित्तदुखासिकाऽतुला । न्यूनता लघुता वेपविज्ञानफलहीनता ॥२५४॥
इत्याद्या परिवारेऽस्या, भवन्ति वहवो जना· । पुरेऽत्र यद्वलादेपा,वम्भ्रमीति वलोद्धुरा ॥२५५॥
अस्ति प्रयुक्ता तेनैव, सुप्रसन्नेन देहिनाम् । नाम्ना सुभगता नाम्ना, प्रख्याता जनमोदिनी ॥२५६॥
सा सौष्ठवमनरतोपगर्वगौरवसम्मदै । आयत्यपरिभूताद्यै, परिवारितविग्रहा ॥२५७॥
व्रजन्ती भवचक्रेऽत्र, जनमानन्दनिर्भरम् । करोति सुखित मान्य, निशेपजनवल्लभम् ॥२५८॥
तस्याश्च प्रतिपक्षत्वादिय दुर्भगताऽधमा । उन्मूलनकारी तात । करिणीव लताते ॥२५९॥
अत सोन्मूलिता येषामेनया हितकारिणी । ते प्रकृत्यैव जायन्ते, जनाना गाढमप्रिया ॥260॥
स्वभर्त्रेऽपि न रोचन्ते, परेभ्यो नितरा पुन । वन्धुभ्योऽपि न भासन्ते, जना दुर्भगताहता ॥२६१॥
गम्यत्वात्ते सपत्नाना, वल्लभानामवल्लभा । नयन्ति क्लेशत कालमात्मनिन्दापरायणा ॥२६२॥
तदेपाऽपि समासेन, वत्स! दुर्भगता मया । तुभ्य निगदिता याऽसावुद्दिष्टा सप्तमी पुरा ॥२६३॥
एव च स्थिते–जरा रुजा मृतिश्चेति, खलता च कुरूपता । दरिद्रता दुर्भगता, उद्दिष्टा क्रमशो यथा ॥२६४॥
एता या यत्प्रयुक्ता वा, यद्वीर्या यत्परिच्छदा । चेष्टन्ते यस्य वाधायै, निर्दिष्टा क्रमशस्तथा युग्मम् ॥२६५॥
एताश्चैव विवलान्ते, विपक्षक्षयमुच्चकै । कुर्वाणा भवचक्रेऽत्र, लोकपीडनतत्परा ॥२६६॥
प्रकर्षेणोदित माम। किमासा विनिवारका । लोकपाला न विद्यन्ते, नगरेऽत्र नृपादय ? ॥२६७॥
विमर्शेनोदित वत्स। नैता शक्या नृपादिभि । निवारयितुमित्यत्र, कारण ते निवेदये ॥२६८॥
ये केचिद्वीर्यभूयिष्ठा, प्रभवो भवनोदरे । तेष्वपि प्रभवन्त्येता, सर्वेपु प्रसभ मुदा ॥२६९॥
सर्वत्र विचरन्तीनामासामुद्दामलीलया । गजानामिव मत्ताना, नास्ति मल्लो जगत्त्रये ॥270॥
स्वप्रयोजनवीर्येण, विलसन्तीर्निरङ्कुश । को नाम भुवने साक्षादेता खलयितु क्षम ? ॥२७१॥

## निश्चय–व्यवहारविभाग

प्रकर्षेणोक्त→माम। तत्कि पुरुषेण न यतितव्यमेवामूषा निराकरणे? विमर्शेनोक्त→वत्स। निश्चयतो निराकरणे न यतितव्यमेव, यतो न शक्यत एवावश्यभाविनीनामासा निराकरण कर्तुं, विमृश्यकारी च पुरुष कथमशक्येऽर्थे प्रवर्तते?(तेंत?) न हि कर्मपरिणामकालपरिणतिस्वभावलोकस्थितिभवितव्यतादिसपूर्णकारणसामग्रीवलप्रवर्तितानामवश्यमाविर्भवन्तीनाममूषामन्येपा

वा कार्यविशेषाणा निराकरणे यतमान पुरुष प्रयासादृते कञ्चिदर्थं पुष्णाति । प्रकर्ष प्राह→माम। पूर्वं भवता प्रत्येकमासा जरारुजादीनामपराण्येवान्तरङ्गवहिरङ्गाणि प्रवर्तकानि निर्दिष्टानि तत्कथमिदानी कर्मपरिणामादीनि प्रवर्तकत्वेनोच्यन्ते? विमर्शेनोक्त→तानि विशेषकारणानीतिकृत्वा प्राधान्येनोक्तानि, परमार्थतस्तु यथानिर्दिष्टकर्मपरिणामादिकारणकलापव्यापारमन्तरेण न नयननिमेषोन्मेषमात्रमपि कार्यजात किञ्चिज्जगति जायते । प्रकर्ष प्राह–माम। यद्येव तत पुरुषेण किमात्मनो निजवर्गीणस्य वाऽमूरभ्यर्णवर्तिनीरापतन्तीरुपलक्ष्य न कर्तव्य एव कश्चिदासा निवारणोपाय ? कि नान्वेषणीया एव वैद्योषधमन्त्रतन्त्ररसायनचतुर्विध–दण्डनीत्यादय समुपस्थितजरारुजामृत्यादिनिर्घातनोपाया ? कि सर्वथा *पादप्रसारिकैवात्र* श्रेयस्करी? किमकिञ्चित्कर एव पुरुषो हेयोपादेयहानोपादाने? ननु प्रत्यक्षविरुद्धमिद, यत प्रवर्तन्ते एव पुरुषा हिताहितयोरवाप्तिनिराकरणकामतया, प्रवृत्ताश्चोपायेन प्राप्नुवन्ति हितमर्थं, निराकुर्वन्ति चोपस्थितमप्युपायत एवाहितमिति । विमर्शेनोक्त→वत्स। विश्रब्धो भव मोत्तालता यासी, परामृश वचनैदम्पर्यं, निश्चयतो हि मयोक्त यथा मा प्रवर्तिष्ट पुरुष, व्यवहारतस्तु तत्प्रवृत्ति को वारयति? पुरुषेण हि सर्वत्र पुरुषापराधमल सदनुष्ठाननिर्मलजलेन क्षालनीय, तदर्थं हि तत्प्रवृत्ति, यतो नाकलयत्यसो तदा भाविकार्यपरिणाम, ततो व्यवहारत सर्वहेयोपादेयहानोपादानसाधन समाचरत्येव। किञ्च–चिन्तित चानेन यदुत–अह न प्रवर्ते तथाप्यसावप्रवर्तमानो नासितु लभते, यत कर्मपरिणामादिकारणसामग्र्या वेतालाविष्ट इव हठात्प्रवर्तत एव, न चाकिञ्चित्कर पुरुष, किन्तर्हि? स एव प्रधान तदुपकरणत्वात्कर्मपरिणामादीना, न च पादप्रसारिका श्रेयस्करी, व्यवहारत पुरुषप्रवृत्तेर्हिता–ऽहितनिर्वर्तनापवर्तनक्षमत्वात्, निश्चयतस्तु नि शेषकारणकलापपरिणामसाध्यत्वात् कार्याणा, *अन्यथा* पूर्वमाकलिते पुरुषेण वैपरीत्येन तु परिणते पश्चात्प्रयोजने न विधेयौ हर्षविषादौ समालम्बनीयो निश्चयाभिप्रायो यथेत्थमेवानेन विधातव्यमितिभावनया विधेयो मध्यस्थभाव, न चैतच्चिन्तनीय यद्येवमहमकरिष्य ततो नेत्थमभविष्यदिति, यतस्तथाऽवश्यभाविन कार्यस्य कुतोऽन्यथाकरणम्? नियता हि निश्चयाकूतेन नियतकारणसामग्रीजन्या च सकलकाल तथैवानन्तकेवलिज्ञानगोचरीभूता च समस्ताऽपि जगति वहिरङ्गकार्यपर्यायमाला, सा यया परिपाट्या व्यवस्थिता यैश्च कारणैराविर्भावनीया तयैव परिपाट्या तान्येव च कारणान्यासाद्याविर्भवति, कुतस्तस्यामन्यथाभाव ? अतोऽतीतचिन्ता मोहविलसितमेव । व्यवहारतोऽपि हितावाप्तयेऽहितनिषेधाय च प्रवर्तमानेन पुरुषेण सुपर्यालोचितकारिणा नानैकान्तिकानात्यन्तिके तत्साधने भेषजमन्त्रतन्त्ररसायनदण्डनीत्यादो महानादरो विधेय, अपि त्वैकान्तिकात्यन्तिक तत्साधनमन्वेषणीय, सर्वथा सदनुष्ठानोपायेन तत्र यातव्य यत्रेते जरारुजादय सर्वेऽप्युपद्रवा न प्रभवन्ति।

### आनन्दमयमुक्तिहेतुभवनिर्वेदाभावे हेतु

प्रकर्ष प्राह→माम। कुत्र पुनरेते न प्रभवन्ति? विमर्शेनोक्तम्→

अस्ति सन्नगरी रम्या, निर्वृतिर्नाम विश्रुता । अनन्तानन्दसन्दोहपरिपूर्णा निरत्यया ॥१॥
तस्या न प्रभवन्त्येव, सस्थितानामुपद्रवा । जरारुजाद्या सा यस्मात्सर्वोपद्रववर्जित ॥२॥
तस्या च गन्तुकामेन, सेव्या सद्वीर्यवृद्धये । पुरुषेण सदा तत्त्ववोधश्रद्धानसत्क्रिया ॥३॥
ततो विवृद्धवीर्याणा, तस्या मार्गेऽपि तिष्ठताम् । तनूभवन्ति दुखानि, वर्धते सुखपद्धति ॥४॥
इद तु नगर भद्र। भवचक्र चतुर्विधम् । सदैवामुक्तमेताभिरतथाऽन्यैर्भूर्युपद्रवै ॥५॥
को वाऽत्र गणयेत्तात। क्षुद्रोपद्रवकारिणाम् । पुरे सख्यानमप्येषा, स्वस्थानमिदमीदृशम् ॥६॥
प्रकर्षः प्राह→मामेद, नगर ननु सर्वथा । एव कथयतो दुखवहुल कथित त्वया ॥७॥
साधु साधूदित वत्स। वुद्ध वत्सेन भाषितम् । विज्ञात भवचक्रस्य, सारमित्याह मातुल ॥८॥
प्रकर्ष प्राह→यद्येव, ततोऽत्र नगरे जना । वसन्त कि सुनिर्विण्णा ? कि वा नेति? निवेद्यताम् ॥९॥
विमर्शेनोदित→वत्स। निर्वेदो नास्ति देहिनाम् । अत्रापि वसता नित्य, तत्राऽऽकर्णय कारणम् ॥10॥
य एते कथितास्तुभ्य, महामोहादिभूभुज । अन्तरङ्गा स्ववीर्येण, वशीकृतजगत्त्रया ॥११॥
एतेषा कोशल किञ्चिदपूर्व जनमोहने । विद्यते तद्वशेनेते, निर्विद्यन्ते न नागरा ॥१२॥
एते हि चरटप्राया, दुखदा शत्रवोऽतुला । महामोहादयो वत्स। भवचक्रनिवासिनाम् ॥१३॥
तथापि प्रतिभासन्ते, तेषा मोहितचेतसाम् । यथैते सुहृदोऽस्माक, वत्सला सुखहेतव ॥१४॥

इद च नगर वत्स! दु खसङ्घातपूरितम् । तथाप्यत्र स्थिता लोका, मन्यन्ते सुखसागरम् ॥१५॥
निश्चिन्ता निर्गमोपाये, वसनेनाऽत्र मोदिता । निवसन्ति सदा तुष्टा, महामोहादिबान्धवे ॥१६॥
योऽपि निर्गमनोपाय, भवचक्रात्प्रभाषते । तस्याप्येतेऽपि रुष्यन्ति, यथैष सुखवञ्चक ॥१७॥
तच्च तच्च प्रकुर्वन्ति, महायत्नेन सर्वथा । येनात्रैव भवत्येषा, वास पापेन कर्मणा ॥१८॥
तदेव निजवीर्येण, महामोहादिशत्रुभि । क्रोडीकृता न जानन्ति, किञ्चिदेते तपस्विन ॥१९॥
शब्दादिसुखसम्भोग, तुच्छ दु खात्मक सदा । एते मनसि मन्यन्ते, यथेदममृतोपमम् ॥20॥
ततोऽमी यावदेतेषा, प्रभवो वत्स! भूभुजाम् [ज मु] । भवचक्रे न निर्विण्णास्तावल्लोका कदाचन ॥२१॥

## मिथ्यादर्शनवर्णने षड्दर्शनवर्णनम्

प्रकर्ष प्राह यद्येव, ततोऽमीषा दुरात्मनाम् । सदोन्मत्तकतुल्याना, किमस्माक विचिन्तया? ॥२२॥
केवल माम! सर्वेषा, महामोहादिभूभुजाम् । दर्शित भवचक्रेऽत्र, मम वीर्यं त्वया स्फुटम् ॥२३॥
यस्त्वसौ वर्णित पूर्वं, महामोहमहत्तम । वष्ट कुदृष्टिपत्नीको, मिथ्यादर्शननामक ॥२४॥
तेन यद्भवचक्रेऽत्र, स्ववीर्येण विजृम्भितम् । तन्मेऽद्यापि त्वयाऽऽख्यात, नापि सदर्शितं मम ॥२५॥
ततोऽह द्रष्टुमिच्छामि, श्रोतु च गुणरूपत । तद्वशीभूतलोकाना, चरित माम! साम्प्रतम् ॥२६॥
विमर्श प्राह→नगर, समस्तमिदमञ्जसा । प्रायेण वर्तते तस्य, वशे नास्त्यत्र सशय ॥२७॥
तथाहि→यदिद वर्णित तेऽत्र, मया पुरचतुष्टयम् । तत्र सर्वत्र विद्यन्ते, लोकास्तद्वशवर्तिन ॥२८॥
तथापि ये विशेषेण, तस्याऽऽज्ञाकारिणो जना । तेषा स्थानानि ते भद्र! दर्शयामि परिस्फुटम् ॥२९॥
ततश्चोर्ध्वं विशेषेण, कृत्वाऽसो दक्षिण करम् । तर्जन्या दर्शयत्येव, तानि स्थानानि यत्नत ॥30॥
अमूनि मानवावासे, दृश्यन्ते यानि सुन्दर! । अभ्यन्तरपुराणीह, षडवान्तरमण्डले ॥३१॥
एतानि वत्स! लोकाना, तेषा स्थानानि लक्षय । मिथ्यादर्शनसज्ञेन, ये वशीकृतचेतस ॥३२॥
प्रकर्षेणोक्त→माम! किन्नामकान्येतानि पुराणि? किमभिधाना वैतेषु लोका प्रतिवसन्ति? विमर्शेनोक्त→वत्स! समाकर्णय→
एकमत्र पुरे तावन्नैयायिकमितीरितम् । नैयायिकाश्च गीयन्ते, ते जना येऽत्र सस्थिता ॥३३॥
अन्यद्वैशेषिक नाम, पुरमत्राभिधीयते । वैशेषिकाश्च ते लोका, येऽस्य मध्ये व्यवस्थिता ॥३४॥
तथाऽपर जनै साख्य, पुरमत्र प्रकाशितम् । साख्याश्च ते विनिर्दिष्टा, लोका येऽत्र वसन्ति भो ॥३५॥
इहापर पुनर्बौद्ध, पुरमाख्यायते जनै । प्रसिद्धा बौद्धसज्ञाश्च, ते जना येऽस्य मध्यगा ॥३६॥
मीमासकपुर नाम, तथाऽन्यत्परिकीर्तितम् । मीमासकाश्च गीयन्ते, ते लोका येऽत्र सस्थिता ॥३७॥
लोकायतमिति प्रोक्तं, पुरमत्र तथाऽपरम् । बार्हस्पत्याश्च ते लोका, ये वास्तव्या पुरेऽत्र भो! ॥३८॥
तदेतेषु पुरेषूच्चैर्येऽमी लोका प्रकीर्तिता । ते विशेषेण कुर्वन्ति, मिथ्यादर्शनशासनम् ॥३९॥
यच्च प्रोक्त मया पूर्वं, सभार्यस्य विजृम्भितम् । तस्य सर्वं तदेतेषु, लोकेषु ननु दृश्यते ॥40॥
प्रकर्षेणोक्तं षडत्र यानि श्रूयन्ते, मण्डले लोकवार्तया । दर्शनानि किमेतानि, तान्याख्यातानि मे त्वया? ॥४१॥
विमर्शेनोदित वत्स! कथ्यते ते परिस्फुटम् । एतानि पञ्च तान्येव, मीमासकपुर विना ॥४२॥
अर्वाक्कालिकमेतद्धि, मीमासकपुर मतम् । तेन दर्शनसख्यायामेतल्लोकैर्न गण्यते ॥४३॥
तथाहि→जैमिनिर्वेदरक्षार्थं, दूषणोद्धारणेच्छया । चकार किल मीमासा, दृष्ट्वा तीर्थिकविप्लवम् ॥४४॥
तस्मादेतानि पञ्चैव, मीमासकपुर विना । लोकैर्दर्शनसख्याया, गण्यन्ते नात्र सशय ॥४५॥

## निर्वृत्तिनगर प्रति जैनेतरमार्गाणा निष्फलता

प्रकर्ष→प्राह यद्येव, ततो ब्रूहि क्व वर्तते । तत्पुर माम! यल्लोकैर्गीयते षष्ठदर्शनम्? ॥४६॥
विमर्शेनाभिहित→यदिद दृश्यतेऽत्रैव, विवेकवरपर्वते । निर्मल शिखर तुङ्गमप्रमत्तत्वनामकम् ॥४७॥
विस्तीर्णमिदमत्यर्थमत्रैव च निवेशितम् । पुर लोकोत्तर वत्स! तज्जैनमभिधीयते ॥४८॥
तस्य ते कथयिष्यामि, ये गुणा शेषजित्वरा । तथापि लोकरूढ्यैव, षष्ठ हि तदुदाहृतम् ॥४९॥

अन्यच्च तत्र ये लोकास्तेषामेष महत्तम । न बाधक प्रकृत्यैव, मिथ्यादर्शननामक ॥50॥
प्रकर्षेणोक्त→अध स्थितेषु बाध्यन्ते, पुरेषु यदमी जना । शिखरस्थे न बाध्यन्ते, माम! कि तत्र कारणम्? ॥५१॥
विमर्शेनोक्त→अस्त्यत्र निर्वृतिर्लोके, नगरी सुमनोहरा । सा च भुक्तेरतिक्रान्ता, महामोहादिभूभुजाम् ॥५२॥
निर्द्वन्द्वानन्दसपूर्णा, सतत निरुपद्रवा । एभिश्चाकर्णिता सर्वै, सा लोकै पुरवासिभि ॥५३॥
ततो लोकायत मुक्त्वा, ये शेषपुरवासिन । नगरी गन्तुमिच्छन्ति, तामेते वत्स! निर्वृतिम् ॥५४॥
एते च सर्वे ता गन्तुमन्तरङ्गैर्महापथै । स्वकल्पितै प्रवाञ्छन्ति, परस्परविरोधिभि ॥५५॥
ततश्च–अमीभिर्वत्स! भूरिष्ठैर्ये मार्गा परिकल्पिता । निर्वृते प्रापकास्ते हि, न घटन्ते सुयुक्तित ॥५६॥
विवेकपर्वतोत्तुङ्गशिखरस्थितसत्पुरे । वसद्भिर्य पुनर्दृष्ट, सन्मार्गोऽतिमनोहर ॥५७॥
स निर्वृति नयत्येव, लोक नास्त्यत्र सशय । पक्षपातविमुक्तेन, मया तेनेदमुच्यते ॥५८॥
यथाऽमी बाधिता लोका, येऽध स्थपुरवर्तिन । मिथ्यादर्शनसज्ञेन, न गिरिस्थे महापुरे ॥५९॥
यतः–तन्मिथ्यादर्शनस्यैव, माहात्म्य स्फुटमुच्यते । यदेते न विजानन्ति, सन्मार्गं निर्वृतेर्जना ॥60॥
दिङ्मूढा इव मन्यन्ते, कुमार्गमपि तत्त्वत । सन्मार्ग इति यच्चैते, तत्तस्यैव विजृम्भितम् ॥६१॥
ये त्वेते शिखरे लोका, वर्तन्ते वत्स! सत्पुरे । एषामेतद् द्वयं नास्ति, तेनेमे तस्य दूरगा ॥६२॥
एतानि च पुराण्यत्र, प्रत्यासन्नानि तेन ते । दर्शितानि मया वत्स! नेयत्ता परिकीर्तिता ॥६३॥
किं तर्हि?–उपलक्षणमेतानि, विज्ञातव्यानि भावत । मिथ्यादर्शनवश्यानामन्येषामपि तादृशम् ॥६४॥
यत→यान्येतानि पुराण्यत्र, दृश्यन्ते वत्स! भूतले । नान्यत्र देशकालेषु, स्थानकानि बहूनि च ॥६५॥
एतत्तु शिखरस्थायि, सत्पुर भद्र! सर्वदा । अप्रच्युतमनुत्पन्न, शाश्वत परमार्थत ॥६६॥
प्रकर्षेणोदित माम! येऽमीभि परिकल्पिता । स्वबुद्ध्या निर्वृतेर्मार्गा, लोकै पुरनिवासिभि ॥६७॥
तानह श्रोतुमिच्छामि, प्रत्येक सकुतूहल । ततो मेऽनुग्रह कृत्वा, भवानाख्यातुमर्हति ॥६८॥
विमर्श प्राह यद्येव, तत कृत्वा समाहितम् । चेतस्त्व वत्स ! बुध्यस्व, मार्गान्वक्ष्ये परिस्फुटम् ॥६९॥

### नैयायिकदर्शनम्

तत्र नैयायिकैस्तावदेष कल्पितो वत्स! निर्वृतिमार्ग, यदुत→प्रमाणप्रमेयसशयप्रयोजनदृष्टान्तसिद्धान्तावयव–तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाना तत्त्वपरिज्ञानान्नि श्रेयसाधिगम । तत्रार्थोपलम्भहेतु प्रमाण, तच्चतुर्धा, तद्यथा→प्रत्यक्षानुमानोपमानशब्दा प्रमाणानि । तत्र प्रत्यक्षम्–इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मक प्रत्यक्ष, तत्पूर्वक त्रिविधमनुमान, तद्यथा→पूर्ववच्छेषवत्सामान्यतो दृष्ट च, तत्र पूर्ववत्कारणात्कार्यानुमान यथा मेघोन्नतेर्भविष्यति वृष्टिरिति, शेषवत्कार्यात्कारणानुमान, यथा विशिष्टान्नदीपूरदर्शनादुपरि वृष्टो देव इति, सामान्यतोदृष्ट नाम यथा देवदत्तादौ गतिपूर्विका देशान्तरप्राप्तिमुपलभ्य दिनकरेऽपि सा गतिपूर्विकैव समधिगम्यते । प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमान, यथा गौस्तथा गवय इति, आप्तोपदेश शब्द आगम इत्यर्थ । तदेवमिद चतुर्विध प्रमाणमभिहितम् ।

तथाऽऽत्मशरीरेन्द्रियार्थबुद्धिमन प्रवृत्तिदोषप्रेत्यभावफलदु खापवर्गास्तु प्रमेयम् ।

'कि स्याद्' इत्यनवधारणात्मक प्रत्यय सशय, किमय स्थाणु स्यादुत पुरुष ? इति ।

येन प्रयुक्त प्रवर्तते तत्प्रयोजनम् । अविप्रतिपत्तिविषयापन्नो दृष्टान्त ।

सिद्धान्तश्चतुर्विध, तद्यथा→सर्वतन्त्रसिद्धान्त, प्रतितन्त्रसिद्धान्त, अधिकरणसिद्धान्त, अभ्युपगमसिद्धान्तश्चेति ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा ।

सशयादूर्ध्वं भवितव्यताप्रत्ययस्तर्क, यथा भवितव्यमत्र स्थाणुना पुरुषेण वेति ।

सशयतर्काभ्यामूर्ध्वं निश्चयत प्रत्ययो निर्णय, यथा पुरुष एवाय स्थाणुरेव वा ।

तिस्र कथा– वादजल्पवितण्डा । तत्र शिष्याचार्ययो पक्षप्रतिपक्षपरिग्रहेणाभ्यासख्यापनाय वादकथा ।

विजिगीषुणा सार्धं छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प, स एव स्वपक्षप्रतिपक्षस्थापनाहीनो वितण्डा ।

अनैकान्तिकादयो हेत्वाभासा । 'नवकम्बलो देवदत्त' इत्यादि छलम् । दूषणाभासास्तु जातय ।

निग्रहस्थानानि पराजयवस्तूनि, तद्यथा–[1]प्रतिज्ञाहानि [2]प्रतिज्ञान्तर [3]प्रतिज्ञाविरोध [4]प्रतिज्ञासन्यास [5]हेत्वन्तर [6]अर्थान्तर [7]निरर्थक [8]अविज्ञातार्थ [9]मपार्थक [10]अप्राप्तकाल [11]न्यूनमधिक[12] [13]पुनरुक्त [14]अननुभाषण [15]अप्रतिज्ञान [16]अप्रतिभा [17]कथाविक्षेपो [18]मतानुज्ञा [19]पर्य्यनुयोज्योपेक्षण [20]निरनुयोज्यानुयोग [21]अपसिद्धान्तो [22]हेत्वाभासाश्चेति निग्रहस्थानानि ।

तदेते प्रमाणादय षोडश पदार्था । इति नैयायिकदर्शनसमास ।

### वैशेषिकसिद्धान्त

वैशेषिके पुनरय वत्स। परिकल्पितो निर्वृतिनगरीगमनमार्ग, यदुत→द्रव्यगुणकर्मसामान्यविशेषसमवायाना षण्णा पदार्थाना तत्त्वपरिज्ञानान्नि श्रेयसाधिगम । सा हि निर्वृतिर्नि श्रेयसस्या ।

तत्र पृथिव्यापस्तेजो वायुराकाश कालो दिगात्मा मन इति नव द्रव्याणि ।

रूपरसगन्धस्पर्शसख्यापरिमाणपृथक्त्वसयोगविभागपरत्वापरत्ववुद्धिसुखदु खेच्छाद्वेषप्रय धर्माधर्मसस्कारगुरुत्वद्रव–त्वस्नेहवेगशव्दा पञ्चविशतिर्गुणा ।

उत्क्षेपणमवक्षेपणमाकुञ्चन प्रसारण गमनमिति पञ्च कर्माणि ।

सामान्य द्विविध–परमपर च, तत्र पर सत्तालक्षण, अपर द्रव्यत्वादीनि । नित्यद्रव्यवृत्तयोऽन्त्या विशेषा ।

अयुतसिद्धानामाधाराधेयभूताना य सम्वन्ध इहप्रत्ययहेतु स समवाय ।

लैङ्गिक(=अनुमान)प्रत्यक्षे द्वे एव प्रमाणे । इति वैशेषिकदर्शनसमासार्थ ।

### साङ्ख्यमतम्

साख्येस्तु वत्स। निजवुद्ध्या परिकल्पितोऽय निर्वृतिनगर्या पन्था, यदुत–पञ्चविशतितत्त्वपरिज्ञानान्नि श्रेयसाधिगम

तत्र त्रयो गुणा–सत्त्व रजस्तमश्च । तत्र प्रसादलाघवप्रणयानभिष्वङ्गाद्वेषप्रतीतय कार्यं सत्त्वस्य, शोकताप–भेदस्तम्भोद्वेगापद्वेषा कार्यं रजस, मरणसादनवीभत्सदैन्यगौरवाणि तमस कार्यम् । तत सत्त्वरजस्तमसा साम्यावस्था प्रकृति, सैव प्रधानमित्युच्यते । प्रकृतेश्च महानाविर्भवति=वुद्धिरित्यर्थ । वुद्धेश्चाहङ्कार । ततोऽहङ्कारादेकादशेन्द्रियाणि, तद्यथा–पञ्च वुद्धीन्द्रियाणि स्पर्शनरसनघ्राणचक्षु श्रोत्ररूपाणि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थलक्षणानि मनश्चाविर्भवति ।

तथा तत एवाहङ्कारात्तमोवहुलात्पञ्च तन्मात्राणि स्पर्शरसरूपगन्धशव्दलक्षणान्याविर्भवन्ति । तेभ्यश्च पृथिव्यादीनि पञ्च महाभूतानि । तदेषा चतुर्विंशतितत्त्वात्मिका प्रकृति ।

तथा पर पुरुषश्चैतन्यस्वरूप, स चानेको जन्ममरणकरणाना नियमदर्शनाद्धर्मादिषु प्रवृत्तिनानात्वाच्च । प्रकृतिपुरुषयोश्चोपभोगार्थ सयोग पङ्ग्वन्धयोरिव, उपभोगश्च शव्दाद्युपलम्भो गुणपुरुषान्तरोपभोगश्च ।

प्रत्यक्षानुमानागमा प्रमाणानि । इति साख्यदर्शनसक्षेपार्थ ।

### वौद्धमार्ग

वौद्धै पुनर्भद्र। परिकल्पितेय निर्वृतिनगरीवर्तनी, यदुत–द्वादशायतनानि, तद्यथा–पञ्चेन्द्रियाणि पञ्च शव्दादयो, मनो, धर्मायतन च, धर्मास्तु सुखादयो विज्ञेया । प्रत्यक्षानुमाने द्वे एव प्रमाणे । इति वौद्धदर्शनसमासार्थ ।

अथवा वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदाच्चतुर्विधा वौद्धा भवन्ति ।

तत्र वैभाषिकमतमिद, यदुत→क्षणिक वस्तु तद्यथा–जातिर्जनयति, स्थिति स्थापयति, जरा जर्जरयति, विनाशो नाशयति। तथाऽऽत्माऽपि तथाविध एव पुद्गलश्चासावभिधीयते ।

सौत्रान्तिकमत पुनरिद→रूपवेदनाविज्ञानसज्ञासस्कारा सर्वशरीरिणामेते पञ्च स्कन्धा विद्यन्ते, न पुनरात्मा । त एव हि परलोकगामिन । तथा क्षणिका सर्वे सस्कारा स्वलक्षण परमार्थत । अन्यापोह शव्दार्थ । सन्तानोच्छेदो मोक्ष इति।

योगाचारमत त्विद→विज्ञानमात्रमिद भुवन न विद्यते वाह्यार्थ । वासनापरिपाकतो नीलपीतादिप्रतिभासा । आलयविज्ञान सर्ववासनाधारभूतम् । आलयविज्ञानविशुद्धिरेव चापवर्ग इति ।

माध्यमिकदर्शने तु–सर्वशून्यमिद, स्वप्नोपम प्रमाणप्रमेयप्रविभाग । 'मुक्तिरस्तु शून्यतादृष्टिस्तदर्थं शेषभावना' । इति वौद्धविशेषाणा मतसक्षेपार्थ ।

### लोकायत–मीमासकमतयो सक्षिप्तस्वरूपम्

लोकायतै पुनर्वत्स। सा निर्वृतिनगरी नास्तीति प्रख्यापित लोके, यतोऽमी व्रुवते–नास्ति निर्वृतिर्नास्ति जीवो, नास्ति

परलोको, नास्ति पुण्य, नास्ति पापमित्यादि । किन्तर्हि? पृथिव्यापस्तेजो वायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसज्ञा। तेभ्यश्चैतन्य मद्याङ्गेभ्यो मदशक्तिवत् । जलबुद्बुदवज्जीवा । प्रवृत्तिनिवृत्तिसाध्या प्रीति पुरुषार्थ, स च काम एव, नान्यो मोक्षादि । तस्मान्नान्यत्पृथिव्यादिभ्यस्तत्त्वमस्ति, दृष्टहान्यदृष्टकल्पनासम्भवादिति । प्रत्यक्षमेव चैकं प्रमाणमिति **लोकायतमतसमास**

मीमासकाना पुनरेष मार्ग, यदुत–वेदपाठानन्तर धर्मजिज्ञासा कर्तव्या । यतश्चैव ततस्तस्य निमित्तपरीक्षा । निमित्त च चोदना । यत उक्त–"चोदनालक्षणोऽर्थो धर्म" । चोदना च क्रियाया प्रवर्तक वचनमाहुर्यथा–'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादि । तेन धर्मो लक्ष्यते, नान्येन प्रमाणेन, प्रत्यक्षादीना विद्यमानोपलम्भनत्वादिति । प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यभावा· षट् प्रमाणानि । इति **मीमासकमतसमास** ।

## विवेकस्थितजैनमार्ग

अमीभि पुनर्वत्स। विवेकमहापर्वतारूढैरप्रमत्तत्वशिखरस्थितैर्जैनपुरनिवासिभिर्जैनलोकैरय दृष्टो निर्वृतिनगरीगमनमार्ग, यदुत–जीवाजीवास्रवबन्धसवरनिर्जरामोक्षास्तत्त्वम् । तत्र सुखदु खज्ञानादिपरिणामलक्षणो जीव । तद्विपरीतस्त्वजीव । मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतव स आस्रव । आस्रवकार्यं बन्ध । आस्रवविपरीत संवर । सवरफल निर्जरा। निर्जराफल मोक्ष इत्येते सप्त पदार्था । तथा विधिप्रतिषेधानुष्ठानपदार्थाविरोधश्च । अत्र जैनदर्शने स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्य 'सर्वे जीवा न हन्तव्या इति वचनात्,' 'सततसमितिगुप्तिशुद्धा क्रिया असपत्नो योग' इति वचनात् । उत्पादविगमध्रौव्ययुक्त सत् । एक द्रव्यमनन्तपर्यायमर्थ इति । प्रत्यक्षपरोक्षे द्वे एव प्रमाणे । इति **जैनमतस्य दिग्दर्शनमात्रम्** ।

## अन्यदर्शनाना मिथ्यादर्शनमोहितत्वम्

तत्रैते प्रथमास्तावच्चत्वारो वत्स। वादिन । नैयायिकादयो नैव, निर्वृतेर्मार्गवेदका ॥१॥
**यत**–एकान्तनित्यमिच्छन्ति, पुरुष तत्र गामुकम् । सर्वत्रग च वाञ्छन्ति, तथाऽन्ये क्षणनश्वरम् ॥२॥
नित्यश्चासौ कथ गच्छेत्तस्यामविचलो यत । सर्वत्रगश्च यो भद्र। स क्व गच्छेत्कुतोऽपि वा ? ॥३॥
नश्वरोऽपि विनष्टत्वान्न तस्या गन्तुमर्हति । तस्मादेते न जानन्ति, मार्गं तस्यास्तपस्विन ॥४॥
लोकायतास्तु दूरेण, वर्तन्ते वत्स। निर्वृते । ये हि पापहतात्मानो, निराकुर्वन्ति तामपि ॥५॥
**किञ्च–लोकायतमत** प्राज्ञैर्ज्ञेय पापौघकारणम् । निर्द्वन्द्वानन्दपूर्णाया, निर्वृते प्रतिषेधकम् ॥६॥
तस्माद्दुष्टाशयकर, क्लिष्टसत्त्वै[त्त्व मु]र्विचिन्तितम् । पापश्रुत सदा धीरैर्वर्ज्यं नास्तिकदर्शनम् ॥७॥
परमार्थेन सा वत्स। नेष्टा **मीमासकैरपि** । यै सर्वज्ञ निराकृत्य, वेदप्रामाण्यमीरितम् ॥८॥
तदेवमेते सर्वेऽपि, भूमिष्ठपुरवासिन । अनेन कारणेनोक्ता, मिथ्यादर्शनमोहिता ॥९॥

## सत्यनिर्वृतिमार्ग

एते तु शिखरारूढा, पुरे वास्तव्यका जना । य वदन्ति स निर्मिथ्यो, निर्वृते प्रगुण पथ ॥10॥
**ततश्च**–यथावस्थितसन्मार्गवेदिना वीर्यशालिनाम् । महत्तमो न बाधायै, **मिथ्यादर्शननामक** ॥११॥
ज्ञानश्रद्धानपूतास्ते, निस्पृहा भवचारके । चारित्रयानमारूह्य, निर्वृति यान्ति मानवा ॥१२॥
यथा च सन्मा(त्यो–मा)र्गोऽय, यथा चान्ये न तद्विधा । इद च पुरतो वत्स। यद्यह ते विचारये ॥१३॥
ततो जन्म ममात्येति, न विचारस्य निष्ठिति । तेनेद ते समासेन, प्रविभज्य निवेद्यते युग्मम् ॥१४॥
ज्ञानदर्शनचारित्रलक्षणो ह्यान्तरो मत । विद्वद्भिर्निर्वृतेर्मार्ग, प्रगुण सुपरिस्फुट ॥१५॥
स दृष्ट पर्वतारूढैर्न दृष्टो भूमिवासिभि । तेनैते तत्र गन्तारो, न गन्तारो भुवि स्थिता ॥१६॥
तदेते कथितास्तुभ्य, भवचक्रे मया जना । ये मिथ्यादर्शनाख्येन, तेन भद्र। विडम्बिता ॥१७॥
प्रकर्ष प्राह मामेद, भवचक्रे मया पुरम् । सर्वं विलोकित दृष्ट, वीर्यमान्तरभूभुजाम् ॥१८॥
केवल तदिद जात, महाहास्यकर परम् । आभाणक जगत्यत्र, यद्बालैरपि गीयते ॥१९॥
गन्त्रीमनुष्यसामग्र्या, यो वधूमाहरिष्यति । तस्यैव विस्मृता हन्त, सा वधूरिति कौतुकम् ॥20॥
तथाहि–महामोहादिजेतारो, महात्मानो नरोत्तमा । द्रष्टव्या भवचक्रेऽत्र, सन्तोषसहिता किल ॥२१॥
एतदर्थमिहायातौ, मामावामत्र पत्तने । न दृष्टास्ते महात्मानो, न च सन्तोषभूपति ॥२२॥

अतोऽधुनापि तान्गमो, मदनुग्रहकाम्यया । गत्वा ते यत्र वर्तन्ते, तत्स्थान दर्शयत्वलम् ॥२३॥
विमर्शेनोदित वत्स यदिद शिखरे स्थितम् । जेन पुर भवन्त्येव, नूनमत्र तथाविधा ॥२४॥

## साधुस्वरूपम्

तस्मादत्रैव गच्छावो, येनेद ते कुतूहल । साक्षाद्दर्शनतो वत्स! नि शेष परिपूर्यते ॥२५॥
एव भवतु तेनोक्ते, तो गतौ तत्र सत्पुरे । दृष्टाश्च साधवरतत्र, निर्मलीमसमानसा ॥२६॥
विमर्श प्राह→भद्रैते, ते लोका येर्महात्मभि । निक्षिप्ता निजवीर्येण, महामोहादिभूभुज ॥२७॥
सर्वे भगवतामेषा, वान्धवा वत्स! जन्तव । एते त्रसेतराणा च, वान्धवा सर्वदेहिनाम् ॥२८॥
समस्ता मातरोऽमीषा, नरामरपशुस्त्रिय । एतेऽपि सूनवस्तासा, भगवन्तो नरोत्तमा ॥२९॥
वाह्ये परिग्रहे वत्स! निजेऽपि च शरीरके । चित्त न लग्नमेतेषा, पद्मवज्जलपङ्कयो ॥30॥
सत्य भूतहितं वाक्यममृतक्षरणोपमम् । एते परीक्ष्य भाषन्ते, कार्ये सति मिताक्षरम् ॥३१॥
असङ्गयोगसिद्ध्यर्थं, सर्वदोषविवर्जितम् । आहारमेते गृह्णन्ति, लौल्यनिर्मुक्तचेतस ॥३२॥
किञ्चेह वहुनोक्तेन? चेष्टा या या महात्मनाम् । सा सा भगवतामेषा, महामोहादिसूदनी ॥३३॥

तेन वत्स! भगवतामेतेषा सम्वन्धिन्याऽपेक्षया तस्या चित्तवृत्तिमहाटव्यामेव जानीहि यदुत अत्यन्तशुष्का सा प्रमत्तता नदी, विरलीभूत तद्विलसितपुलिन, परिभग्नश्चित्तविक्षेपमण्डप, निरस्ता तृष्णावेदिका, विघटित विपर्यासविष्टर, सचूर्णिता चाविद्यागात्रयष्टि, प्रलीनो महामोहराज, उच्चाटितो महामिथ्यादर्शनपिशाच, निर्नष्टो रागकेसरी, निर्जितो भिन्नो मुद्वेषगजेन्द्र, विपाटितो मकरध्वज, विदारितो विषयाभिलाष, निर्वासिता महामूढतादयस्तद्भार्या, विहिंसितो हासभट, विकर्तितं जुगुप्सारती निपूदितो भयशोकौ, विदलिता दुष्टाभिसन्धिप्रभृतयश्चरटा, पलायितानि डिम्भरूपाणि, विद्राविता ज्ञानसंवरणादयस्ते त्रयो दुष्टनरपतय, अनुकूलीभूतास्ते चत्वार सप्ताना मध्यवर्तिनो वेदनीयाद्या, व्यपगत चतुरङ्गमपि तत्सकल वल, प्रशान्ता विव्वोका विगलिता विलासा, तिरोभूता समस्तविकारा । किम्वहुना? सर्वथा→

यद्दृष्ट भवता तस्या, वर्णित च मया पुरा । वस्तु किञ्चित्समस्ताना, दु खद वाह्यदेहिनाम् ॥१॥
चित्तवृत्तिमहाटव्या, तत्सर्वमिह सस्थिता । प्रलीन वत्स! पश्यन्ति, नूनमेते महाधिय [युग्मम्] ॥२॥
सा सर्वोपद्रवेर्मुक्ता, श्वेता रत्नौघपूरिता । एतेषा ध्यानयोगेन, चित्तवृत्ति प्रभासते ॥३॥
तदेते ते महात्मानो, ये मया वत्स! वर्णिता । पूर्वं तपोधना सम्यक्, पश्य विस्फारितेक्षण ॥४॥
प्रकर्षेणोक्त–चारु चारु कृत माम! विहितो मदनुग्रह । जनित धूतपापोऽहमेतेषा दर्शनात्त्वया ॥५॥
कृत मानसनिर्वाण, विहित पटुलोचन । आनन्दामृतसेकेन, गात्र निर्वापित च मे ॥६॥
केवल दर्शनीयोऽसो, ममाद्यापि ननु त्वया । यो वर्णितो महावीर्यो, माम! सन्तोषभूपति ॥७॥

## चित्तसमाधानमण्डपे सन्तोषभूप

विमर्शेनोक्त–य एष दृश्यते वत्स! सद्दृष्टे सुखदायक । शुभ्रश्चित्तसमाधानो, नाम विस्तीर्णमण्डप ॥८॥
सर्वेषा वल्लभोऽमीषा, जनाना पुरवासिनाम् । स सन्तोषमहाभूपो, नूनमत्र भविष्यति ॥९॥
प्रकर्ष प्राह→यद्येव, ततोऽत्रैव प्रविश्यताम् । एव भवतु वत्सेति, वभाषे तस्य मातुल ॥10॥
प्रविश्य चोचिते देशे, ताभ्या दृष्ट स मण्डप । निजप्रभावविक्षिप्तजनसन्तापसुन्दर ॥११॥
तत्र च–राजमण्डलमध्यस्थं, दीप्तिनिर्धूततामसम् । वेष्टित भूरिलोकेन, सच्चित्तानन्ददायकम् ॥१२॥
विशालवेदिकारूढमुपविष्ट वरासने । दत्तास्थान नरेन्द्र तो, पश्यत स्म चतुर्मुखम् ॥१३॥
तत प्रकर्षस्त वीक्ष्य, मनसा हर्षनिर्भर । मनाक् सजातसन्देहो, मातुल प्रत्यभाषत ॥१४॥
अहो रम्यमिद जैन, पुर यत्रेदृश प्रभु । ईदृशो मण्डपो लोका, वास्तव्या यत्र चेदृशा ॥१५॥
एव च स्थिते यत्रेदृश पुर माम! विवेकवरपर्वते । कि सोऽय भवचक्रेऽत्र, वर्तते दोषपूरिते ॥१६॥
विमर्शेनोदित वत्स! यस्मिन्नेष महागिरि । वर्तते तदह वक्ष्ये, स्थानमस्य निशामय ॥१७॥
चित्तवृत्तिमहाटव्या, वर्तते परमार्थत । भवचक्रे तु विद्वद्भिरुपचारेण कथ्यते ॥१८॥

यतोऽत्र विद्यते वत्स! सल्लोकपरिपूरितम् । अन्तरङ्ग सुविस्तीर्णं, पुर सात्त्विकमानसम् ॥१९॥
तत्राय सस्थितो वत्स! विवेकवरपर्वत । आधाराधेयसम्बन्धस्तेनैव परिकीर्तित ॥20॥

## सात्त्विकपुरवर्णनम्

प्रकर्षेणोदितं→माम! यद्येवं ततो यदिदमस्य पर्वतस्याधारभूत सात्त्विकमानस पुर, ये च तत्सेविनो बहिरङ्गलोका, यश्चाय विवेकमहागिरि, यच्चेदमप्रमत्तशिखर, यच्चादो जैन पुर, ये चात्र स्थिता बहिरङ्गजना, यश्चायं चित्तसमाधानमहामण्डपो, या चेय वेदिका, यच्चेद सिहासन, यश्चाय नरेन्द्रो, यश्चायमस्य परिवार तदिद सर्वं मम जन्मापूर्वं ततो ममानुग्रहधिया प्रत्येक विशेषतस्तद्वर्णयितुमर्हति माम । विमर्शेनोक्त→वत्स! यद्येव तत समाकर्णय→

यदिद पर्वताधार, पुर सात्त्विकमानसम् । तदन्तरङ्गरत्नाना, सर्वेषामाकरो मतम् ॥२१॥
अनेकदोषपूर्णेऽपि, भवचक्रे व्यवस्थितम् । नेद स्वरूपतो वत्स! दोषसंश्लेषभाजनम् ॥२२॥
अधन्या भवचक्रेऽत्र, वर्तमाना मनुष्यका. । इद स्वरूपतो वत्स! न पश्यन्ति कदाचन ॥२३॥
यानि निर्मलचित्तादिपुराण्यन्तरभूमिषु । अत्रैव प्रतिबद्धानि, तानि जानीहि भावत ॥२४॥
स कर्मपरिणामाख्यो, राजा नेदं महापुरम् । सभुक्तिक ददात्येक, महामोहादिभूभुजाम् ॥२५॥
किन्तर्हि? स्वयमेव भुनक्तीद, तथाऽन्यैर्वरभूमिपै । शुभाशयादिभिर्वत्स! भोजयेच्च सभुक्तिकम् ॥२६॥
इद हि जगत सारमिद च निरुपद्रवम् । इदमेव कृताह्लाद, वहिर्जनमनोहरम् ॥२७॥
तदिद ते समासेन, पुर सात्त्विकमानसम् । निवेदितं मया वत्स! शृणु चात्राधुना जनम् ॥२८॥
ये लोका निवसन्त्यत्र, पुरे सात्त्विकमानसे । बहिरङ्गा भवन्त्येषा, शौर्यवीर्यादयो गुणा ॥२९॥
बहिरङ्गा जनास्ते हि, निवसन्त्यत्र सत्पुरे । पुरमाहात्म्यमात्रेण, गच्छन्ति विबुधालये ॥30॥
अन्यच्च वसतामत्र, पुरे सात्त्विकमानसे । प्रत्यासन्नतया याति, विवेको दृष्टिगोचरे ॥३१॥
ततश्च–यद्यारोहन्त्यमु लोका, विवेकवरपर्वतम् । ततो जैन समासाद्य, पुर यान्ति सुखास्पदम् ॥३२॥
एव च स्थिते–पुरप्रभावमात्रेण, सदैते सुन्दरा जना । विवेकशिखरारूढा, पुन स्युरतिसुन्दरा ॥३३॥
किं च–अन्येषा पापिनां वत्स! भवचक्रनिवासिनाम् । सदा न प्रतिभातीद, जनाना जैनसत्पुरम् ॥३४॥
निवसन्ति पुनर्येऽत्र, पुरे सात्त्विकमानसे । बहिरङ्गजनास्तेषा, भातीद जैनसत्पुरम् ॥३५॥
तदमी भाविकल्याणा, लोका मार्गानुयायिन । वास्तव्यका पुरे येऽत्र, सदा प्रकृतिसुन्दरे ॥३६॥

## विवेकशिखरवर्णनम्

तदेते कथितास्तुभ्य, पुरे सात्त्विकमानसे । लोका महागिरे रूप, समाकर्णय साम्प्रतम् ॥३७॥
तावद्दारुणदु खार्ता, भवचक्रनिवासिन । जना यावन्न पश्यन्ति, ते विवेकमहागिरिम् ॥३८॥
यदा पुन प्रपश्यन्ति, ते विवेकमहागिरिम् । तदा न रमते तेषा, भवचक्रे मतिर्नृणाम् ॥३९॥
ततश्च–विहाय भवचक्र ते, समारूह्य महागिरिम् । विमुच्य दु ख जायन्ते, निर्द्वन्द्वानन्दभागिन ॥40॥
यतोऽत्र–निर्मले तुङ्गे, स्थिताना वत्स । देहिनाम् । भवचक्रमिद सर्व, करस्थमिव भासते ॥४१॥
ततो विविधवृत्तान्त, दु खसङ्घातपूरितम् । विलोक्येद विरज्यन्ते, नगरात्तेऽमुतो जना ॥४२॥
विरक्ताश्च भवन्त्यत्र, प्रतिबद्धा महागिरौ । विवेके भावत सौख्यहेतुरेष च सद्‌गिरि ॥४३॥
ततश्च–विवेकसद्रिरेर्वत्स! माहात्म्येनास्य ते जना । भवन्ति सुखिनोऽत्यन्त, भवचक्रेऽपि सस्थिता ॥४४॥
तदेय सर्वलोकाना, सुखहेतुर्महागिरि । विवेको वर्णितस्तुभ्यमधुना शिखर शृणु ॥४५॥
इद हि शिखर तात! सर्वदोषनिवर्हणम् । उत्त्रासकारण मन्ये, दुष्टान्तरमहीभुजाम् ॥४६॥
यत.–विवेकारूढलोकाना, यद्युपद्रवकारिण । आगच्छेयु क्वचिद्भद्र! महामोहादिशत्रव ॥४७॥
ततस्ते निर्दयैर्भूत्वा, विवेकारूढजन्तुभि । शिखरादप्रमत्तत्वाल्लोटयन्तेऽस्मान्न सशय युग्मम् ॥४८॥
ततस्ते चूर्णिताशेषशरीरावयवा पुन । दूरत प्रपलायन्ते, शिखर वीक्ष्य कातरा ॥४९॥
तदिद नूनमेतेषा, दलनार्थं विनिर्मितम् । विवेकवासिशत्रूणामन्तरङ्गमहीभुजाम् ॥50॥

किञ्च–शुभ्रं विशालमुत्तुङ्गं, सर्वलोकसुखावहम् । वत्सेदमप्रमत्तत्वशिखरं गाढसुन्दरम् ॥५१॥
तदिदं ते समासेन, कथितं शिखरं मया । अधुना वर्ण्यते जैनं, पुरं तत्त्वं निशामय ॥५२॥

## जैनपुरवर्णनम्

इदं हि सत्पुरं वत्स! निरन्तानन्दकारणम् । दुर्लभं भवचक्रेऽत्र [तु मु], जन्तुभिः पुण्यवर्जितैः ॥५३॥
यतः–कालेन भूयसा लोकाः, पर्यटन्तः कथञ्चन । आसादयन्ति कृच्छ्रेण, पुरं सात्त्विकमानसम् ॥५४॥
स्थित्वा तत्र पुनर्यान्ति, भवचक्रे निरन्तके । एन वत्स! न पश्यन्ति, विवेकवरपर्वतम् ॥५५॥
भूरिभिर्विहितैस्तात । ततश्चेत्थं गमागमैः । कदाचित्तेऽत्र पश्येयुर्विवेकवरपर्वतम् ॥५६॥
नारोहन्ति च दृष्टेऽपि, तथाऽन्यं वत्स! सद्गिरौ । प्रयान्ति च विदन्तोऽपि, भवचक्रे स्ववैरिणः ॥५७॥
आरोहेयुः कदाचिच्च, तत्राऽऽरूढा सुदुर्लभम् । शिखरं ते न पश्येयुरिदं वत्साऽतिसुन्दरम् ॥५८॥
दृष्टेऽपि नानुतिष्ठन्ति, तत्राऽऽरोहणमुच्चकैः । शैथिल्येनैव तिष्ठन्ति, भवचक्रे सकौतुकाः ॥५९॥
यदा तु धन्या शिखरमारोहन्ति मनोहरम् । इदं वत्स! जना जैनं, पश्यन्त्येव तदा पुरम् ॥60॥
सा चेपा भवचक्रेऽत्र, वर्तमाने सुदुर्लभा । सामग्री जन्तुभिर्वत्स! याऽस्य दर्शनकारिणी ॥६१॥
तेनेदं सततानन्दकारणं जैनसत्पुरम् । भवचक्रे मया तुभ्यं, दुर्लभं प्रतिपादितम् ॥६२॥
इदं रत्नौघसपूर्णमिदं सर्वसुखास्पदम् । इदमेव जगत्यत्र, सारात्सारतरं मतम् ॥६३॥
तदिदं ते समासेन, वर्णितं जैनसत्पुरम् । अधुना येऽत्र वास्तव्या, लोकास्तानवधारय ॥६४॥
एते हि सततानन्दा, सर्वाबाधाविवर्जिताः । पुरप्रभावतो वत्स! वर्तन्ते जैनसज्जनाः ॥६५॥
प्रस्थिता नगरीं सर्वे, निर्वृतिं कृतनिश्चयाः । आरात्प्रयाणके केचिद्वसन्ति विबुधालये ॥६६॥
वीर्यं वीक्ष्य भयोद्भ्रान्तैर्महामोहादिशत्रुभिः । एते जैना जना वत्स! दूरतः परिवर्जिताः ॥६७॥
प्रकर्षेणोदितं माम । नैतदेव यतः क्वचित् । यथैव ते मया दृष्टा, भवचक्रनिवासिनः ॥६८॥
महामोहादिभिर्ग्रस्तास्तथैतेऽपि न संशयः ।

## जैनानां प्रशस्तमूर्च्छादौ हेतुः

तथाहि–एतेष्वपि जैनलोकेषु दृश्यन्ते सर्वाण्यपि तत्कार्याणि, यस्मादेतेऽपि मूर्च्छन्ति भगवद्बिम्बेषु, रज्यन्ते स्वाध्यायकरणेषु, स्निह्यन्ति साधर्मिकजनेषु, प्रीयन्ते सदनुष्ठानेषु, तुष्यन्ति गुरुदर्शनेषु, हृष्यन्ति सदर्थोपलम्भेषु, द्विषन्ति व्रतातिचारकरणेषु, क्रुध्यन्ति सामाचारीविलोपेषु, रुष्यन्ति प्रवचनप्रत्यनीकेषु, माद्यन्ति कर्मनिर्जरणेषु, अहङ्कुर्वन्ति प्रतिज्ञातनिर्वाहणेषु, अवष्टभ्नन्ति परीषहेषु, स्मयन्ते दिव्याद्युपसर्गेषु, गूहयन्ति प्रवचनमालिन्यं, वञ्चयन्तीन्द्रियधूर्तगणं, लुभ्यन्ति तपश्चरणेषु, गृध्यन्ति वैयावृत्त्याचरणेषु, अभ्युपपद्यन्ते सद्ध्यानयोगेषु, तृप्यन्ति परोपकारकरणेषु, निघ्नन्ति प्रमादचौरवृन्दं, बिभ्यति भवचक्रभ्रमणात्, जुगुप्सन्ते विमार्गचारितां, रमन्ते निर्वृतिनगरीगमनमार्गे, उपहसन्ति विषयसुखशीलतां, उद्विजन्ते शैथिल्याचरणात्, शोचन्ति चिरन्तनदुश्चरितानि, गर्हन्ते निजशीलस्खलितानि, निन्दन्ति भवचक्रनिवासं, आराधयन्ति जिनाज्ञायुवतिं प्रतिसेवन्ते द्विविधशिक्षाललनाम् ।

तदेवं सर्वकार्याणि, महामोहादिभूभुजाम् । एतेषु माम! दृश्यन्ते, जैनेषु सुपरिस्फुटम् ॥६९॥
तत्कथं भवता प्रोक्तमेवं सति ममाग्रतः । यथैते दूरतस्त्यक्ता, महामोहादिशत्रुभिः ॥70॥
विमर्शेनोदितं वत्स! य एते भवतोदिताः । महामोहादयस्तेऽन्ये, वत्सला जैनबान्धवाः ॥७१॥
एते हि द्विविधाः–वत्स! महामोहादयो मताः । एकेऽरयोऽत्र जन्तूनामपरेऽतुलबान्धवाः ॥७२॥
यतः–प्रथमा भवचक्रेऽत्र, पातयन्ति सदा जनम् । अप्रशस्ततया तेषां, प्रकृतिः खलु तादृशी ॥७३॥
इतरे निर्वृतिं लोकं, नयन्ति निकटे स्थिताः । प्रशस्तास्ते यतस्तेषां, प्रकृतिः साऽपि तादृशी ॥७४॥
तदेते शत्रुभिस्त्यक्ता, बन्धुभिः परिवेष्टिताः । महामोहादिभिर्वत्स! मोदन्ते जैनसज्जनाः ॥७५॥
एवञ्च–अमी सकलकल्याणभाजिनो जैनसज्जनाः । निवेदिता मया तुभ्यमधुना शृणु मण्डपम् ॥७६॥

## चित्तसमाधानमण्डपः निःस्पृहतावेदिका

अथ चित्तसमाधानो, मण्डपः सर्वदेहिनाम् । सप्राप्तः कुरुते सौख्यमतुलं निजवीर्यतः ॥७७॥

अस्यैव भूपतेर्नूनमास्थानार्थ विनिर्मित । वेधसा त्रिजगद्बन्धोरादरादेष मण्डप ॥७८॥
नास्त्येव भवचक्रेऽत्र, सुखगन्धोऽपि सुन्दर। । यावच्चित्तसमाधानो, नैष सप्राप्यते जनै ॥७९॥
तदेष लेशतो वत्स। वर्णितो वरमण्डप । एषा निस्पृहता नाम, वेदिका ते निवेद्यते ॥80॥
ये लोका वेदिका वत्स। स्मरन्त्येना पुन पुन । तेषा शब्दादयो भोगा, प्रतिभान्ति विषोपमा ॥८१॥
न तेषु वर्तते चित्त, क्षीयते कर्मसञ्चय । जायन्ते निर्मलत्वेन, भवचक्रपराङ्मुखा ॥८२॥
येषामेषा स्थिता चित्ते, धन्याना वत्स । वेदिका । नेन्द्रैर्न देवैर्नो भूपैर्नान्यैस्तेषा प्रयोजनम् ॥८३॥
एषाऽपि नूनमस्यैव, निविष्टा वरभूपते । आस्थानार्थ विधात्रेति, वत्स। सुन्दरवेदिका ॥८४॥

## जीववीर्यविष्टरम्

इय निस्पृहता तात। वर्णिता ते सुवेदिका । जीववीर्यमिद नाम, साम्प्रत शृणु विष्टरम् ॥८५॥
जीववीर्यमिद येषा, परिस्फुरति मानसे । सुखमेव पर तेषा, दुखानामुद्भव कुत ? ॥८६॥
अय हि राजा दीप्ताङ्गो दृश्यते यश्चतुर्मुख । निविष्टोऽत्र जगद्बन्धुर्दत्तास्थानो मनोरम ॥८७॥
य शुभ्र परिवारोऽस्य, यद्राज्य या विभूतय । यच्चातुल महत्तेजो, विष्टर तत्र कारणम् ॥८८॥
कि चात्र बहुनोक्तेन? पुर लोका महागिरि । शिखर सत्पुर लोका, मण्डपो वरवेदिका ॥८९॥
राजाऽय सह सैन्येन, राज्य भुवनसुन्दरम् । जगत्श्रेष्ठ[च्छिष्ट मु]मिद सर्व, माहात्म्येनास्य नन्दति ॥90॥
तथाहि–यद्येतन्न भवत्यत्र, जीववीर्य वरासनम् । महामोहादिभि सर्व, तदिद परिभूयते ॥९१॥
विद्यमाने पुनर्वत्स। जीववीर्यवरासने । महामोहादयो नैव, प्रविशन्त्यत्र मण्डपे ॥९२॥
अन्यच्च–क्वचित्तिरस्कृत तात। महामोहादिभिर्वलम् । इदमाविर्भवत्येव, जीववीर्यप्रभावत ॥९३॥
इद सिहासन वत्स । यावदत्र प्रकाशते । तावद्धि सर्वतोभद्र, राजा सैन्य गिरि पुरम् ॥९४॥
तदिद वर्णित वत्स। जीववीर्यवरासनम् । परिवारयुतो राजा, साम्प्रत ते निवेद्यते ॥९५॥

## भावार्थाऽवबोध

प्रकर्षेण चिन्तित–अये। यान्येतानि प्रतिपादितान्यनेन मे वस्तूनि तेषामेष भावार्थो मम स्फुरति हृदये यदुत→
अकामनिर्जरापेक्ष, जन्तुवीर्य यदुत्कटम् । मिथ्यादृष्टेर्विना ज्ञान, तद्धि सात्त्विकमानसम् ॥९६॥
ये तेन सयुता लोका, वास्तव्यास्ते प्रकीर्तिता । त एव तत्प्रभावेण, प्रयान्ति विबुधालये ॥९७॥
धनपुत्रकलत्रादे, शरीरात्कर्मणस्तथा । अन्योऽह भेदतो दुष्टा, महामोहादिशत्रव ॥९८॥
अज्ञातजैनसिद्धान्ते, कर्मनिर्जरणाज्जने । या स्यादेवविधा बुद्धि, स विवेक इहेष्यते [युग्मम्] ॥९९॥
विवेकादप्रमत्तत्व, कषायादिनिवर्तते । यद्भवेल्लघुदोषाणा, शिखर तदुदाहृतम् ॥100॥
चतुर्वर्णमहासङ्घप्रमोदपरकारणम् । द्वादशाङ्ग पुनर्जैन, वचन पुरमुच्यते ॥१०१॥
वास्तव्यका जनास्तत्र, ये तदादेशकारिण । त एव च चतुर्वर्णा, यथोक्तगुणभूषणा ॥१०२॥
एष एव च सारोऽत्र, यथार्थो वरमण्डप । यत–विना च्चित्तसमाधान, पुरमेतन्न शोभते ॥१०३॥
वेदिका चासन चेद, कथित प्रकटाक्षरै । यथार्थमेव विज्ञयामद द्वितयमञ्जसा ॥१०४॥
ततो येन मया सर्वमिद भावार्थसयुतम् । बुद्ध सोऽह नृप सैन्य, भोत्स्ये नास्त्यत्र सशय ॥१०५॥

## चारित्रधर्मराजवर्णन दानादीनि वक्त्राणि

ततश्च–बोधावष्टम्भतुष्टात्मा, स प्राह निजमातुलम् । माम। वर्णय राजान, येनाहमवधारये ॥१०६॥
ततस्तन्मातुलेनोक्त, वत्स। योऽय नराधिप । लोके चारित्रधर्मोऽय, प्रसिद्धोऽत्यन्तसुन्दर ॥१०७॥
अनन्तवीर्यो विख्यात, प्रगुणो जगते हित । समृद्ध कोशदण्डाभ्या, ज्ञेय सर्वगुणाकर ॥१०८॥
यान्यस्य वत्स। दृश्यन्ते, चत्वारि वदनानि भो। । तेषा नामानि ते वक्ष्ये, वीर्याणि च निबोध मे ॥१०९॥
दान शील तपस्तात। चतुर्थ शुद्धभावनम् । एतानि ननु वक्त्राणा, नामान्येषा यथाक्रमम् ॥110॥
तत्राद्य दापयत्यत्र, पात्रेभ्यो जैनसत्पुरे । सज्ज्ञान मोह[illegible] मभय जगत प्रियम् ॥१११॥

तथा–सद्धर्माधारदेहाना, यदुपग्रहकारणम् । आहारवस्त्रपात्रादि, दीयतामिति भाषते ॥११२॥
दीनान्धकृपणेभ्यश्च, दीयमान कृपापरे । आहारादिकमेतद्वो। वदन न निषेधति ॥११३॥
गवाश्वभूमिहेमानि, यच्चान्यदपि तादृशम् । तन्नेच्छति गुणाभावाद्दीयमानमिद मुखम् ॥११४॥
अन्यच्च–सदाशयकर वक्त्रमाग्रहच्छेदकारकम् । इद जगति लोकानामनुकम्पाप्रवर्तकम् ॥११५॥
दानाख्य तदिद भद्र। वर्णित प्रथम मुखम् । भूपतेरस्य शीलाख्य, द्वितीयमधुना शृणु ॥११६॥
य एते साधवो वत्स। वर्तन्ते जैनसत्पुरे । यदिद भाषते वक्त्र, तत्ते सर्वं प्रकुर्वते ॥११७॥
अष्टादश सहस्राणि, नियमाना नरोत्तमा । अस्याऽऽदेशेन कुर्वन्ति, सदैते वत्स । साधव ॥११८॥
इदमेव हि सर्वस्वमिदमेव विभूषणम् । इदमालम्बन वत्स । साधूना शीलमुत्तमम् ॥११९॥
तेभ्य सपूर्णमादेश, सुखमेतत्प्रयच्छति । किञ्चिन्मात्र प्रकुर्वन्ति, वचोऽस्य मुनिशेषका ॥120॥
शीलाख्य वदन वत्स। तदिद वर्णित मया । तृतीय तु तपोनाम, वदन तन्निबोध मे ॥१२१॥
चारित्रधर्मराजस्य, वक्त्रमेतन्मनोहरम् । आकाङ्क्षार्त्तिविनाशेन, जनेऽत्र कुरुते सुखम् ॥१२२॥
विशिष्टज्ञानसवेगशमसातकर परम् । तप सज्ञमिद वक्त्रमव्याबाधसुखावहम् ॥१२३॥
इदमस्य नरेन्द्रस्य, वदन वीक्ष्य सज्जना । आराध्य च महासत्त्वा, निर्वृति यान्ति लीलया ॥१२४॥
तदिद ते तपोनाम, भूपतेर्वदन मया । कथित साम्प्रत वक्ष्ये, चतुर्थं शुद्धभावनम् ॥१२५॥
स्मृत निरीक्षित भक्त्या, सज्जनैरिदमञ्जसा । नि शेषपापसङ्घातदलन कुरुते मुखम् ॥१२६॥
अस्यादेशादिमे जेना, भावयन्तीह सज्जना । समस्तवस्तुविस्तारमतितुच्छ विनश्वरम् ॥१२७॥
नास्तीह शरण लोके, दु खपीडितदेहिनाम् । एकश्च जायते जन्तुर्म्रियते च भवोदधौ ॥१२८॥
यदिद देहिना किञ्चिच्चित्तावन्धविधायकम् । शरीर धनमन्यद्वा, सर्वं तद्भिन्नमात्मन ॥१२९॥
मूत्रान्त्रक्लेदजम्बालपूरित च कलेवरम् । तदत्रात्यन्तबीभत्से, शुचिगन्धो न विद्यते ॥130॥
माता भूत्वा पुनर्भार्या, भवत्यत्र भवोदधो । कर्मास्रवो भवत्येव, पापानुष्ठानकारिणाम् ॥१३१॥
निवृत्ताना सदाचाराज्जायते वरसवर । तपसा तु भवत्येव, सतत कर्मनिर्जरा ॥१३२॥
मृता जाताश्च सर्वेषु लोकोद्देशे(सर्वेऽपि सवस्थानेषु प्र)जन्तव । भक्षितानि च सर्वाणि[र्वेषु मु] स्पिद्रव्याणि जन्तुना ॥१३३॥
ससारसागरोत्तारकारकश्च जिनोदित । धर्म सुदुर्लभा चात्र, वोधि सर्वज्ञदर्शने अष्टभि कुलकम् ॥१३४॥
ये चैव भावयन्त्यत्र, श्रद्धासशुद्धबुद्धय । आदेश वदनस्यास्य, ते धन्यास्ते मनस्विन ॥१३५॥
चारित्रधर्मराजस्य, वदन चारुदर्शनम् । इद वत्स। प्रकृत्यैव, सर्वसौख्यकर परम् ॥१३६॥
तदेष वदनैर्वत्स। चतुर्भि पुरवासिनाम् । एषा नि शेषसौख्यानि, करोत्येव महानृप ॥१३७॥
किञ्च–सर्वेषामेव सुखदो, भुवनोदरचारिणाम् । वत्स। चारित्रधर्मोऽयममृत कस्य दु खदम् ? ॥१३८॥
तथापि पापिन सत्त्वा, भवचक्रनिवासिन । एके नैन विजानन्ति, निन्दन्त्यन्ये विपुण्यका ॥१३९॥
तदेष ते महाराजश्चतुर्वदनसुन्दर । वर्णित साम्प्रत वक्ष्ये, परिवारमथाधुना ॥140॥

### विरति–चारित्रपञ्चकवर्णनम्

यैषा विलोक्यते वत्स। शुद्धस्फटिकनिर्मला । अर्धासने निविष्टाऽस्य, नारी सर्वाङ्गसुन्दरा ॥१४१॥
इय हि विरतिर्नाम, भार्याऽस्य वरभूपते । समानगुणवीर्या च, भूभुजाऽनेन वर्तते ॥१४२॥
तथाहि–आह्लादजननी लोके, निर्वृतेर्मार्गदेशिका । गता तादात्म्यमेतेन, न भिन्नेय प्रतीयते ॥१४३॥
य एते पञ्च दृश्यन्ते, राजानोऽभ्यर्णवर्तिन । एतस्यैव नरेन्द्रस्य, स्वाङ्गभूता वयस्यका ॥१४४॥
तत्र च–आद्य सामायिकाख्योऽय, भूपतिर्जैनसत्पुरे । नि शेषपापविरति, वत्स। कारयते सदा ॥१४५॥
छेदोपस्थापनो नाम, द्वितीयो वत्स। भूपति । पापानुष्ठानसङ्घात, विशेषेण निषेधति ॥१४६॥
परिहारविशुद्धीयस्तृतीयस्तु नरेश्वर । साधूना दर्शयत्युग्र, तपोऽष्टादशमासिकम् ॥१४७॥
यस्त्वेष दृश्यते वत्स। चतुर्थो वरभूपति । स सूक्ष्मसपरायाख्य, सूक्ष्मपापाणुनाशक ॥१४८॥

अत्यन्तनिर्मलो वत्स। निर्धूताशेषकल्मष । एष सारो यथाख्यात, पञ्चमो वरभूपति ॥१४९॥
शरीर जीवित प्राणा·, सर्वस्व तत्त्वमुत्तमम् । चारित्रधर्मराजस्य, पञ्चाप्येते वयस्यका ॥150॥
यस्त्वेष निकटे वत्स। दृश्यते मूलभूपते । सोऽस्यैव यतिधर्माख्य, सुतो राज्यधर पर ॥१५१॥

## दशधायतिधर्म

बहिर्विलोकिता भद्र। ये त्वया मुनिपुङ्गवा । अत्यन्तवल्लभस्तेषामेष राजसुत सदा ॥१५२॥
यैरेष दशभिर्वत्स। परिवारितविग्रह । मानुषाणि प्रकुर्वन्ति, तानि यत्तन्निबोध मे ॥१५३॥
योषिदाद्या **क्षमा** नाम, मुनीनामपि वल्लभा । तेषामुपदिशत्येषा, सदा रोषनिवारणम् ॥१५४॥
डिम्भरूपमिद तात। द्वितीयमिह **मार्दवम्** । करोति निजवीर्येण, साधूनामतिनम्रताम् ॥१५५॥
तृतीयमार्जव नाम, डिम्भरूपमिद सदा । सर्वत्र सरल भाव, विधत्ते वत्स। सद्धियाम् ॥१५६॥
एषा तु मुक्तता तात। चतुर्थी ललना सदा । निसङ्ग वहिरन्तश्च, मुनीना कुरुते मन ॥१५७॥
तपोयोग इति ख्यात, सशुद्ध पञ्चमो नर । युक्तो द्वादशभिर्वत्स। स्वाङ्गिकैर्वरमानुषै ॥१५८॥
एतेषा च प्रभावेण, मानुषाणा नरोत्तम । यदेष कुरुते जैने, पुरे तत्ते निवेदये ॥१५९॥
सर्वाहारपरित्यागान्निस्पृह कुरुते जनम् । वीर्यं च वर्धयत्येष, कारयन्न्यूनभोजनम् ॥160॥
अस्याऽऽदेशेन कुर्वन्ति, नानाऽभिग्रहसुन्दरम् । मुनयो वृत्तिसङ्क्षेप, शमसातविवर्धनम् ॥१६१॥
तथा–रसभोग न कुर्वन्ति, मोहोद्रेकादिकारणम् । अस्यादेशान्निषेवन्ते, कायक्लेश सुखावहम् ॥१६२॥
कषायेन्द्रिययोगैश्च, सलीनास्तात। साधव । विविक्तचर्यया नित्यमासते तेन चोदिता ॥१६३॥
प्रायश्चित्त च दशधा, विनय च चतुर्विधम् । वैयावृत्य च कुर्वन्ति, दशधैवास्य वीर्यत ॥१६४॥
पञ्चप्रकार स्वाध्याय, द्वेधा ध्यान च सत्तमम् । सतत कारयत्येष, मुनिलोक नरोत्तम ॥१६५॥
गणोपधिशरीराणामाहारस्य च निस्पृहा । प्राप्ते काले प्रकुर्वन्ति, त्यागमेतेन चोदिता ॥१६६॥
लेशोद्देशादिद वत्स। तपोयोगविचेष्टितम् । वर्णित विस्तरेणास्य, वर्णने नास्ति निष्ठिति ॥१६७॥
यस्त्वय दृश्यते वत्स। षष्ठोऽमीषा मनोरम । वल्लभो मुनिलोकस्य, सयमाख्यो नरोत्तम ॥१६८॥
स सप्तदशभिर्युक्तो, मानुषैर्जिनसत्पुरे । यथा विजृम्भते तात। तत्ते सर्व निवेदये ॥१६९॥
पापास्रवपिधानेन, [1]शान्तबोधनिराकुलम् । पञ्चेन्द्रियविरोधेन, सतुष्ट विगतस्पृहम् ॥170॥
कषायतापप्रशमाच्चित्तनिर्वाणबन्धुरम् । मनोवाक्काययोगाना, नियमेन मनोहरम् ॥१७१॥
सतत धारयत्येष, मुनिलोक नरोत्तम । सयमाह्व स्ववीर्येण, निमग्न धृतिसागरे ॥१७२॥
अथवा–इलाजलानल[2]गतामनिलाखिलशाखिनाम् । हिसा द्वित्रिचतुष्पञ्चहृषीकाणा निषेधति ॥१७३॥
अचित्तमपि यद्वस्तु, हिसाकरमसुन्दरम् । ग्रहण तस्य यत्नेन, वारयत्येष सयम ॥१७४॥
प्रेक्षण स्थण्डिलादीना, गृहस्थानामुपेक्षणम् । स्थानादिकरणे सम्यक्, तद्भूमीना प्रमार्जनम् ॥१७५॥
आहारोपधिशय्यानामशुद्धाधिकभावत[3] । परिष्ठापनमन्तश्च, मनोवाक्काययन्त्रणम् ॥१७६॥
विमुक्तभवकर्तव्यै, सततं सुसमाहितै । मुनिभि कारयत्येष, सर्वमेतन्नरोत्तम ॥१७७॥
तदिद लेशतो वत्स। चरित परिकीर्तितम् । नरस्य सयमाख्यस्य, शेषाणा शृणु साम्प्रतम् ॥१७८॥
य एष सप्तमो वत्स। दृश्यते पुरुषोत्तम । यतिधर्मपरीवारे, सत्यनामातिसुन्दर ॥१७९॥
हित मिताक्षर काले, जगदाह्लादकारणम् । अस्यादेशेन भाषन्ते, वचन मुनिपुङ्गवा ॥180॥
शौचाभिधानो यो वत्स। वर्तते चाष्टमो नर । द्रव्यभावात्मिका शुद्धिमस्यादेशेन कुर्वते ॥१८१॥
यदिद नवम तात। डिम्भरूप मनोहरम् । आकिञ्चन्यमिद नाम, मुनीनामतिवल्लभम् ॥१८२॥
अवाप्तसौष्ठ्व वत्स। वाह्यान्तरपरिग्रहम् । मुनिभिर्मोचयत्येतच्छुद्धस्फटिकनिर्मलम् ॥१८३॥
इद तु दशम तात। गर्भ(डिम्भ)रूप मनोहरम् । ब्रह्मचर्यमिति ख्यात, मुनीना हृदयप्रियम् ॥१८४॥

---

1 शान्तवाधा प्र । 2 = तेपु स्थितानाम् । 3 = आधाकर्मादिदोपात् अतिरिक्तसद्भावाद्वा ।

दिव्योदारिकसम्बन्ध, मनोवाग्काययोगत । अब्रह्म वारयत्येतत्कृतकारणमोदने ॥१८५॥
तदेष दशभिर्वत्स! मानुषे परिवारित । पुरेऽत्र विलसत्येव, यतिधर्म स्वलीलया ॥१८६॥
एषाऽत्र विलसद्दीप्तिर्बालिकाऽमललोचना । सद्भावसारता नाम, भार्याऽस्य मुनिवल्लभा ॥१८७॥
अस्या जीवति जीवन्त्या, मरणेऽस्या न जीवति । अत्यर्थ रतचित्तोऽस्या, राजसूनुरय सदा ॥१८८॥
किञ्चेह बहुनोक्तेन? दाम्पत्यमिदमीदृशम् । निर्मिथ्यस्नेहगर्भार्थ, न दृष्ट कुत्रचिन्मया ॥१८९॥

## द्वादशव्रतयुक्तगृहिधर्मवर्णनम्

य पुनर्दृश्यते तात! द्वितीयोऽय कुमारक । गृहिधर्माभिधानोऽसौ, कनिष्ठोऽस्य सहोदर ॥190॥
यदेष कुरुते वत्स! युक्तो द्वादशमानुष । जैनेन्द्रसत्पुरे चित्त, लसनुद्दामलीलया ॥१९१॥
तदह वर्णयिष्यामि, पुरतस्ते वरेक्षण! । चेत समाहित कृत्वा, तच्च वत्साऽवधारय [युग्मम्] ॥१९२॥
अत्यन्तस्थूलहिसाय, क्वचिद्विरतिसुन्दरम् । स्थूलालीकनिवृत्त च, करोत्येष पुरे जनम् ॥१९३॥
स्थूलस्तेयनिवृत्त च, परदारपराङमुखम् । क्वचित्सक्षिप्तमान च, सकलेऽपि परिग्रहे ॥१९४॥
परित्यक्तनिशाभक्त, कृतमान च सर्वरे । युक्तोपभोगसम्भोग, कर्मानुष्ठानकारकम् ॥१९५॥
अनर्थदण्डविरत, सामायिकरत सदा । देशावकाशिके सक्त, पोषधे कृतनिश्चयम् ॥१९६॥
अतिथे सविभागेन, परिपूतमनोमलम् । करोत्येष जन वत्स! गृहिधर्मोऽत्र सत्पुरे ॥१९७॥
किञ्च यो यावन्त करोत्यत्र, निर्दश शक्तितो जन । [illegible] तावत्करोत्येष, फल नास्त्यत्र सशय ॥१९८॥
या त्वेषा बालिका वत्स! विस्फारितवरेक्षणा । दृश्यतेऽस्येव भार्येय, नाम्ना सद्गुणरक्तता ॥१९९॥
वत्सला मुनिलोकस्य, गुरूणा विनयोद्यता । भर्तरि [illegible], वत्स! सद्गुणरक्तता ॥200॥
तदेतौ जैनलोकाना, राजपुत्रौ सभार्यकौ । विज्ञातव्यौ प्रकृत्यैव, सततानन्दकारकौ ॥२०१॥

## सम्यग्दर्शनसुदृष्टी

अनयोश्च सदा पित्रा, विहित परिपालक । अय महत्तमो वत्स! सम्यग्दर्शननामक ॥२०२॥
अनेन रहितावेतौ, दृश्येते न कदाचन । एतौ हि वर्धयत्येष, निकटस्थोऽतिवत्सल ॥२०३॥
अन्यच्च–यानि ते कथितान्यत्र, सप्त तत्त्वानि सत्पुरे । दृढनिश्चयमेतेषु, भवचक्रपराङ्मुखम् ॥२०४॥
शमसवेगनिर्वेदकृपाऽऽस्तिक्यविराजितम् । मैत्रीप्रमोदकारुण्यमाध्यस्थ्यैर्भावितात्मकम् ॥२०५॥
सदा प्रयाणकारूढ, निर्वृतौ गमनेच्छया । करोत्येष जन वत्स! सम्यग्दर्शननामक [त्रिभिर्विशेषकम्] ॥२०६॥
या त्वेषा दृश्यते वत्स! शुभवर्णा मनोहरा । इयमस्यैव सद्भार्या, सुदृष्टिर्नाम विश्रुता ॥२०७॥
इय हि जैनलोकाना, सन्मार्गे वीर्यशालिनी । चित्तस्थैर्यकरी ज्ञेया, विधिना पर्युपासिता ॥२०८॥
एव च स्थिते–योऽसौ निवेदितस्तुभ्य, कुदृष्टिसहित पुरा । विचित्रचरितस्तात! महामोहमहत्तम ॥२०९॥
तदाचारविरुद्ध हि, सर्वमस्य विचेष्टितम् । विज्ञेय जगदानन्द, सुविचारितसुन्दरम् ॥210॥
स तन्त्रयति यत्नेन, महामोहबल सदा । चारित्रधर्मराजस्य, बलमेष महत्तम ॥२११॥
सम्यग्दर्शनसज्ञस्य, तस्मादत्र व्यवस्थित । स एव शत्रु परमो, मिथ्यादर्शननामक ॥२१२॥
एव च स्थिते–त्रिरूपश्च भवत्येष, किञ्चिदासाद्य कारणम् । क्षयेण प्रतिपक्षस्य, प्रशमेनोभयेन वा ॥२१३॥

## सद्बोधाऽवगती

तच्च रूपत्रय वत्स! जायेताऽस्य स्वभावत । यद्वा सपादयत्येष, मन्त्री सद्बोधनामक ॥२१४॥
अय हि सचिवो वत्स! सद्बोधो भुवनोदरे । तन्नास्ति यन्न जानीते, पुरुषार्थप्रसाधकम् ॥२१५॥
भवद्भूतभविष्यत्सु, भावेषु भवभाविषु । विज्ञातु प्रभवत्येष, सूक्ष्मव्यवहितेषु च ॥२१६॥
किञ्चात्र बहुनोक्तेन? जगदेष चराचरम् । अनन्तद्रव्यपर्याय वीक्षते विमलेक्षण ॥२१७॥
निपुणो नीतिमार्गेषु, वत्सलश्च महीपते । चिन्तको राज्यकार्याणा, बले च विहितादर ॥२१८॥
प्रियो महत्तमस्योच्चैस्तस्य च स्थिरताकर । सकलेऽपि जगत्यत्र, सचिवो नास्त्यमूदृश ॥२१९॥

किञ्च–ज्ञानसवरणस्याय, प्रतिपक्षतया स्थित । क्षयोपशमतस्तस्य, क्षयाच्च द्विविधो मत ॥220॥
इय तु निकटे वत्स। निर्मलाङ्गी सुलोचना । मन्त्रिणोऽवगतिर्नाम, भार्याऽस्यैव वरानना ॥२२१॥
स्वरूप जीवित प्राणा, सर्वस्व वर्ततेऽनघा । इयमस्य सदा पत्नी, शरीराव्यतिरेकिणी ॥२२२॥

## पञ्चज्ञानवर्णनम्

तथा–य एते पञ्च दृश्यन्ते, त इमे पुरुषोत्तमा । अस्यैव तु सद्बोधस्य, स्वाङ्गीभूता वयस्यका ॥२२३॥
आद्योऽत्राभिनिबोधोऽय, वयस्य पुरवासिनाम् । इन्द्रियानिन्द्रियज्ञान, जनाना जनयत्यलम् ॥२२४॥
द्वितीय पुरुषो भद्र। प्रसिद्धोऽय सदागम । यस्यादेशे स्थित सर्व, पुरमेतन्न सशय ॥२२५॥
कार्याणि मन्त्रयत्येष, निखिलान्यपि भूभुजाम् । वच पाटवयुक्तोऽय, मूका शेषा मनुष्यका ॥२२६॥
यत सदागमस्याऽस्य, दृष्ट्वा वचनकौशलम् । सद्बोधोऽनेन भूपेन, मन्त्रित्वे स्थापित पुरा ॥२२७॥
अय सदागमोऽमीषा, सर्वेषा वत्स। भूभुजाम् । बहिश्च जैनलोकाना, ज्ञेय परमकारणम् ॥२२८॥
अनेन रहित वत्स। न कदाचिदिद बलम् । पुर चेद जगत्यत्र, स्वरूपेण प्रकाशते ॥२२९॥
तदेष सर्वकार्याणामुपदेष्टा सदागम । द्वितीय पुरुषो वत्स। प्रधानोऽनेन हेतुना ॥230॥
तृतीयोऽवधिनामाय, सद्बोधस्य वयस्यक । अनेकरूपविस्तारकारकोऽयमुदाहृत ॥२३१॥
क्वचिद्दीर्घ क्वचिद्ध्रस्व, क्वचित् स्तोक क्वचिद् बहु । वस्तुजात जगत्यत्र, विलोकयति लीलया ॥२३२॥
चतुर्थ पुरुषो वत्स। मन पर्यायनामक । साक्षात्करोति वीर्येण, परेषा यन्मनोगतम् ॥२३३॥
मनुष्यलोके नास्त्यत्र, चित्त तत्तात। किञ्चन । अनेन यन्न दृश्येत, धीमता भाववेदिना ॥२३४॥
पञ्चम पुरुषो वत्स। केवलो नाम विश्रुत । नि शेषज्ञेयविस्तारमेष पश्यति सर्वदा ॥२३५॥
निर्वृति नगरी यान्ति, ये जना जैनसत्पुरात् । तेषामेष प्रकृत्यैव, नायक पुरुषोत्तम ॥२३६॥
तदेष पञ्चभिर्वत्स। वयस्यै परिवारित । सद्बोधसचिवो लोके, साक्षादिव दिवाकर ॥२३७॥

## सतोषनिष्पिपासितावर्णनम्

प्रकर्षेणोदित माम। स सन्तोषमहीपति । न दर्शितस्त्वयाऽद्यापि, यत्र मेऽत्यन्तकोतुकम् ॥२३८॥
ततस्तन्मातुलेनोक्त वत्स। योऽय पुर स्थित । सयमस्य स विज्ञेय, सन्तोषो नात्र सशय ॥२३९॥
प्रकर्षेणोक्त–यस्योपरि समायाता, महामोहादिभूभुज । विक्षेपेण स सन्तोषो, नैष कि मूलनायक ॥240॥
विमर्शेनोदित वत्स। नैवाय मूलनायक । चारित्रधर्मराजस्य, पदातिरिति गृह्यताम् ॥२४१॥
शूरो नीतिपरो दक्ष, सन्धिविग्रहवेदक । तेनैष तन्त्रपालत्वे, नियुक्तो मूलभूभुजा ॥२४२॥
सपूर्णबलसामग्र्या, भ्रमतोद्दामलीलया । अनेन स्पर्शनादीनि, तानि दुष्टानि कुत्रचित् ॥२४३॥
ततोऽभिभूय तान्येष, स्वमाहात्म्येन निर्वृतौ । नयति स्म जन कञ्चिद् बलेनैषा महीभुजाम् ॥२४४॥
ततो विज्ञाय वृत्तान्तमेन ते जनवार्तया । महामोहादिभूपालाश्चलिता रणकाम्यया ॥२४५॥
ततस्तै स्वधिया वत्स। कल्पितो मूलनायक । पदातिरपि सन्तोषस्तत्रेद हन्त कारणम् ॥२४६॥
*तावन्मात्र जनो वेत्ति, यावन्मात्र किलेक्षते ।* यत सितोदरोऽपीह, कृष्ण सर्पोऽभिधीयते ॥२४७॥
अनेन स्पर्शनादीनि, निहतानीति वार्तया । अस्योपरि यथा रोषस्तेषा शेषेषु नो तथा ॥२४८॥
सन्तोषमुररीकृत्य, ततो विग्रहवाञ्छया । महामोहादयो वत्स । स्वपुरेभ्यो विनिर्गता ॥२४९॥
चित्तवृत्तिमहाटव्या, रणमेषामनेकश । सजात न च सजातो, स्फुटौ जयपराजयो ॥250॥
यत –क्वचिज्जयति, सन्तोषस्तन्त्रपालोऽरिसहतिम् । प्रभवन्ति क्वचित्तेऽपि, महामोहादिभूभुज ॥२५१॥
एवञ्च स्थिते–सदा सैन्यद्वयस्यास्य, रुषाऽन्योऽन्य जिगीषत। कालो गच्छति पद्माक्ष। न जाने कि भविष्यति? ॥२५२॥
स एष दर्शितस्तुभ्य, मया सन्तोषतन्त्रप । आख्यातश्चास्य वृत्तान्तो, यत्र तेऽत्यन्तकोतुकम् ॥२५३॥
या त्वस्य पार्श्वे पद्माक्षी, दृश्यते वत्स। बालिका । सा निष्पिपासिता नाम, भार्याऽस्यैव वरानना ॥२५४॥
शब्दरूपरसस्पर्शगन्धेषु सुधिया मन । निस्तृष्णक करोत्येषा, रागद्वेषविवर्जितम् ॥२५५॥

लाभालाभे सुखे दुःखे, सुन्दरेऽसुन्दरेऽपि च । तथाऽऽहारादिके जाते, सन्तुष्टिं जनयत्यलम् ॥२५६॥
तदेव वत्स! बुध्यस्व, निर्विकल्पेन चेतसा । चारित्रधर्मराजोऽत्र, नायक परमार्थत ॥२५७॥

## चारित्रधर्मराजादीना शुभकारिता

अस्य च–यतिधर्म सुतो ज्यायान्, गृहिधर्म कनिष्ठक । मन्त्री सद्‌वोधनामाऽय, निविष्टो राज्यचिन्तक ॥२५८॥
महत्तमस्तु विज्ञेय, सम्यग्दर्शननामक । सन्तोषरतन्त्रपालोऽयमेव वत्साऽवधारय ॥२५९॥
महामोहादय सर्वे, यथा भुवनतापका । तथैते वत्स! विज्ञेया, भुवनाह्लादकारिण ॥260॥
एते हि जगदालम्वा, एते हितविधायका । एते समस्तजन्तूना, पारमार्थिकवान्धवा ॥२६१॥
एते निरन्तससारसागरोत्तारकारका । अनन्ताह्लादसन्दोहदायका जगतो मता ॥२६२॥
चारित्रधर्मराजाद्या, सर्वेऽप्येते नरेश्वरा । सुखहेतव एवात्र, सर्वेषामपि देहिनाम् ॥२६३॥
तदेते स्वाङ्गिकास्तात! तावदित्थ मयाऽखिला । चारित्रधर्मराजस्य, वान्धवास्ते निवेदिता ॥२६४॥
ये त्वमी वेदिकाऽभ्यर्णे, वर्तन्ते मण्डपस्थिता । शुभाशयादयस्तात! तेऽप्यस्यैव पदातय ॥२६५॥
अस्यादेशेन कुर्वन्ति, सुन्दराणि सदा जने । एते कार्याणि भूपाला, निर्मिथ्यममृतोपमा ॥२६६॥
किञ्च–मनुष्या योषितो डिम्भा, ये लोका सुखहेतव । विवर्तन्ते समस्तास्ते, मध्येऽमीषा महीभुजाम् ॥२६७॥
ततश्च–असख्यातजन वत्स! पूरित भूरिभूमिपै । निःशेषमिदमास्थान, को हि वर्णयितु क्षम ? ॥२६८॥
ततो मयेद ते वत्स! समासेन निवेदितम् । गच्छाव साम्प्रत द्वारे, यदि पूर्णं कुतूहलम् ॥२६९॥
एव भवतु तेनोक्ते, विनिर्गत्य विलोकितम् । चतुरङ्ग वल ताभ्या, तदीय तच्च कीदृशम् ॥270॥

## चारित्रनृपसैन्यम्

गाम्भीर्योदार्यशौर्यादिनामभि स्यन्दनै सदा । प्रेङ्खद्‌घणघणारावपूरिताशेषदिक्पथम् ॥२७१॥
यशःसौष्ठवसौजन्यप्रश्रयादिमहागजे । विलसत्कण्ठनिर्घोषसरुद्धभुवनोदरम् ॥२७२॥
वुद्धिपाटववाग्मित्वनैपुण्यादितुरङ्गमै । महाहेषारवापूर्णसत्प्रजाकर्णकोटरम् ॥२७३॥
अचापलमनस्वित्वदाक्षिण्यादिपदातिभि । अलव्धगाधविस्तीर्णरितिमितोदधिविभ्रमम् [चतुर्भि कलापकम्] ॥२७४॥
ततश्चेवविध वीक्ष्य, चतुरङ्ग महावलम् । प्रकर्षश्चेतसा तुष्ट, प्रोवाच निजमातुलम् ॥२७५॥
यथेष्टमधुना माम! पूरित मे कुतूहलम् । यदत्र किञ्चिद्‌द्रष्टव्य, तत्सर्वं दर्शित त्वया ॥२७६॥
तथाहि–दर्शित भवचक्र मे, नानावृत्तान्तसङ्कुलम् । महामोहादिवीर्यं च, कारणेरपरापरै ॥२७७॥
विवेकपर्वतश्चाय, दर्शितो मे मनोहर । निवेदित च सल्लोके, पूर्ण सात्त्विकमानसम् ॥२७८॥
शिखर चाप्रमत्तत्व, जैन चेद महापुरम् । युक्त महात्मभिर्लोकैर्दर्शित मम सुन्दरम् ॥२७९॥
तथा चित्तसमाधानो, मण्डपो वेदिका च मे । त्वया निःस्पृहताऽऽख्याता, जीववीर्यं च विष्टरम् ॥280॥
वर्णितश्च महाराज, साक्षात्करणपूर्वकम् । प्रत्येक वर्णिता सर्वे, भूपालास्तस्य सेवका ॥२८१॥
इद च दर्शितं रम्य, चतुरङ्ग महावलम् । एव च कुर्वता माम! नास्ति तद्यन्न मे कृतम् ॥२८२॥
जनित पूतपापोऽह, कृतो वृहदनुग्रह । कृपापरीतचित्तेन, पूरिता मे मनोरथा ॥२८३॥
तथापि रमणीयेऽत्र, वस्तुमिच्छामि साम्प्रतम् । दिनानि कतिचिन्माम! लीलया जैनसत्पुरे ॥२८४॥
किञ्च–स्थितो मासद्वय यावत्, सद्विचारपरायण । पुरे तथा तथा प्राज्ञो, जायेऽह त्वत्प्रसादत ॥२८५॥
अह च परमा काष्ठा, नेयो मामेन सर्वथा । अतो जैनपुरे तावदत्र त्व वस्तुमर्हसि ॥२८६॥
ततस्तन्मातुलेनोक्त, या तवेच्छा प्रवर्तते । तामेष त्वन्मुखाकाङ्क्षी, कि भनक्ति वशो जन ? ॥२८७॥
महाप्रसाद इत्युक्त्वा, ततस्तत्रैव सत्पुरे । स्थितो मासद्वय यावत्स प्रकर्ष समातुल ॥२८८॥

## ग्रीष्मवर्णनम्

इतश्च मानवावासे, वसन्तो लङ्घितस्तदा । आदेशेन महादेव्या, प्राप्तो ग्रीष्म सुदारुण ॥२८९॥
यत्र ग्रीष्मे–जगत्कोष्ठकमध्यस्थो, लोहगोलकसन्निभ । ध्मायते चण्डवातेन, जगद्दाहकरो रवि ॥290॥

जायते पत्रशाटस्तरूणामल हीयते देहिना यत्र देहे बल,
पीयते प्राणिभिर्भूरिवा[धा मु]राजल, शुष्यते चास्यमेषा तृषाऽत्यर्गलम् ।
दह्यते तीव्रतापेन सर्वो जन खिद्यते स्वेदनिर्वेदित तन्मनो,
वान्ति वाता सतप्ता जगत्तापिन शुष्कपत्रावलीमर्मरारावविण ॥२९१॥

अपि च–भानोरिव प्रतापेन, सतुष्ट वर्धित दिनम् । स्वामिनोऽभ्युदये सर्व, सन्तोषादभिवर्धते ॥२९२॥

यत्र च विदलिता मल्लिका, विकसिता जात्यपाटला, श्यामलित कुसुमभरेण शिरीषवन, सुभगीभूताश्चन्द्रकिरणा हृदयदयिता जलाशया, मनोऽभिर्सचिता मौक्तिकहारयष्टय, अतिवल्लभानि विमलहर्म्यतलानि, प्रियतमानि चन्दनविलेपनानि, अमृतायन्ते तालवृन्तव्यजनकानि, सुखायन्ते शिशिरकिसलयकुसुमप्रस्तरा, लगन्ति बहि शरीरनिहिता अपि जनानामन्तर्मानसे चन्दनजलार्द्रा इति।

ततश्चैवविधे काले, भागिनेयमभाषत । गच्छाव साम्प्रत वत्स। स्वस्थानमिति मातुल ॥२९३॥
प्रकर्ष प्राह गमने, दारुणोऽवसरोऽधुना । तन्नाह माम। शक्नोमि, गन्तुमेवविधेऽध्वनि ॥२९४॥
ततो मासद्वय तिष्ठ, माम। सन्तापदारुणम् । येनाह शीतलीभूते, दिक्चक्रे यामि सत्वरम् ॥२९५॥
किञ्च–विचारपरयो स्थानमावयोर्गुणकारणम् । अत्र जैनपुरे माम। मा मस्था निष्प्रयोजनम् ॥२९६॥
यत.–मम स्थैर्यं भवेदेव, पुरस्यास्य गुणोत्करे । ततस्तातोऽपि जायेत, मद्गुणादत्र बद्धधी ॥२९७॥
एव भवतु तेनोक्ते, ततस्तत्रैव सत्पुरे । तिष्ठतो प्रावृडायाता, तयो सा हन्त कीदृशी ॥२९८॥

## प्रावृड्वर्णनम्

घनतुङ्गपयोधरभारधरा, लसदुज्वलविद्युदलङ्करणा । कृतसन्ततगर्जितधीररवा, दृढगोपितभास्करजाररता ॥२९९॥
रटदुद्भटदर्दुरषिङ्गनरा, चलशुभ्रबलाहकहासपरा । गिरिकोटरनृत्तशिखण्डिवरा, बहुलोकमनोहररूपधरा ॥300॥
सुसुगन्धिकदम्बपरागवहा,विटकोटिविदारणमोदसहा। इति रूपविलासलसत्कपटा,भुवनेऽत्र रराज यथा कुलटा ॥३०१॥
अथ ता तादृशी वीक्ष्य, प्रावृष हृष्टमानस । प्रकर्षो गमनोद्युक्त, प्रोवाच निजमातुलम् ॥३०२॥
गम्यतामधुना माम। त्वरित तातसन्निधौ । यतोऽमी शीतलीभूता, वर्तन्ते सुगमा पथा ॥३०३॥
विमर्शेनोदित वत्स। मैव वोच कदाचन । यतोऽधुना व्यवच्छिन्नौ, विशेषेण गमागमौ ॥३०४॥
तथाहि–सुच्छन्नगृहमध्यस्था, स्वाधीनदयिताननाः । वर्षासु धन्या गण्यन्ते, जनैर्ये न प्रवासिन ॥३०५॥
तथाहि–पश्यतु वत्स। जलपूरितमार्गेषु, पङ्कक्लिन्नेषु गच्छत । स्खलित्वा पतितानेते, हसन्ति कुटजोत्करा ॥३०६॥
निपतद्वारिधारौघहता ये यान्ति पापिन । देशान्तरेषु तान्मेघो, मारयामीति गर्जति ॥३०७॥
एव व्यवस्थिते तात। मुच्यता गमनादर । यथेयन्त स्थित काल, तिष्ठाऽत्रैव तथाऽधुना ॥३०८॥
किञ्च–गच्छन्नत्र बहु कालो, न दोषाय गुणावह । यत सोऽनुक्षण वत्स। जायते तव वृद्धये ॥३०९॥
एव भवतु तेनोक्ते, पुनर्मासचतुष्टयम् । स्थित्वा समागतौ गेहे, हृष्टौ स्वस्रीयमातुलौ ॥310॥

## विमर्शप्रकर्षयो गृहागमनम्

अथ प्रविष्टौ तौ गेहे, दत्तास्थाने शुभोदये । भार्यायुक्ते च तस्यैव, निकटस्थे विचक्षणे ॥३११॥
ततो विधाय सद्भक्त्या, प्रणाम विहिताञ्जली । तेषा पुरो निविष्टौ तौ, विनयाच्छुद्धभूतले ॥३१२॥
बलादुत्थाप्य बुद्ध्याऽसौ, विमर्श स्निग्धचेतसा । आलिङ्गित प्रयत्नेन, तद्भर्त्रा च पुन पुन ॥३१३॥
प्रकर्षोऽपि समालिङ्ग्य, स्नेहनिर्भरमानसै । निजाङ्के स्थापित सर्वै, परिपाट्याऽतिवल्लभ ॥३१४॥
आघ्रातो मूर्धदेशे च, कुशल च मुहुर्मुहु। आनन्दोदकपूर्णाक्षै, पृष्ट सर्वै समातुल ॥३१५॥
ततो यथा विनिर्गत्य, गेहाद्बाह्येषु हिण्डितौ । ततोऽन्तरङ्गदेशेषु, यथा पर्यटितौ पुन ॥३१६॥
यथा पुरद्वय दृष्ट, यथा दृष्टा महाटवी । विलोकित यथा स्थान, महामोहादिभूभुजाम् ॥३१७॥
रसनामूलशुद्धिश्च, यथा सम्यग्विनिश्चिता । यथेय वर्तते पुत्री, रागकेसरिमन्त्रिण ॥३१८॥
कुतूहलवशेनैव, भवचक्र यथा गतौ । निरीक्षित च तत्सर्वं, नानावृत्तान्तसङ्कुलम् ॥३१९॥
यथा दृष्टा महात्मानो, विवेकवरपर्वते । चारित्रधर्मराजस्य, यथा स्थान विलोकितम् ॥320॥

यथा दृष्ट स सन्तोषो, यच्च तेन विचेष्टितम् । यच्च कारणमुद्दिश्य, भूरिकालोऽतिवाहित ॥३२१॥
तदिद तेन नि शेष, विमर्शेन परिस्फुटम् । पुरो विचक्षणादीना विस्तरेण निवेदितम् सत्यपि कुत्रम् ॥३२२॥

## रसनालोलनासक्तजडचेष्टा

इतश्च मासमद्याद्यैर्लालयस्तामसो जड । रसना लोलतावाक्यर्न चेतयति किञ्चन ॥३२३॥
स तस्या लालने सक्त, कुर्वाण कर्म गर्हितम् । न पश्यति महापाप, न लज्जा न कुलक्रमम् ॥३२४॥
अन्यदा लोलतावाक्यैर्मद्यविह्वलचेतसा । महाज मारयामीति, मारित पशुपालक ॥३२५॥
ततश्च तमजारक्ष, पशुभ्रान्त्या निपातितम् । निरीक्ष्य लोलतादु राज्जडेनेद विचिन्तितम् ॥३२६॥
लालिता रसना नून, मासैर्नानाविधैर्मया । इद तु मानुष मास, नैव दत्त कदाचन ॥३२७॥
ततोऽधुना ददामीदमस्यै पश्यामि यादृश । अनेन जायते तोषो, रसनाया सुखावह ॥३२८॥
तत सस्कृत्य तद्दत्त, तेन जाता प्रमोदिता । रसना लोलता तुष्टा, सोऽपि हर्षमुपागत ॥३२९॥
भूयश्च लोलतावाक्यैरपरापरमानुषान् । निहत्य भार्यया सार्ध, खादन् जात स राक्षस ॥330॥
ततो बालजनेनापि, निन्दितो बन्धुवर्जित । लोकेन परिभूतश्च, स जात पापकर्मणा ॥३३१॥
अन्यदा लोलतायुक्तो, मनुष्याणा जिघांसया । प्रविष्टश्चोरवद्रात्रौ, गृहे शूरकुटुम्बिन ॥३३२॥
तत प्रसुप्त तत्सूनु, गृहीत्वा नि सरन् बहि । स दृष्टस्तेन शूरेण, जड क्रोधान्धचेतसा ॥३३३॥
तत कलकलाराव, कुर्वता सह बान्धवे । तेनास्फोटच विद्धोऽगौ, मारितो यातनाशतै ॥३३४॥
प्रभाते च स वृत्तान्त, सजात प्रकटो जने । तथापि किञ्चिच्छूरस्य, न कृत जडबन्धुभि ॥३३५॥
कि तर्हि? प्रत्युत तैश्चिन्तित, यदुत→
शूरेण विहित चारु, यदसौ कुलदूषण । अस्माक लाघवोत्पादी, जड पापो निपातित ॥३३६॥

## विचक्षणविचार

अमु च जडवृत्तान्त, निरीक्ष्य स विचक्षण। ततश्च चिन्तयत्येव, निर्मलीमसमानस ॥३३७॥
अये। इह लोके जडस्येद, रसनालालने फलम् । सजात परलोके तु, दुर्गति सजनिष्यति ॥३३८॥
ततोऽत्यर्थं विरक्तोऽसौ, रसनालालन प्रति । स्थितो विचक्षणस्तावत्, यावत्तो समुपागतो ॥३३९॥
ततश्च–कथिताया विमर्शेन, मूलशुद्धो सविस्तरम् । रसना त्यक्तुकामोऽसो, पितर प्रत्यभाषत ॥340॥
तात। दृष्टविपाकेय, रसना साम्प्रत जडे । दुहिता दोषपुञ्जस्य, रागकेसरिमन्त्रिण ॥३४१॥
तदेनामधुना दुष्टा, भार्यां दुष्टकुलोद्भवाम् । सर्वथा त्यक्तुमिच्छामि, ताताऽह त्वदनुज्ञया ॥३४२॥
तत शुभोदयेनोक्त→भार्येति प्रथिता जने । तवेय रसना तस्मान्नाकाण्डे त्यागमर्हति ॥३४३॥
अत क्रमेण मोक्तव्या, त्वयेय वत्स। सर्वथा ! तदत्र प्राप्तकाल ते, तदाकर्णय साम्प्रतम् ॥३४४॥
ये ते तुभ्य महात्मानो, विमर्शेन निवेदिता । विवेकपर्वतारूढा, महामोहादिसूदना ॥३४५॥
तेषा मध्ये स्थितस्येय, तदाचारेण तिष्ठत । दुष्टापि रसना वत्स। न ते किंचित्करिष्यति ॥३४६॥
तस्मादारुह्य यत्नेन, त विवेकमहागिरिम् । रसनादोषनिर्मुक्तस्तिष्ठ त्व सकुटुम्बक ॥३४७॥
ततो विचक्षणेनोक्त, तात। दूरे स पर्वत । कथ कुटुम्बसहितस्तत्राह गन्तुमुत्सहे ? ॥३४८॥
शुभोदयोऽब्रवीद्वत्स। न कार्यं भवता भयम् । विमर्शो यस्य ते बन्धुश्चिन्तामणिरिवातुल ॥३४९॥
यतोऽस्य विद्यते वत्स। विमर्शस्य वराञ्जनम् । तद्बलाद्दर्शयत्येष, तमिहैव महागिरिम् ॥350॥
प्रकर्षेणोदित तात। सत्यमेतन्न सशय । अनुभूत मयाऽप्यस्य, योगाञ्जनविजृम्भितम् ॥३५१॥
किम्बहुना? यावदेष महावीर्यं, न प्रयुङ्क्ते वराञ्जनम् । तावदेव न दृश्यन्ते, ते पर्वतपुरादय ॥३५२॥
यदा तु विमलालोकमय युङ्क्ते तदञ्जनम् । तदा सर्वत्र भासन्ते, ते पर्वतपुरादय ॥३५३॥

## विमलालोकाऽञ्जनप्रभाव

ततो विचक्षणेनोक्तो विमर्शो भद्र। दीयताम् । मह्य तदञ्जन तूर्णं, यद्यस्ति तव तादृशम्' ॥३५४॥

ततोऽनुग्रहबुद्धयैव, सादर प्रतिपादितम् । विचक्षणाय नि शेष, विमर्शेन तदञ्जनम् ॥३५५॥
ततस्तदुपयोगेन, क्षणादेव पुरःस्थितम् । विचक्षणेन यद्दृष्ट, तदिदानी निबोधत ॥३५६॥
यत्तल्लोकशताकीर्णं, पुर सात्त्विकमानसम् । यश्चासौ विमलस्तुङ्गो, विवेको नाम पर्वत ॥३५७॥
यच्च तच्छिखर रम्यमप्रमत्तत्वनामकम् । यच्चोपरिष्टात्तस्यैव, निविष्ट जैनसत्पुरम् ॥३५८॥
ये च लोका महात्मान, साधवस्तन्निवासिन । यश्च चित्तसमाधानो, मध्यस्थस्तत्र मण्डप ॥३५९॥
या च नि स्पृहता नाम, वेदिका तत्र सस्थिता । तस्याश्चोपरि यच्चारु, जीववीर्य महासनम् ॥360॥
चारित्रधर्मराजश्च, परिवारविवेष्टित । ये च तस्य गुणा शुभ्रा, ये च तेषा महीभुजाम् ॥३६१॥
तदिद भो महाराज। तदानी नरवाहन। । विचक्षणेन नि शेष, साक्षादेवावलोकितम् षड्भि कुलकम् ॥३६२॥

## विचक्षणप्रव्रज्या

ततश्च भो भो महानरेन्द्र। नरवाहन। स विचक्षण सहैव तेन शुभोदयेन पित्रा, युक्त एव तया निजचारुतया मात्रा, आलिङ्गित एव तया प्रियभार्यया बुद्ध्या, सहित एव तेन श्वशुर्येण विमर्शेन, अन्वित एव वक्ष स्थलशायिना तेन प्रकर्षेण प्रियतमतनयेन, समुपेत एव वदनकोटरवने वर्तमानया रसनाभार्यया, सर्वथा सकुटुम्बक एव केवल तामेका लोलता दासचेटी परित्यज्य निराकृत्य च परुपक्रियया सप्राप्य गुणधरनामानमाचार्य प्रव्राजितस्तेन स्थितस्तेषा जैनपुरनिवासिना भगवता साधूना मध्ये किलाऽह प्रव्रजित इति मन्यमान, तत शिक्षित समस्तोऽपि तेन तेषामाचारो, निषेवित परमभक्त्या, विनि[स मु]र्जिता सा रसना सर्वथा विहिताऽत्यर्थमकिञ्चित्करी । तत स्थापितस्तेन गुरुणा निजपदे स विचक्षण, स चान्यत्रापि दृश्यमान परमार्थतस्तत्रैव विवेकगिरिशिखरवासिनि जैनपुरे द्रष्टव्य ।

## आचार्यस्य नम्रता

यतो भो महाराज नरवाहन। स विचक्षणोऽहमेव विज्ञेय, एते च ते महात्मान साधवो मन्तव्या, ततो महाराज। यद्भवद्भिरभ्यधायि यदुत→कि ते वैराग्यकारणम् ? इति, तदिद मम वैराग्यकारण, इय चेदृशी मदीया प्रव्रज्या इति । एव च व्यवस्थिते→

भार्यादोषेण यो नाम, प्रव्रज्या समुपागत । न च साऽपि परित्यक्ता, सर्वथा येन पापिनी ॥३६३॥
यश्च पालयतेऽद्यापि, कुटुम्ब तदवस्थितम् । तस्य मे कीदृशी नाम, प्रव्रज्या भूप। कथ्यताम्? ॥३६४॥
तथापि ते महाराज। यन्ममोपरि गौरवम् । तर्कयन्नपि तत्राह, न जाने बत कारणम् ॥३६५॥
यत.–सदोषेऽपि गुणारोपी, जगदाह्लादकारक । किमेषोऽचिन्त्यसौन्दर्य, सज्जनप्रकृतेर्गुण ॥३६६॥
तथाहि–नूनमेषा सता दृष्टिश्चापयष्टिरपूर्विका । अकारणेऽपि या नित्य, गुणारोपपरायणा ॥३६७॥
कि वा भुवनवन्द्यस्य, गुणोऽय हतविद्विष । अस्यैव जैनलिङ्गस्य, यत्रैते सस्थिता वयम् ॥३६८॥
तथाहि–सुरेन्द्रा अपि वन्दन्ते, त भक्तिभरपूरिता । करस्थ यस्य पश्यन्ति,जैनेन्द्र लिङ्गमञ्जसा ॥३६९॥
किञ्चान्यत्कारण किञ्चिद्गृहस्थाचारधारक । येनेदृशोऽपि ते राजन् । अह दुष्करकारक· ॥370॥

एव च वदति भगवति विगलितमदचेतसि विचक्षणसूरौ नरवाहनराजेन चिन्तित अहो निजचरितकथनेन भगवता जनितो मे मोहविलय, अहो भगवता वचनविन्यास, अहो विवेकित्व, अहो मय्यनुग्रहपरता, अहो दृष्टपरमार्थतेति । विज्ञातश्च मया सर्वस्यास्य भगवद्भाषितस्य गर्भार्थ ।

## आचार्यप्रेरितनृपस्य दीक्षाभावना

ततोऽभिहितमनेन→भदन्त। यादृश लोके, सपन्न ते कुटुम्बकम् । अधन्यारतादृश नून, प्राप्नुवन्ति न मादृशा ॥३७१॥
इद च पोषयन्नत्र, जैनलिङ्गे च सस्थित । भदन्त। भगवानेव, गृहस्थो भवतीदृश ॥३७२॥
अन्यच्च–कृताऽकिञ्चित्करी येन, रसनाऽपि महात्मना । अत्यन्तदुर्जया लोके, लोलता च निराकृता ॥३७३॥
महामोहादिवर्ग च, जित्वा यो जैनसत्पुरे । स्थितोऽसि साधुमध्यस्थ, कुटुम्वसहितो मुने । ॥३७४॥
स चेत्त्व न भवस्यत्र, हन्त दुष्करकारक । कीदृशास्ते भवन्त्यन्ये, ब्रूहि दुष्करकारका ? ॥३७५॥
·यश्चाय तव सपन्नो, वृत्तान्तो जगदद्भुत । एतद्वृत्तान्तयुक्ता ये, ते वन्द्या प्रतिभान्ति मे ॥३७६॥

तद्भदन्त! किमेतेषा, साधूनामयमीदृश । सपन्न एव वृत्तान्त, कि वा नेति निवेद्यताम् ॥३७७॥
ततो विचक्षणेनोक्त, सर्वेषामयमीदृश । साधूना भूप! सपन्नो, वृत्तान्तो नास्ति सशय ॥३७८॥
अन्यच्च–सपद्यते तवापीह, वृत्तान्तोऽय नरेश्वर! । यदि त्व कुरुषे सद्यो, यादृश मादृशे कृतम् ॥३७९॥
दर्शयामि क्षणेनैव, त विवेकमहागिरिम् । ततस्तज्जायते तेऽत्र, स्वयमेव कुटुम्बकम् ॥380॥
ततश्च–महामोहादिवर्गं च, स्वयमेव विजेष्यसि । लोलता च निराकृत्य, रस्यसे साधुमध्यग ॥३८१॥
ततो भगवतो वाक्यमाकर्ण्येद मनोरमम् । स्वचित्ते चिन्तयत्येव, नरवाहनपार्थिव ॥३८२॥
अहो भगवता प्रोक्तमिदमत्र परिस्फुटम् । य *एवोत्सहते दोर्भ्यां, तस्यैव प्रभुता करे* ॥३८३॥
ततो भागवती दीक्षां, गृहाण किल भूपते । तव सपद्यते येन, सपन्न यत्तु मादृशाम् ॥३८४॥
अहो भगवता चारु, ममादिष्ट महात्मना । गृह्णाम्येवाधुना दीक्षामिति चित्तेऽवधारितम् ॥३८५॥
ततो विघटितानिष्टदुष्टपापाणुसञ्चय । अवोचत गुरु नत्वा, स राजा नरवाहन ॥३८६॥
भदन्त! यदि या मे काचिद्विद्यते योग्यतेदृशी । तत करोम्यह तादृक्, कृत यादृग् भवादृशै ॥३८७॥
कि चानेन!– दीयता जिनदीक्षा मे, क्रियता मदनुग्रह । ततो युष्मत्प्रसादेन, सर्वं चारु भविष्यति ॥३८८॥
सूरिणाऽभिहित भूप! सुन्दरस्ते विनिश्चय । युक्तमेतद्धि भव्याना, कृत्यमेतद्भवादृशाम् ॥३८९॥
नून मदीयवाक्यस्य, सद्भावार्थोऽवधारित । सजातस्तेन ते भूप! महोत्साहोऽयमीदृश ॥390॥
तथाहि–तादृक्षु वल्गमानेषु, महामोहादिशत्रुषु । को वा नाश्रयते दुर्गं, सुक्षेम जैनसत्पुरम् ? ॥३९१॥
निश्चिन्तो गृहवासेऽत्र, को वा दुखौघपूरिते? । आसीत विदिते जैने, सत्पुरे सुखसागरे ॥३९२॥
अल कालविलम्बेन, राजन्! अत्र महाभये । एव ते ज्ञाततत्त्वस्य, युक्तमत्र प्रवेशनम् ॥३९३॥
ततो भागवत वाक्य, श्रुत्वा सतुष्टचेतसा । तदेतच्चिन्तित राज्ञा, दीक्षाग्रहणकाम्यया ॥३९४॥
राज्ये क स्थापयामीति, को वा योग्योऽस्य मत्सुत ? । ततो विस्फारिता दृष्टिर्नीलाब्जदललासिनी ॥३९५॥
अथागृहीतसङ्केते! तदाऽह रिपुदारण । तथा निषण्णस्तत्रैव, निर्भाग्यो रोररूपक ॥३९६॥

## रिपुदारणस्य राज्याभिषेक

इतश्च–कृशोऽप्यसौ शरीरेण, तथा तातस्य पश्यत । पुण्योदयो वयस्यो मे, मनाक् सस्फुरता गत ॥३९७॥
ततश्च–दृष्टो निरीक्ष्यमाणेन, तातेनामलचेतसा । ततो मा वीक्ष्य तातस्य, पुन प्रत्यागत मन ॥३९८॥
चिन्तित च ततस्तेन, स एष रिपुदारण । मया बहिष्कृतो गेहात्तपस्वी शोच्यता गत ॥३९९॥
हा हा मयेद नो चारु, कृत यत्सुतभर्त्सनम् । *विषवृक्षोऽपि सवर्ध्य, स्वय छेत्तुमसाम्प्रतम्* ॥400॥
तदिद प्राप्तकाल मे, तथेद जनकोचितम् । इदमेव सता युक्तमिद दुष्कृतशोधनम् ॥४०१॥
यदुत–एन राज्येऽभिषिञ्चामि, सपूज्य रिपुदारणम् । ततश्च कृतकृत्योऽह, दीक्षा गृह्णामि निर्मलाम् ॥४०२॥
भद्रेऽगृहीतसङ्केते । तथाऽह दोषपुञ्जक । तातस्य तादृश चित्त, तत्रेद हन्त कारणम् ॥४०३॥
नवनीतसम मन्ये, सुकुमार सता मन । तत्पश्चात्तापसम्पर्काद्, द्रवत्येव न सशय ॥४०४॥
आत्मा स्फटिकशुद्धोऽपि, सदोष प्रतिभासते । परस्तु दोषपुञ्जोऽपि, निर्मलोऽमलचेतसाम् ॥४०५॥
परोपकारसाराणा, कारणेऽपि च निष्ठुरम् । कृत कर्म करोत्येव, पश्चात्ताप महाधियाम् ॥४०६॥
ततश्चाहूय तातेन, निजोत्सङ्गे निवेशित । तदाऽह प्रश्नितश्चेत्थ, सूरिर्गद्गदभाषिणा ॥४०७॥
भदन्त! विदितस्तावन्नूनमेष भवादृशाम् । ज्ञानालोकवता लोके, यादृशो रिपुदारण ॥४०८॥
तदस्य सत्कुले जन्म, सामग्रीय मनोहरा । सजाता कि पुनर्जात, तादृश चरित पुरा? ॥४०९॥

## मृदुतासत्यताप्राप्तौ शैलराजमृषावादसगत्यागसभव

सूरिणाऽभिहित भूप! न दोषोऽस्य तपस्विन! शैलराजमृषावादौ, तस्य सर्वस्य कारणम् ॥410॥
तातेनोक्त–अनर्थसार्थहेतुभ्या, भदन्तेह कदा पुन । आभ्या पापवयस्याभ्या, वियोगोऽस्य भविष्यति ॥४११॥
सूरिराह महाराज । वियोगोऽद्यापि दुर्लभ! शैलराजमृषावादौ, यतोऽस्यात्यन्तवल्लभौ ॥४१२॥

कारणेन पुनर्येन, वियोगोऽस्य भविष्यति । भूरिकाले गते तत्ते, सप्रत्येव निवेदये ॥४१३॥
शुद्धाभिसन्धिर्विख्यातो, नगरे शुभ्रमानसे । राजाऽस्ति तस्य द्वे भार्ये, वरतावर्यते किल ॥४१४॥
मृदुतासत्यते नाम, तस्य द्वे कन्यके शुभे । विद्येते भुवनानन्दकारिके चारुदर्शने ॥४१५॥
साक्षादमृतरूपे ते, ते सर्वसुखदायिके । अत्यन्तदुर्लभे भूप। मृदुतासत्यते जनै ॥४१६॥
एवञ्च स्थिते→कदाचिदेष ते कन्ये, लप्स्यते रिपुदारण । तल्लाभे च वयस्याभ्यामाभ्यामेष वियोक्ष्यते ॥४१७॥
यत.–गुणसन्दोहभूते ते, तथेमौ दोषपुञ्जकौ । तस्मात्ताभ्यां सहावस्था, नानयोर्भूप। पापयो ॥४१८॥
तत. प्रयोजनस्यास्य, कश्चिदन्यो विचिन्तक । यत्तु तेऽभिमत भूप। तदेवाचर साम्प्रतम् ॥४१९॥
तत्श्रुत्वाऽचिन्तयद्राजा, स तदा नरवाहन । अहो कष्टमहो कष्ट, सूनोर्मम तपस्विन ॥420॥
यस्येदृशौ रिपू नित्य, पार्श्वस्थौ दु खदायिनौ । अहो वराको नैवासौ, यथार्थो रिपुदारण ॥४२१॥
तत· कि क्रियतामत्र? नैवास्त्यस्य प्रतिक्रिया । त्यक्तसङ्गोऽधुनाऽह तत्करोमि हितमात्मने ॥४२२॥
ततोऽभिषिच्य मा राज्ये, कृत्वा सर्वं यथोचितम् । विचक्षणगुरो पार्श्वे, निष्क्रान्तो नरवाहन ॥४२३॥
ततश्च–विवेकशिखरस्थोऽपि, स विचक्षणसूरिणा । सार्धं बाह्येषु देशेषु, विजहार महामति ॥४२४॥

## तपनचक्र्यागमे रिपुदारणस्य गर्वचेष्टा

ममाऽपि राज्ये सपन्ने, लब्धावसरसौष्ठवौ । शैलराजमृषावादौ, नितरामभिवर्धितौ ॥४२५॥
तृणतुल्य जगत्सर्वं, पश्यामि सुतरा तत । जलगण्डूषसकाशमनृत प्रतिभाति मे ॥४२६॥
एवं च–षिङ्गैरुत्प्रास्यमानस्य, निन्द्यमानस्य पण्डितै । तुष्टस्य धूर्तवचनैरलीकैश्चाटुकर्मभि ॥४२७॥
पुण्योदयस्य माहात्म्याद्राज्य पालयतो मम। गतानि कतिचिद्भद्रे। वर्षाणि किल लीलया ॥४२८॥
इतश्चोग्रप्रतापाज्ञ, सार्वभौमो द्विषतप । चक्रवर्ती तदा लोके, तपनो नाम भूपति ॥४२९॥
स सर्वबलसामग्र्या, महीदर्शनलीलया । भ्रमस्तत्र समायात, पुरे सिद्धार्थनामके ॥430॥
ततो विदिततद्वार्तैरह मन्त्रिमहत्तमै । हितकारितया प्रोक्तो, विज्ञातनृपनीतिभि ॥४३१॥
यदुत–चक्रवर्ती जगज्ज्येष्ठस्तपनोऽय महीपति । तदस्य क्रियता देव। गत्वा सन्मानपूजनम् ॥४३२॥
पूज्योऽय सर्वभूपानामर्चितस्तव पूर्वजै । विशेषतो गृहायात, साम्प्रत मानमर्हति ॥४३३॥
अह तु शैलराजेन, विधुरीकृतचेतन । आध्मातस्तब्धसर्वाङ्गिरतानाभाषे तदेदृशम् ॥४३४॥
यदुत–अरे विमूढा। को नाम, तपनोऽय ममाग्रत ? । येनास्य पूजन कुर्यामह न पुनरेष मे ॥४३५॥

तदाकर्ण्य मन्त्रिमहत्तमैरुक्त→देव। मा मैव वदतु देव, अस्य हि पूजनमकुर्वता देवेन लङ्घित पूर्वपुरुषक्रम, परित्यक्ता राजनीति, प्रलय नीता प्रकृतय, समुज्झित राज्यसुख, परिहापितो विनय, अपकर्णितमस्मद्वचन भवति, तन्नैव वदितुमर्हति देव, क्रियतामस्माकमनुरोधेन तपनराजस्याभ्युद्गमन देवेनेति वदन्त पतिता सर्वेऽपि मम चरणयो । ततो मृदूभूतो मनाङ् मे शैलराजीयहृदयावलेपनावष्टम्भ, केवल सज्ञितोऽह मृषावादेन । ततो मयाऽभिहित→न ममाऽत्र क्षणे चित्तोत्साह, तद् गच्छत यूय, कुरुत यथोचित, अह तु पश्चादागमिष्यामि, दत्तास्थाने राजनि प्रवेक्ष्यामीति । ततो यदाज्ञापयति देव इति वदन्तो निर्गतास्तपनाभिमुख मन्त्रिमहत्तमा राजलोकश्च, सन्ति च तस्य तपननृपतेर्विविधदेशभाषावेषवर्णस्वरभेदविज्ञानान्तर्धानविज्ञातारो बहवश्चरविशेषा, तत केनचिच्चरेण विदितोऽय वृत्तान्तो निवेदितस्तपनाय ।

## रिपुदारणादेशे तपनस्य स्वस्थता

इतश्च मन्त्रिमहत्तमैर्विहिता तपनराजस्य प्रतिपत्तिरुपस्थापितानि महार्हप्राभृतानि समावर्जित हृदय, दत्त चास्थान तपननरेन्द्रेरण, पृष्टा रिपुदारणवार्ता । मन्त्रिमहत्तमैरुक्त→देव। देवपादप्रसादेन कुशली रिपुदारण, समागच्छति चैष देवपादमूलमिति । ततो दत्ता ममाह्वायका, विजृम्भितौ शैलराजमृषावादो, ततस्ते मयाऽभिहिता यदुत→
अरे वदत तान् गत्वा, सर्वान्मन्त्रिमहत्तमान् । यथा–केनात्र प्रहिता यूय, दुरात्मानो नराधमा ॥४३६॥

ततो मया नागन्तव्यमेव, तूर्णमागच्छत यूयं, इतरथा नास्ति भवता जी[illegible] । तदाकर्ण्य गतास्तत्समीपमाह्वायका, निवेदित मन्त्रिमहत्तमाना मदीयवचन, ततस्ते तत्रास्थाने सर्वे लोका सत्रासा [illegible] परस्पराभिमुखमीक्षमाणा

अहो रिपुदारणस्य मर्यादेति चिन्तयन्त किमधुना कर्तव्यमिति विमूढा सर्वेऽपि मदीयमन्त्रिमहत्तमा लक्षितास्तपननरेन्द्रेण। ततोऽभिहितमनेन→भो भो लोका। धीरा भवत, मा भैपुर्न दोषोऽय भवता प्रतीत मे रिपुदारणस्य शील, ततोऽह स्वयमेव तेन भलिष्यामि, केवल भवद्भिरवस्तुनिर्बन्धपरैर्न भाव्य, मोक्तव्यस्तस्योपरि स्वामिबहुमान, नोचितोऽसौ राजलक्ष्म्या न योग्यो युष्मद्विधपदातीनाम् ।

तथाहि—शुभ्ररूपाणा, रताना शुद्धमानसे। न जातु राजहसाना, काको भवति नायक ॥४३७॥

तन्मुञ्चत सर्वथा तस्योपरि स्नेहभाव, ततो मयि विरक्तत्वात्तैपामभिहित सर्वैरपि—यदाज्ञापयति देव इति ।

### योगेश्वरकृतरिपुदारणदुरवस्था

ततोऽभिहितस्तपनराजेन योगेश्वरनामा तन्त्रवादी कर्ण, यदुत→गत्वा तस्येदमिद कुरुष्वेति । योगेश्वरेणोक्त यदाज्ञापयति देव, तत समागतो मत्समीपे सह भूरिराजपुरुपैर्योगेश्वर, दृष्टोऽह कृतावष्टम्भ शैलराजन, समालिङ्गितो मृषावादेन, परिवेष्टितश्चोत्प्रासनपरैर्बहिरङ्गै पिङ्गलोके । तत पुरत स्थित्वा तेन योगेश्वरेण तन्त्रवादिना प्रहतोऽह मुखे योगचूर्णमुष्ट्या, ततोऽचिन्त्यतया मणिमन्त्रौषधीना प्रभावस्य तस्मिन्नेव क्षणे सजातो मे प्रकृतिविपर्यय, सपन्न शून्यमिव हृदय, प्रतिभान्ति विपरीता इवेन्द्रियार्था, क्षिप्त इव महागह्वरे न जानाम्यात्मस्वरूप, तपनसत्कोऽय योगेश्वर इति भीतो मदीय परिवार, स्थित किकर्तव्यतामूढो, मोहितश्च तेन योगशक्त्या ।

ततो विहितभृकुटिना→आ पाप। दुरात्मन्। नागच्छसि त्व देवपादमूलमिति वदता ताडितोऽह वेत्रलतया योगेश्वरेण सपन्न मे भय गतो दैन्य पतितस्तच्चरणयो । अत्रान्तरे नष्टोऽसौ मद्भयस्य पुण्योदय, तिरोभूतौ शैलराजमृषावादौ, तत सज्ञिता योगेश्वरेणात्ममनुष्यका, ततोऽह क्षणेनैव सजातोन्मादो वेदयमानस्तीव्रमन्तस्ताप विहितस्तै पुरुपै यथाजात, कृत पञ्चजटो, विलिप्तो भूत्या, चर्चितो मषि[माप मु]पुण्ड्रके, प्रवृत्तास्ते तालारव कर्तु समवतारितोऽह रासमध्ये । ततो मा नाटयन्त प्रारब्धास्ते मनुष्यास्त्रितालक रास दातु, कथम्?→

यो हि गर्वमविवेकभरेण करिष्यते, बाधक च जगतामनृत च वदिष्यते ।

नूनमत्र भव एव स तीव्रविडम्बना, प्राप्नुवीत निजपापभरेण भृश जन ध्रुवक ॥४३८॥

एव च सोल्लासमुद्गायन्तस्ते वल्गमाना कुण्डकमध्ये मा कृत्वा विजृम्भितु प्रवृत्ता, ततोऽह पतामि तेपा प्रत्येक पादेपु, नृत्यामि हास्यकर जनाना, समुल्लगामि तेपूल्लसमानेपु, ददामि च ताला, ततस्तैरभिहितम्—

पश्यतेह भव एव जना कुतूहल, शैलराजवरमित्रविलासकृत फलम् ।

य पुरैप गुरुदेवगणानपि नो नत, सोऽद्य दासचरणेपु नतो रिपुदारण ॥४३९॥

पुनर्ध्रुवक—'यो हि गर्वमविवेकभरेण करिष्यत इत्यादि । ततो ममापि मुख स्फुटित्वेदमागत यदुत→

शैलराजवशवर्तितया निखिले जने, हिण्डितोऽहमनृतेन वृथा किल पण्डित ।

मारिता च जननी हि तथा नरसुन्दरी, तेन पापचरितस्य ममात्र विडम्बनम् ॥440॥

पुनर्ध्रुवक—'यो हि गर्वमविवेकभरेण करिष्यत' इत्यादि ।

ततो रासदायका प्रोक्ता विदितपूर्ववृत्तान्तेन योगेश्वरेण→अरे रे एव गायत, इद च कुरुत

योऽत्र जन्ममतिदायिगुरूनवमन्यते, सोऽत्र दासचरणाग्रतलैरपि हन्यते ।

यस्त्वलीकवचनेन जनानुपतापयेत्, तस्य तपननृप इत्युचितानि विधापयेत् ॥४४१॥

पुनर्ध्रुवक—'यो हि गर्वमविवेकभरेण करिष्यत इत्यादि ।

ततश्चेद गायन्तस्ते गाढ पार्ष्णिप्रहारैर्मां निर्दय चूर्णयितु प्रवृत्ता, ततो निबिडलोहपिण्डैरिव समकाल निपतद्भिरेतावद्भि पादैर्दलितं मे शरीर विमूढा गाढतर मे चेतना, तथापि ते राजपुरुषा नरकपाला इव मम कुण्डकान्निःसारमयच्छन्तस्तथैवोल्ललमाना मा बलादाखेटयन्तस्त्रितालक रास ददमाना एव प्राप्तास्तपननरेन्द्रास्थान, दर्शित तत्र विशेषतस्तत्प्रेक्षणक, प्रवृत्त प्रहसन, ईदृशस्यैव योग्योऽय दुरात्मेति सजातो जनवाद । ततो योगेश्वरेण रासकदायकमध्ये स्थित्वाऽभिहित यथा—

नो नतोऽसि पितृदेवगण न च मातर, किं हतोऽसि? रिपुदारण। पश्यसि कातरम् ।

नृत्य नृत्य विहिताह(दृ प्र)ति देवपुरोऽधुना, निपत निपत चरणेपु च सर्वमहीभुजाम् ॥४४२॥

पुनर्ध्रुवक –'यो हि गर्वमविवेकभरेण करिष्यत' इत्यादि ।

ततोऽहमुन्मादवशेन जीवितभयेन च दैन्यमुररीकृत्य नाटितोऽनेकधा, पतितोऽन्त्यजानामपि चरणेषु, सजातश्चावस्तुभूत, तपननरेन्द्रेण तु मदीय एव कनिष्ठो भ्राता कुलभूषणो नामाभिषेचित सिद्धार्थपुरे राज्ये ।

## रिपुदारणस्य भवान्तरसङ्क्रम

तो भद्रेऽगृहीतसङ्केते । तथा तैर्गाढपार्ष्णिप्रहारैर्जर्जरितशरीरस्य मे निपतितमुदरे रक्त, सजात सन्तापातिरेक, ततो जीर्णा मे सैकभववेद्या गुटिका, दत्ता च ममान्या गुटिका भवितव्यतया, तन्माहात्म्येन गतोऽह तस्या पापिष्ठनिवासाया नगर्यां महातमप्रभाभिधाने पाटके, समुत्पन्न पापिष्ठकुलपुत्रकरूप, स्थितस्तत्रैव त्रयस्त्रिशत्सागरोपमाणि कन्दुकवदुल्ललमानोऽधस्तादुपरि च वज्रकण्टकैस्तुद्यमान, तदित्थमवगाहितो मयाऽतितीव्रतरदुखभरसागर । ततस्तत्पर्यन्ते जीर्णाया पूर्वदत्तगुटिकाया दत्ता ममान्या गुटिका भवितव्यतया, तत्तेजसा समागतोऽह पञ्चाक्षपशुसंस्थाने नगरे । दर्शितस्तत्र जम्बुकाकारधारको भवितव्यतया । एव च भद्रेऽगृहीतसङ्केते। केलिपरतया तया निजभार्यया भवितव्यतया तस्या पापिष्ठनिवासाया नगर्यामुपर्युपरि स्थितेषु सप्तसु पाटकेषु तथा पञ्चाक्षपशुसस्थाने विकलाक्षनिवासे मनुजगतौ, कि बहुना? तदसव्यवहारनगर विहायापरेषु प्रायेण सर्वस्थानेषु, जीर्णाया जीर्णाया तस्यामेकभववेद्याभिधानाया कर्मपरिणाममहाराजसमर्पिताया गुटिकाया पुनरपरापरा गुटिका योजयन्त्या अरघट्टघटीयन्त्रन्यायेन भ्रामितोऽहमनन्त काल प्रतिस्थानमनन्तवारा, सर्वस्थानेषु च पर्यटतो मे जघन्या जातिर्निन्दित कुल, अत्यन्तहीन वल, गर्हित रूप, निन्द्य तपश्चरण, आजन्म दारिद्र्य सतत च मूर्खता, अलाभसन्तापदारुण याचकत्व, सकलजनानिष्टत्व च गुटिकाप्रयोगेणैव प्रकटित भवितव्यतया, तथा जिह्वोत्पाटन, तप्तताम्रपान, मूकत्व, मन्मनत्व, जिह्वोच्छेदमित्यादि च विधापितवती ।

## उपसहार

एव च वदति ससारिजीवे प्रज्ञाविशालया चिन्तित अहो मानमृषावादयोर्दारुणता, तथाहि–तद्वशवर्तिनाऽनेन ससारिजीवेन हारितो मनुष्यभव, प्राप्तास्तत्रैव नानाविडम्बना, अवगाहितोऽनन्त ससारसागरोऽनुभूतानि विविधदुखानि, प्राप्तानि गर्हितानि जात्यादीनीति ।

ससारिजीव प्राह ततोऽन्यदा दर्शितोऽह भवचक्रपुरे मनुष्यरूपतया, सजाता मे तत्र मध्यमगुणता ततस्तुष्टा ममोपरि भवितव्यता, आविर्भावितस्तया पुनरपि स सहचरो मे पुण्योदय। ततोऽभिहितमनया→आर्यपुत्र। गन्तव्य मनुजगतौ भवता वर्धमानपुरे, स्थातव्य तत्र यथासुखासिकया, अय च तवानुचर पुण्योदयो भविष्यति । मयाऽभिहित→यदाज्ञापयति देवी। ततो जीर्णाया प्राचीनगुटिकाया दत्ता पुनरेकभववेद्या सा ममापरा गुटिका भवितव्यतयेति ।

भवगहनमनन्त पर्यटद्भि कथञ्चिन्नरभवमतिरम्य प्राप्य भो भो मनुष्या । ।
निरुपमसुखहेतावादर सविधेयो, न पुनरिह भवद्भिर्मानजिह्वाऽनृतेषु ॥४४३॥
इतरथा बहुदुखशतैर्हता, मनुजभूमिषु लब्धविडम्बना । मदरसानृतगृद्धिपरायणा, ननु भविष्यथ दुर्गतिगामुका ॥४४४॥
एतन्निवेदितमिह प्रकट मया भो।, मध्यस्थभावमवलम्ब्य विशुद्धचित्ता ।
मानानृते रसनया सहसविहाय, तस्माज्जिनेन्द्रमतलम्पटता कुरुध्वम् ॥445॥

इति श्रीमत् सिद्धर्षिसाधुविरचिताया
उपमितिभवप्रपञ्चाया कथाया मानमृषावाद
रसनेन्द्रियविपाकवर्णनस्तुरीय प्रस्ताव समाप्त ॥४॥

समाप्तोऽय चतुप्रस्तावात्मक प्रथमो विभाग
उपमितिपूर्वार्द्ध

इति तपागच्छगगनदिनमणीना आचार्यभगवता श्रीमता विजय भुवनभानु सूरीश्वराणा तत्प्रशिष्य मुनिप्रवर श्री वरबोधिविजयाना च चरणरजो लोलुपेन मुनि विमलबोधिविजयेन मुनिप्रवरश्री अजितशेखर विजयाना मार्गदर्शनेन सशोधित सपादितश्च उपमितिपूर्वार्द्ध ग्रन्थ

जयन्तु वीतरागा
जयन्तु पूज्यपादा गुरुदेवा

परिशिष्ट

# श्रीसिद्धर्षिसूरिप्रबन्धः ।

श्रीसिद्धर्षि श्रियो देयाद्धियामध्यामधामभू । निर्ग्रन्थग्रन्थतामापुर्यद्ग्रन्था साम्प्रत भुवि ॥१॥
श्रीसिद्धर्षिप्रभो पान्तु, वाच परिपचेलिमा । अनाद्यविद्यासस्कारा, यदुपास्तेर्भिदेलिमा ॥२॥
सुप्रभु पूर्वजो यस्य, सुप्रभ प्रतिभावताम् । बन्धुर्बन्धुरभाग्यश्रीर्यस्य माघ कवीश्वर ॥३॥
चरित कीर्त्तयिष्यामि, तस्य त्रस्यज्जडाशयम् । भूभृच्चक्रचमत्कारि, वारिताखिलकल्मषम् ॥४॥
अजर्जरश्रिया धाम, वेषालक्ष्यजरज्जर । अस्ति गुर्जरदेशोऽन्यसज्जराजन्यदुर्जर ॥५॥
तत्र श्रीमालमित्यस्ति, पुर मुखमिव क्षिते । चैत्योपरिस्था कुभालिर्यत्र चूडामणीयते ॥६॥
प्रासादा यत्र दृश्यन्ते, मत्तवारणराजिता । राजमार्गाश्च शोभन्ते, मत्तवारणराजिता ॥७॥
जैनालयाश्च सन्त्यत्र, नव धूपगम श्रिता । महर्षयश्च नि सगा, न बन्धूपगम श्रिता ॥८॥
तत्रास्ति हास्तिकाश्वीयापहस्तिततरिपुव्रज । नृप श्रीमर्मलाताख्य , शत्रुमर्मभिदाक्षम ॥९॥
तस्य सुप्रभदेवोऽस्ति, मन्त्री मित्र जगत्यपि । सर्वव्यापारमुद्राभृन्मुद्राकृद्दुर्जनाननो ॥10॥
देवार्योशनसौ यस्य, नीतिरीतिमुदीक्ष्य तौ । अवलम्ब्य स्थितौ विष्णुपद कर्तुं तप किल ॥११॥
तस्य पुत्रावुभावसाविव विश्वभरक्षमौ । आद्यो दत्त स्फुरद्वृत्तो, द्वितीयश्च शुभङ्कर ॥१२॥
दत्तवित्तोऽनुजीविभ्यो, दत्तचित्तसुधर्मधी । अप्रवृत्त कुकृत्येषु, तत्र सुत्रामवत् श्रिया ॥१३॥
हर्म्यकोटिस्फुरत्कोटिध्वजजालान्तरस्थिता । जलजन्मतयेव श्रीर्यस्मादासीदनिर्गमा ॥१४॥
तस्य श्रीभोजभूपालबालमित्र कृतीश्वर । श्रीमाघो नन्दनो ब्राह्मीस्यन्दन शीलचन्दन ॥१५॥
ऐदयुगीनलोकस्य, सारसारस्वतायितम् । शिशुपालवध काव्यं, प्रशस्तिर्यस्य शाश्वती ॥१६॥
श्रीमाघोऽस्ताघधी श्लाघ्य , प्रशस्य कस्य नाभवत् । चित्तजाड्यहरा यस्य, काव्यगङ्गोर्मिविप्रुष ? ॥१७॥
तथा शुभङ्करश्रेष्ठी, विश्वविश्वप्रियङ्कर । यस्य दानाद्भुतैर्गीतैर्हर्यश्वो हर्षभूरभूत् ॥१८॥
तस्याभूद्गेहिनी लक्ष्मीर्लक्ष्मीर्लक्ष्मीपतेरिव । यया सत्यापिता सत्य , सीताद्या विश्वविश्रुता ॥१९॥
नन्दनो नन्दनोत्तस , कल्पद्रुम इवापर । यथेच्छादानतोऽर्थिभ्य , प्रथित सिद्धनामत ॥20॥
अनुरूपकुला कन्या, धन्या पित्रा विवाहित । भुङ्क्ते वैषयिक सौख्य, दोगुन्दग इवामर ॥२१॥
दुरोदरभरोदारो, दाराचारपराङ्मुख । अन्यदा सोऽभवत्कर्म, दुर्जय विदुषामपि ॥२२॥
पितृमातृगुरुस्निग्धबन्धुमित्रैर्निवारित । अपि नैव न्यवर्त्तिष्ट, दुर्वार व्यसन यत ॥२३॥
अगूढातिप्ररूढेऽस्मिन्नहर्निशमसौ वश । तदेकचित्तधूर्त्ताना, सदाचारादभूद् बहि ॥२४॥
सपिपासाशनायातिशीतोष्णाच्च विमर्शत । योगीव लीनचित्तोऽत्र, व्यत्रस्यत्साधुवाक्यत ॥२५॥
निशीथातिक्रमे रात्रावपि स्वकगृहागमी । वध्वा प्रतीक्ष्य एकस्यास्तया नित्य प्रतीक्ष्यते ॥२६॥
अन्यदा रात्रिजागर्यानिर्यातवपुरुद्यमाम् । गृहव्यापारकृत्येषु, विलीनाङ्गस्थिति तत ॥२७॥
ईदृग्ज्ञातेयसम्बन्धवशकर्कशवाग्भरम् । श्वश्रूरश्रूणि मुञ्चन्ती, वधू प्राह सगद्गदम् युग्मम् ॥२८॥
मयि सत्या पराभूति, कस्ते कुर्यात्तत स्वयम् । खिद्यसे कुविकल्पैस्त्व, गृहकर्मभरालसा ॥२९॥
श्वशुरोऽपि च ते व्यग्रो,यदा राजकुलादिह । आगन्ता च ततो देवावसरादावसज्जिते ॥30॥
मामेवाक्रोक्ष्यति त्व तत्तथ्य मम निवेदय । यथा द्राग्भवदीयार्त्तिप्रतीकार करोम्यहम् ॥३१॥
सा न किञ्चिदिति प्रोच्य, श्वश्रूनिर्बन्धतोऽवदत् । युष्मत्पुत्रोऽर्द्धरात्रातिक्रमेऽभ्येति करोमि किम्? ॥३२॥
श्रुत्वेत्याह तदा श्वश्रू , किं नाग्रेऽजल्पि मे पुर । सुत स्व बोधयिष्यामि, वचनै कर्कशप्रियै ॥३३॥
अद्य स्वपिहि वत्से। त्व, निश्चिन्ताऽह तु जागरम् । कुर्वे सर्वं भलिष्यामि, नात्र कार्याऽधृतिस्त्वया ॥३४॥

